योग[illegible]ग्रन्थमाला

(३)

# तन्त्रसंग्रहः

[ प्रथमो भागः ]




सम्पादकः

**म० म० श्रीगोपीनाथकविराजमहोदयः**

वाराणसेय-संस्कृत-विश्वविद्यालयः

वै० सं० २०२६

YOGATANTRA-GRANTHAMĀLĀ
*Vol. III*

**General Editor**
BADARINATH SHUKLA
Director, Research Institute,
Varanaseya Sanskrit Vishvavidyalaya,
Varanasi.




# TANTRASANGRAHA

**[ Part I ]**

VIRŪPĀKSAPAÑCĀŚIKĀ, SAMBAPĀÑCĀŚIKĀ,
& TRIPURĀMAHIMNASTOTRA with Commentries,
SPANDAPRADĪPIKĀ, ANUBHAVASŪTRA
& VĀTULAŚUDDHĀKHYATANTRA

Edited by
M. M. GOPINATHA KAVIRAJA
Head of the Dept. of Yogatantra
Varanaseya Sanskrit Vishvavidyalaya, Varanasi

VARANASI
1970

# योगतन्त्र-ग्रन्थमाला
(३)

प्रधानसम्पादकः
बदरीनाथशुक्लः
सञ्चालकः
अनुसन्धानसंस्थानम्
वाराणसेयसंस्कृतविश्वविद्यालयः, वाराणसी ।


# तन्त्रसंग्रहः

[ प्रथमो भागः ]

सवृत्तिका विरूपाक्षपञ्चाशिका, सटीका साम्बपञ्चाशिका,
सव्याख्यं त्रिपुरामहिमस्तोत्रम् , स्पन्दप्रदीपिका, अनुभवसूत्रम्,
वातुलशुद्धाख्यतन्त्रं च


सम्पादकः
**म० म० गोपीनाथकविराजमहोदयः**
योगतन्त्रविभागाध्यक्षः
वाराणसेयसंस्कृतविश्वविद्यालयः, वाराणसी ।






वाराणस्याम्

२०२७ विक्रमसंवत्सरे ] १८९२ तमे शकाब्दे [ १९७० क्रीस्ताब्दे

# आद्यमावेदनम्

महामहोपाध्यायपण्डितप्रवरश्रीगोपीनाथकविराजमहोदयानामाध्यक्ष्ये प्रवर्तमानस्य योगतन्त्रविभागस्य स्तुत्येन प्रयासेन सङ्कलनसम्पादनाभ्यां प्रकाशनं नीयमानान् षडागमग्रन्थान् प्रस्तुतसंग्रहात्मना तन्त्रविद्याविपश्चितां पुरत उपहरतो मे मानसं निरतिशयानन्दसन्दोहेन सम्पूर्यमाणमास्ते, तत्र संग्रहान्तर्गतग्रन्थानामध्ययने विद्वज्जनानां निष्कम्पप्रवर्तनमभिलक्ष्य क्रमेण कश्चन संक्षिप्तो विषयपरिचयस्तेषामत्रोपनिबध्यते।

## विरूपाक्षपञ्चाशिका

'विरूपाक्षपञ्चाशिका' शब्दो विरूपाक्षस्य पञ्चाशिकेति व्युत्पत्त्या पञ्चाशिकाशब्देन तन्नामकं शास्त्रं विरूपाक्षशब्देन तत्कर्तारं च बोधयति, विरूपाक्षो हि परमशिवभट्टारकस्य विश्वानुग्रहसम्पिपादयिषामूलको विरूपाक्षनाथपादनामाऽवतारः। स हि दिविषदां नाथस्यागमविद्यारहस्यविबोधनाय समस्तसंवित्तिसिद्धान्तार्थभूतं पञ्चाशिकानामकं शास्त्रं रचयामास, तच्च शास्त्रं स्कन्धचतुष्टये विततम्।

प्रथमे स्कन्धे 'विमतिपदमङ्ग सर्वम्' इत्याद्यारभ्य 'ईश्वरता कर्तृत्वं स्वतन्त्रता' इत्याद्यन्ताः सप्त श्लोकाः सन्ति। एभिः श्लोकैः शरीरबहिर्भावेन प्रतीयमानस्य अनाश्रितादिभूम्यन्तस्य सम्पूर्णविश्वस्य परमशिवस्य परमात्मनो जीवात्मनश्च शरीरत्वमनेकाभिर्युक्तिभिरुपपादितम्।

द्वितीयस्कन्धे 'प्रत्यवमर्शात्मासौ चितिः' इत्याद्युपक्रम्य 'शक्तिर्माया प्रकृतिः' इत्याद्यन्तास्त्रयोदश श्लोकाः सन्ति, एभिः श्लोकैः प्रकाशस्य विश्वात्मकताऽनेकविधाभिर्युक्तिभिस्तथा प्रतिपादिता यथा देहदेहिभावादिभेदभ्रमः समूलमुन्मूलितः स्यात्।

तृतीयस्कन्धे 'अहमेकोऽनस्तमित' इत्यारभ्य 'अस्तमितमर्थजातम्' इत्याद्यन्तैरेकोनविंशतिश्लोकैश्चितो विश्वात्मकताया असम्भावनाविपरीतभावनाभ्यां परिभवानर्हत्वमुपपादितम्।

प्रकाश एवैको भावाभावात्मकजगदाकारेण परिस्फुरति। सः, त्वम्, अहमित्येवं त्रिधा प्रतीयमानाः पुरुषाः परमार्थतः प्रत्यवमर्शात्मानः प्रकाशलक्षणान्महापुरुषान्न व्यतिरिच्यन्ते, इत्थमुक्तरीत्या भिन्नतयाऽवभासमानं शब्दार्थोभयात्मकं कृत्स्नं जगत् प्रकाशमात्रमेव पर्यन्ते पर्यवस्यतीत्यादि तत्त्वं स्कन्धेऽस्मिन् प्रतिपादितम्।

चतुर्थः स्कन्धो विभूतिस्कन्ध आख्यायते। अस्मिन् 'मत्स्थमपि भुवनवृन्दम्' इत्याद्यारभ्य 'इति बोधितः स' इत्याद्यन्तास्त्रयोदश श्लोकाः सन्ति। तत्र प्रथमेन

चतुष्केण अप्रबुद्ध-प्रबुद्धकल्प-प्रबुद्ध-सुप्रबुद्धकल्प-सुप्रबुद्धरूपाणां पञ्चविधप्रमातॄणां प्रतीतिप्रकारः प्रदर्शिताः। तदनन्तरं श्लोकाष्टकेन सुप्रबुद्धस्य सिद्धयोगिनः प्रमातुरिच्छामात्रेण विविधानां विभूतीनामाविर्भावस्वरूपमुपवर्णितम्।

अन्तिमेन उपसंहारश्लोकेन बोधोदयलब्धशक्तितत्त्वावेशस्यापगताखिलमलस्य पशुभावमुक्तस्येन्द्रस्य शिवत्वलाभं वर्णयता सर्वः साधकश्चरमे स्वात्मानं जगद्गुरुपरमेश्वरस्वरूपतया प्रतिपद्यत इति प्रतिपादितम्।

## साम्बपञ्चाशिका

एष ग्रन्थो भगवतो वासुदेवस्य पुत्रेण श्रीसाम्बेन विरचितः। अस्मिन् लोकानुजिघृक्षया स्वात्मलक्षणस्य विवस्वतः स्तुतीरुपन्यस्यता ग्रन्थकारेणानेके तन्त्रसिद्धान्ताः स्पष्टं वर्णिताः। राजानकस्य श्रीक्षेमराजस्य गभीरया टीकया समुद्भासितोऽयं ग्रन्थो बह्वागमसिद्धान्तान् विवृण्वन् विपश्चितां महते मनस्तोषाय कल्पते। त्रिपञ्चाशत्संख्यैर्महाकायैः पद्यैर्ये विशिष्टा आगमविषया एतत्प्रबन्धाङ्गतां नीतास्तेषु कतिपये संक्षेपत इहोपन्यस्यन्ते।

प्रथमे पद्ये ब्रह्मणः प्रथमोन्मेषं शब्दब्रह्मरूपं प्रणवध्वनिमरुणतया, शब्दार्थात्मना तदीयविवर्तरूपं सर्वं जगत् तज्ज्योतीरूपतया, ऋग्यजुःसामस्वरूपां वेदत्रयीं तन्मण्डलरूपतया, सर्वविद्यानामास्पदत्वेन तदीयस्पन्दनतया च, षड्जादीन् सप्त स्वरान् सप्ताश्वरूपतया बोद्धृविग्रहगतं बोधस्थलं वियद्रूपतया च निर्वर्ण्य परब्रह्मणः परार्करूपतया सामान्यव्याप्त्या स्तुतिः कृता।

द्वितीयस्मिन् पद्ये 'ओम्' इति शब्दात्मकप्रणवरूपस्य परब्रह्मप्रथमोन्मेषस्य परावाणीरूपाया अकारादिक्षान्तशब्दसामान्यशरीरायाः पश्यन्तीवाचश्च प्रसारकत्वं प्रतिपाद्य देहे मध्यनाडीगतप्राणब्रह्मनिविष्टः परब्रह्मस्वरूपः परमादित्यो देहमध्यनाडीव्याप्त्या प्रपद्यमानतया स्तुतः।

तृतीयस्मिन् पद्ये स एक एव चिद्भानुस्त्वगादित्रयोदशकरणमूर्तितया, अहंकारस्य ग्राहककुक्षिनिक्षेपे त्वगादिबुद्ध्यन्तद्वादशकारणात्मना द्वादशादित्यतया, आन्तरस्य बाह्यस्य च जगतः प्रकाशनेन वेद्यैकरूपतया मृतकल्पानां देहादीनामण्डानां प्राणप्रदत्वेन मार्तण्डतया च विज्ञाप्य प्रपञ्चव्याप्त्या स्तुतः।

पञ्चमपद्ये परमादित्यस्य चैतन्यभानोर्ब्रह्मनाडीरूपाया मूर्तेर्देहे बहिः सर्वभूतेषु च व्याप्तिं प्राणादिजिष्णुयोगिजनप्राप्यत्वं च वदता प्राणादिकालुष्योपशमलक्षणा प्रसन्नता चिदानन्दघनतया स्फूर्तिमत्ता च समभ्यर्थिता।

षष्ठपद्ये चैतन्यभास्वतः परमादित्यरूपाया मूर्तेः सर्वत्र सर्वदाऽप्रतिहतपथतया, शीतोष्णयोरत्याधिक्यप्रतिषेधेन सदा समस्ततया, गतिमत्त्वेन सदैवाप्रमिततया, परमाह्लाददानेन निस्तापतया, शून्यतात्मना प्रमित्यनर्हत्वेन राहुग्रासरहिततया च

बाह्यार्कस्य मूर्तितो व्यतिरेकं कलिवक्त्रकप्रसङ्गे विष्णुतनोरिव राजमानत्वं च निर्वर्ण्य तस्याश्चिदानन्दघनात्मना स्थितिलक्षणा श्वेतता सुप्रसन्नता च प्रार्थिता।

अष्टमपद्ये चैतन्यभानोरक्षय्यं भूमस्वरूपं सोमकल्पस्य मेयवर्गस्योदयनिलय-भूमित्वं वेदानां च ब्रह्मामृतमाक्षिकलग्नमधुकरीसङ्करूपत्वं च प्रदर्श्य प्रपद्य-मानता वर्णिता।

नवमपद्ये सूर्यस्य वामनस्य च प्रकाशेन पादेन च सर्वलोकक्रान्तिमिव चिदर्कस्य सर्वजगदात्मना उन्मेषलक्षणां विश्वव्याप्तिं विज्ञाप्य विश्वोत्कृष्टतया तस्य वर्तनमाकाङ्क्षितम्।

दशमे पद्ये क्रमेण शाक्तस्य धाम्नो ध्यानं विधाय परविमर्शात्मानं नादं शाक्तरूपानुप्राणितं स्वात्मतयाऽन्तः साक्षात्कृत्य 'भूः स्वाहा' इत्यादिकाश्चतस्रो व्याहृतीः प्रणवोच्चारणपूर्वकमुच्चार्य शाक्तशाम्भवधाम्नोरवष्टम्भेनात्मनो व्युत्थानदशां तदभेद-रसमयीं च सम्पाद्य वेदमातुः प्रतिपाद्यं चिदादित्यस्य सर्वोत्कृष्टं तेजः शरणीकृततया समुपदिष्टम्।

एकादशे पद्ये चिदद्वयावबोधानुदयं यावत् प्रवर्तमानायाः सर्वविधभेदकल्पना-त्मकाविद्याया विनाशार्थं स्तोतृस्तुत्यादिभेदकल्पनात्मिकाया अविद्यायाः साहाय्येन निर्वर्तमानस्य स्तुत्यादेरेव सम्पाद्यतां बाह्यप्राणार्करूपेण प्राणब्रह्मरूपेण विश्वात्मचिदा-नन्दघनरूपेण च चिदर्कस्यैव स्तोतव्यतां च प्रतिपादयता परमात्मोत्कर्षपरामर्शा-त्मिकया स्तुत्यैव परमसमावेशः सुलभ इति तत्त्वं निर्वर्णितम्।

त्रयोदशे पद्ये चिद्भानुत एव सर्वविधाया वाचः प्रसरणेन तस्य तया गोचरीकरणस्य दुर्घटतया विधिमुखेन तन्निरूपणस्य दुःशकतां निषेधरूपेण च कथं-चित् शक्यतां वदता 'तुभ्यं नम' इति वचोव्यतिरिक्तायाः स्तुतेर्वस्तुतोऽसम्भवं च ब्रुवता तदीयोऽमितो महिमा प्रकाशितः।

त्रयोविंशे पद्ये मनोबुद्धीन्द्रियलक्षणान् सप्ताश्वान् पश्यन्तीवागाख्यमेकमात्रमश्वं चारूढस्य चिद्भानोरुपासनया स्वरगुणकलाप्रभृत्युपाधिलक्षणाश्वानारूढस्य निरुपाधि-चिदानन्दघनस्य परमादित्यस्य प्रकाशलक्षणा प्राप्तिर्भवतीति तत्त्वमुपवर्णितम्।

चतुर्विंशे पद्ये एकस्य चिद्भानोरेवान्नरूपतयाऽन्नदरूपतयाऽन्नादरूपतया च वर्णनं विदधता स एव वेद्यवेदनवेदितृभावेन प्रसरतीति न किञ्चित् ततो व्यति-रिक्तम्, स एव सर्वस्य जगत आत्मेति विशदीकृतम्।

पञ्चविंशे पद्ये प्राणापानयोरग्नीषोमप्रभृतितत्तद्युग्मयोः कार्यकारितया तत्तदुभयात्मकतां प्रदर्श्य उदानधाम्नि तस्य तस्य युग्मजातस्य विलापनेन चिदात्म-धाम्नि अवस्थित्या चिदाख्यस्य परमादित्यस्य प्राप्तिर्भवतीति स्पष्टीकृतम्।

षड्विंशे पद्ये श्लेषमहिम्ना भौतिकेन भानुना चिदात्मकस्य भानोः सादृश्यं वर्णयता तस्य स्वगर्भतो विश्वप्रसवाय अग्नीषोमाधिरूढत्वं क्रमेण प्रवर्तमानैर्विचित्रैरुन्मेषनिमेषैरसामान्यस्य शाक्तानन्दरसस्यास्वादनलम्पटत्वं चाभिहितम्।

सप्तविंशे पद्येऽयमर्थोऽभिहितो यद् यथा बाह्यः सूर्यः स्वरश्मिभिः सोमं द्रुतं कृत्वा तदीयपञ्चदशकलाभिर्देवनराद्यात्मकं जगत् तर्पयन् अमाख्यया षोडश्या कलया ब्रह्माण्डोदरे स्वात्मयागं करोति, तथैव चित्सूर्योऽप्यात्मनः शाक्तेन तेजसा मेयजातरूपं सोमात्मकं हविर्निष्पाद्य तेन ब्रह्माद्यनाश्रितान्तकारणेष्वधिष्ठितं धरादिशिवतत्त्वान्ताध्वमयं जगत् तर्पयन् ऊर्ध्वतुर्यार्धसंज्ञिकाममारूपां कलां कवलयन्नात्मयागं विधत्ते।

त्रिंशे पद्ये चिदादित्यस्य प्रथमोन्मेषादिरूपै रश्मिभिर्जगद् विकास्यते, चरमनिमेषादिभिश्च तैस्तदखिलं चिदेकमयतां नीयत इति न्यरूपि।

द्वात्रिंशे पद्ये चिदादित्यात् प्रकटितः सम्पूर्णः प्रपञ्चस्तदात्मक एव, अहंत्वेनात्मानमनुभवन् सर्वो देही तदिच्छया प्रापितग्रहीतृत्वादिभावतया संकुचितज्ञानशक्तित्वेनाज्ञतां गतः साधनया सर्वोपाधिविगलने पर्यन्ते तदेकात्मतामेवापद्यत इत्युक्तम्।

त्रयस्त्रिंशे पद्येऽज्ञोऽपि जनश्चिदर्कस्य परामर्शात्मना संस्तवेन पश्चिमे जन्मनि पूर्वाखिलजन्मार्जिते पुण्यपापे विधूय शिवत्वलाभे जातस्पृहो भक्तिश्रद्धायुतो लब्धदीक्षः साधनारतो मुक्तिलाभे सफलो भवतीत्यभिव्यञ्जितम्।

षट्त्रिंशे पद्ये साधकस्य चेतसि चिदर्कोदयेन रागादिलक्षणस्य तमसो निवृत्त्याऽन्तर्मुखतां प्राप्ताऽपि तदीया मतिश्चिदैक्याज्ञानलक्षणां निद्रां तावन्न त्यजति यावच्चित्सूर्यः स्वगाढज्योतिषा तां नाश्लिष्यतीति साधनधियः पूर्णं जागरणं तत्कृपैकायत्तमित्यसूचि।

सप्तत्रिंशे पद्येऽयमर्थः प्रत्यपादि यद् यथा बाह्यः सूर्यः स्वोदयेन जगत्तिमिरं तिरस्कृत्यापि निशादिनविभागेन तमो जीवयन् सर्वथा तन्न निःशेषयति, तथैव चित्सूर्यः साधकस्य चित्ते समुदितस्तदीयं तमो निरस्यापि व्युत्थानदशायां पुनस्तं क्लेशतमसा कलुषयति, अतो निर्व्युत्थानसमावेशरसास्वादोदयपर्यन्तं चिदर्कं स्तुवतैव वर्तितव्यं साधकेन।

अष्टत्रिंशादिपञ्चाशत्तमान्तपद्यैर्विविधप्रकारैश्चिदर्कं दयोदकवर्षणाय साधकेन प्रार्थनीयतया प्रतिपाद्य चरमेण श्लोकत्रयेण सर्वं निरुक्तं निष्कृषता भक्तिभाजे जनाय भोगमोक्षप्रदानार्थं भगवांश्चैतन्यभानुरभ्यर्थितः।

## त्रिपुरामहिमस्तोत्रम्

एष स्तोत्रात्मक आगमग्रन्थोऽनसूयातनूभवेन क्रोधमूर्तिना शिवात्मना महामुनिदुर्वाससा रचितः। 'श्रीमातस्त्रिपुरे' इत्यादि 'सदसदनुग्रह' इत्याद्यन्तषट्-

पञ्चाशत्पद्येषु परिसमाप्तेऽस्मिन् ग्रन्थे त्रिपुरसुन्दर्याः स्तोत्रमिषेणानेकानि तन्त्रविद्या-रहस्यानि संकेतितानि सन्ति ।

प्रथमेन पद्येन वाग्भव-कामराज-कामकलाभिधकूटत्रयदेवतानां भावना-मुक्त्वा द्वितीयेन च ब्रह्मरन्ध्रस्थितसहस्रदलकमलकर्णिकान्तर्गतत्रिकोणात्मकसिंहासन-स्थितां चिद्रूपां त्रिपुरसुन्दरीं स्तुत्वा तृतीयादिद्वादशान्तश्लोकैः संकेतसारविद्यायाः बालाविद्यायाश्च वाग्भवादिबीजत्रयं वर्णयता त्रयोदशचतुर्दशपद्याभ्यां तज्ज्ञानलभ्यं सामर्थ्यं प्रतिपादितम् ।

पञ्चदशेन पद्येन सदाशिवोक्तनित्योपासनाया अवश्यकर्तव्यता, षोडशेन सुकवित्वलाभायाधीतानेकशास्त्रस्यापि त्रिपुरसुन्दर्या अनिवार्योपास्यता, सप्तदशेन देव्युपासकस्यानिष्टप्रदानामपीष्टप्रदत्वेन परिणामिता, अष्टादशेन त्रिपुरेति नाम्नः कलनमात्रेण मानवस्य धन्यता चेत्यभिधाय एकोनविंशेन मूलाधारहृदयभ्रूमध्यवर्तिनः कूटत्रयस्य प्रणवरूपता प्रत्यपादि ।

विंशैकविंशपद्याभ्यां त्रिपुरसुन्दर्या गायत्र्यादीनामधिदेवतात्वं कोशपञ्चकद्वारा भगवत्या विश्वशरीरे विलीनत्वं तज्ज्ञातुर्ब्रह्मज्ञत्वं च ब्रुवता द्वाविंशेन पद्येनागम-रहस्यज्ञानाय सद्गुरुतो दीक्षाग्रहणस्यावश्यकतोपदिष्टा ।

शैववैष्णवसौरप्रभृत्यनेकेषु स्वल्पायाससुलभेषु मुक्तिमार्गेषु सत्स्वपि न्यास-पूजादिविस्तारेण दुर्गमोऽपि त्रिपुराराधनमार्गोऽज्ञानतमसोऽपुनर्भवनिवृत्तये नूनमनु-सरणीय इति त्रयोविंशेन पद्येनाभिधाय त्रिपुरसुन्दर्या आराधनं विना केवलमुपनिष-द्रीत्याऽऽत्मनः श्रवणादिसाधनमात्रेण जननमरणप्रदेभ्यस्तद्विलासभूतविविधभोग्य-दिव्यायुधेभ्यो मनुष्यस्य त्राणं न भवितुमर्हतीति चतुर्विंशेन वदता संसारसमुद्रे मग्नानां प्राणिनामुद्धाराय भगवती पराम्बैव पञ्चविंशेन प्रार्थिता ।

षड्विंशेन पद्येन व्रतयागादिभिः साधकस्य शारीरः क्लेश एव वर्धते मुक्ति-पदं तु दूरतरमेव तिष्ठति, तत्तु मातुराराधनेनैव साध्यमित्यभिधाय सप्तविंशेन सकल-मातृकामूलभूताया अकारहकाररूपायाः परस्याः शक्तेः, अष्टाविंशेन च सदैवतस्य श्रीचक्रस्य स्तुतिः कृता ।

एकोनत्रिंशादिपद्यैरान्तं नानाप्रकारैर्भगवत्याः स्तवव्याजेन बहूनि तान्त्रिक-तत्त्वानि शंसता महात्रिपुरसुन्दर्या उपासनाया ऐहिकामुष्मिकसमृद्धिलाभेन सह मोक्षलाभस्य सुघटत्वमुक्तम् ।

## स्पन्दप्रदीपिका

ग्रन्थोऽयमागमशास्त्रगुरुणा तत्रभवता उत्पलाचार्येण प्रणीतः । अस्मिन् भट्ट-कल्लटेन गुरोर्वसुगुप्तात् प्राप्तस्य आगमरहस्यस्य शिष्याणामवबोधायानुष्टुप्पञ्चाशिकया संगृहीतस्य विशदं व्याख्यानं कृतमस्ति । स्पन्दपदव्यपदेश्य आत्मा मायातमःस्तोमे-

नाङ्छन्नतया न प्रकाशतेऽतस्तत्प्रकाशनाय कृतोऽयं ग्रन्थः 'स्पन्दप्रदीपिका' इत्यन्वर्थ-नाम्ना स्थाने चकास्ति ।

ग्रन्थेऽस्मिन् तन्त्रशास्त्रस्य शास्त्रान्तराणां च बहून् ग्रन्थानुद्धृत्य स्पन्दकारिकाणां प्रतिपाद्यमर्थजातं तैः संवादयता सुस्पष्टयता च स्पन्दतत्त्वं निपुणतया निरूपितम् । अस्य ग्रन्थस्य सम्पर्कमागतोऽध्येता नूनमागममहोदधेरन्तःप्रवेशमासाद्य तन्त्रशास्त्राणां मर्मज्ञतां लभमानः कृतार्थो भवितुमर्हतीति निर्विवादम् ।

ग्रन्थस्यास्य भाषादृशा सुगमतया तद्विषयविस्फोरणं संक्षिप्तादपि प्रयासाद् विरमता मयाऽध्येतारस्तदध्ययने स्वतः प्रवृत्ता दिदृक्ष्यन्ते ।

## अनुभवसूत्रम्

अनुभवसूत्रनामाऽयं ग्रन्थो महात्मना मायिदेवेन शिवोक्तस्य 'वातुल'-महातन्त्रस्योत्तरभागाङ्गभावेन रचितोऽधिकरणाष्टकोपेतः शिवसिद्धान्ततन्त्राख्यया-ऽवद्योतते ।

अस्य प्रथममधिकरणं 'पारम्पर्यक्रम'नाम्ना, द्वितीयं 'स्थलनिर्देश'नाम्ना, तृतीयं 'लिङ्गस्थलनिरूपण'नाम्ना, चतुर्थं'मङ्गस्थलनिरूपण'नाम्ना, पञ्चमं 'लिङ्गाङ्ग-संयोगविधि'नाम्ना, षष्ठं 'सर्वाङ्गलिङ्गसाहित्य'नाम्ना, सप्तमं 'श्रीलिङ्गार्पणसद्भाव'-नाम्ना, अष्टमं च 'क्रियाविश्रान्ति'नाम्ना व्यवह्रियते ।

प्रथमेऽधिकरणे ऐपुर्यां सोमनाथप्रसादेन साक्षाद् विष्णोः प्रादुर्भूतादादिगुरो-रुपमन्योरारभ्य प्रकृतग्रन्थकर्तृमायिदेवपर्यन्तमाचार्यपरम्परायाः क्रमो वर्णितः ।

द्वितीयेऽधिकरणे सच्चिदानन्दलक्षणस्य परब्रह्मात्मनः शिवतत्त्वस्य विश्वस्थिति-लयाधारतया स्थलत्वं समर्थ्य शिवस्य लिङ्गस्थलत्वं जीवस्य च अङ्गस्थलत्वं निर्दि-शता लिङ्गाङ्गयोरैक्यज्ञानादज्ञानग्रन्थिभङ्गे जीवस्य शिवतत्त्वलाभो भवतीत्युक्तम् ।

तृतीयेऽधिकरणे चराचरात्मकस्य सर्वस्य जगतो लयगत्योराश्रयतया शिवस्य लिङ्गत्वं निरूप्य भाव-प्राण-इष्टनाम्ना त्रैविध्येन स्थितस्य लिङ्गस्य बिन्दुनाद-कलाभेदेन षोढात्वं चित्-परा-आदि-इच्छा-ज्ञान-क्रियानामभिः शक्तिषाड्विध्यं च वर्णयता शक्तियुक्तानां स्थलानां स्वरूपलक्षणवर्णनपूर्वकं विशदाद् विस्तृताच्च लिङ्ग-ज्ञानाज्ज्ञातुः शिवत्वसौलभ्यमभिहितम् ।

चतुर्थेऽधिकरणे अं=परं ब्रह्म प्रति गमनाद् जीवोऽङ्गमुच्यत इत्युक्त्वा योग-भोग-त्यागनाम्ना तस्य त्रैविध्यं पृथगर्थतया प्रत्येकं द्वैविध्यसिद्धया षाड्विध्यं च वर्णयता समरसा, आनन्दाकारा, अनुभवाकारा, परमा, अवधानात्मिका, नैष्ठिकी चेति षड्विधां भक्तिं निरूप्यान्ते अङ्गस्थलज्ञानस्य शिवाद्वैतलाभानुगुणत्व-मुक्तम् ।

पञ्चमेऽधिकरणे शिवात्मकस्य लिङ्गस्य जीवात्मकस्य चाङ्गस्य सम्यग् योगलक्षणः संयोगस्तद्विधिश्च वर्णितः। अमी लिङ्गाङ्गसंयोगा अस्मिन्नधिकरणे बहुधा निरूपिताः, यथा 'तत्त्वमसि' इति वाक्ये तत्पदार्थो लिङ्गम्, त्वंपदार्थोऽङ्गम्, असिपदार्थः संयोगः, सच्चिदानन्दे सन्मात्रं लिङ्गम्, चिन्मात्रमङ्गम्, आनन्दमात्रं तयोः संयोगः, नादो लिङ्गं बिन्दुरङ्गम्, कला संयोगः, मन्त्रो लिङ्गम्, क्रिया अङ्गम्, तयोः प्रयोगः संयोगः, पुरुषो लिङ्गम्, प्रकृतिरङ्गम्, तयोः प्रेरकत्वेन स्थित ईश्वरः संयोगः, अकारो लिङ्गम्, उकारोऽङ्गम्, मकारः संयोग इत्येवमादिः। यया लिङ्गसम्बन्धो दीयते मलत्रयं च क्षीयते सा दीक्षा, सा च वेधात्मिका, मन्त्रात्मिका, क्रियात्मिका चेति त्रिधा, ताभिरुपपन्नः परमया भक्त्या सम्पन्नश्च साधको मलत्रयं दग्ध्वा समीचा लिङ्गाङ्गसंयोगेन कृतार्थतामात्मनो निर्वर्तयतीति निरूपितम्।

षष्ठेऽधिकरणे एकमेव लिङ्गं शक्तिभेदेन नानात्वमुपगतं भक्तिभेदभिन्नेषु बहुषु जीवाङ्गेषु गुरूपदेशेन प्रतिष्ठामवाप्य निरन्तरं प्रकाशमानं सर्वाङ्गलिङ्गसाहित्यरूपत्वेन वर्णयित्वा मध्ये तदेव विविधैः प्रकारैः परिस्फुटयता अन्ते पञ्चाक्षरषडक्षरयोः शिवमन्त्रयोस्तन्त्रसम्मतोऽर्थः प्रणिगदितः।

सप्तमेऽधिकरणे सर्वाः क्रियाः कुर्वतोऽपि निर्लेपत्वाधायकः श्रीलिङ्गार्पणसद्भावो वर्णितः। तच्चार्पणं क्रियार्पणज्ञानार्पणभेदेन द्विधा निरूप्यान्येऽप्यनेके विषया विशदमावेदिताः।

अष्टमेऽधिकरणे क्रिया लिङ्गे समर्पणं प्राप्य विश्रान्तिं लभन्ते, बन्धनौपयिकं फलं न प्रसुवत इत्येवंविधां क्रियाविश्रान्तिं निरूपयता निष्कामभावेन शिवार्पणधिया क्रियमाणाः कर्मज्ञानभक्तयः पुंवन्ध्ययोः सङ्गम इव फलाय न कल्पन्त इत्यादिरर्थः प्रत्यपादि।

## वातुलशुद्धाख्यं तन्त्रम्

अस्मिन् ग्रन्थे स्कन्दं मोक्षदं शिवज्ञानमुपदिशता श्रीकण्ठेन दध्नो घृतमिव सहस्रागमग्रन्थतस्तत्त्वसारः समुद्धृत्य सञ्चितः। पटलदशकात्मना विततोऽयं तन्त्रग्रन्थः प्रथमेन पटलेन तत्त्वभेदम्, द्वितीयपटलेन तृतीयपटलेन च चक्रभेदम्, चतुर्थपटलेन वर्णभेदम्, पञ्चमपटलेन मन्त्रभेदम्, षष्ठपटलेन प्रणवभेदम्, सप्तमपटलेन ब्रह्मभेदम्, अष्टमेन अङ्गभेदम्, नवमेन मन्त्रजातम्, दशमपटलेन च मन्त्रकीलं वर्णयन् तान्त्रिकाय ज्ञानाय तान्त्रिक्यै सिद्धये च सोत्कण्ठानां निरुपमः सहायकः।

तदेवमेनं संग्रहग्रन्थं सुसम्पाद्य प्रकाशार्हतां नयतो योगतन्त्रविभागस्याध्यापकाननुसन्धातॄन् सहयोगिनश्च धन्यवादैः सभाजयन् विरमति विस्तराद्।

चैत्रशुद्धप्रतिपत्, सं० २०२७
वाराणसेयसंस्कृतविश्वविद्यालयः
वाराणसी।

बदरीनाथशुक्लः
अनुसन्धानसंचालकः
७–४–७०

# प्रास्ताविकम्

अथेदं समुपस्थाप्यते तन्त्रशास्त्रानुशीलनचणानां विदुषां पुरतः षड्ग्रन्थीक्रोडीकारक-तन्त्रसंग्रहस्य प्रथमो भागः। अत्र हि विद्याचक्रवर्तिकृतविवृतिसमेता विरूपाक्षपञ्चाशिका, या हि त्रिवेन्द्रम्संस्कृतग्रन्थमालया प्रकाशितचरा, राजानकक्षेमराजकृतटीकासहिता साम्बपञ्चाशिका, नित्यानन्दविरचितव्याख्यासहितं त्रिपुरामहिमस्तोत्रं च मुम्बापुरीस्थनिर्णयसागरमुद्रणालयतः काव्यमालागुच्छकयोः प्रकाशितपूर्वे, उत्पलाचार्यविरचिता स्पन्दप्रदीपिका च स्पन्दकारिका-व्याख्यानात्मिका वाराणसीतो विजयनगरसंस्कृतग्रन्थमालायां पूर्वं प्रकाशिता, महात्मना मायिदेवविभुना प्रणीतमनुभवसूत्रं महाराष्ट्रभाषानुवादसहितं प्रकाशितपूर्वम्, वातुल-शुद्धाख्यं तन्त्रं च केवलं कर्णाटकलिप्यामेव हुबलीनगरतः प्रकाशितचरमिति ग्रन्थषट्कं पुनः प्रकाश्यते। विरूपाक्षपञ्चाशिका साम्बपञ्चाशिका चेति ग्रन्थद्वयं विशिष्टाया योगपद्धतेः प्रकाशकम्, त्रिपुरामहिमस्तोत्रं च दुर्वासोविरचितं भगवत्यास्त्रिपुरसुन्दर्या उपासनाविधिं विस्तारयति योगप्रवणमेव, स्पन्दप्रदीपिका च न केवलं काश्मीरस्य स्पन्ददर्शनस्य, तात्कालिकस्य विशालस्य शैववैष्णवागमस्यापि च निदर्शिका, अनुभवसूत्रं वातुलशुद्धाख्यतन्त्रं च वीरशैवागमानां दार्शनिकीं पद्धतिमुपासनाविधिं च सारतया प्रदर्शयत इति समेषामेषां ग्रन्थानां महत्त्वं दुर्लभतां च विज्ञाय सौलभ्याय विदुषां सर्वप्रथममत्रैवायत्नमस्माभिः।

अनुभवसूत्रस्य वातुलशुद्धाख्यतन्त्रस्य च नास्ति कापि मातृका सरस्वतीभवनपुस्तकालये। विरूपाक्षपञ्चाशिकाया मूलमात्राया २५५५९ संख्याका पत्रत्रयात्मिका मातृकाऽत्र पाठशोधने समुपयुक्ता। अस्या आकारः १०·७ × ४·८, प्रतिपृष्ठं ९ पङ्क्तयः, प्रतिपङ्क्ति च ४१ अक्षराणि सन्ति। देवनागराक्षरेयं सम्पूर्णा मातृका मूलग्रन्थस्य। त्रिपुरामहिमस्तोत्रं देवीमहिम्न-स्तोत्रनाम्नाऽपि प्रसिद्धम्। अस्यापि केवलं मूलग्रन्थस्यैव मातृका २०१०७ संख्याका वर्तते सरस्वतीभवने। अत्र ११ पत्राणि, आकारः ८·१ × ३ परिमितः, प्रतिपृष्ठं ७ पङ्क्तयः, प्रतिपङ्क्ति च ३२ अक्षराणि सन्ति। देवनागरलिपिलिखितेयं मातृका अपूर्णा। साम्ब-पञ्चाशिकाया मूलमात्राया ८४११७ संख्याका, सटीकायाश्च ८२२४५, ८४१८३ संख्याके मातृके, अथ च स्पन्दप्रदीपिकायाः ८२७४७ संख्याका मातृका, सर्वा एताः शारदालिपिलिखिता नास्मिन् संस्करणे उपयुक्ताः कारणवशादिति सति सौविध्ये परीक्षिता भविष्यन्ति ताः। परिणामतश्च समुपलब्धे यत्र क्वचन वैशिष्ट्ये तत्फलं प्रकाशयिष्यते योगतन्त्रविमर्शिन्यां विभाग-स्यास्यानुसन्धानपत्रिकायाम्।

संस्करणस्यास्य प्रस्तुतीकरणे व्यापृतान् योगतन्त्रविभागस्य सर्वान् सदस्यान् साधुवादेन सभाजयन्तो वयं तन्त्रसंग्रहस्य प्रथममिमं भागं विदुषां समक्षमवतारयामः।

विदुषां वशंवदः

सिगरा २ A, वाराणसी
चैत्रशुक्लप्रतिपत्, सं० २००७
७-४-७० ई०

श्रीगोपीनाथकविराजशर्मदेवः
योगतन्त्रविभागाध्यक्षः
वाराणसेयसंस्कृतविश्वविद्यालयस्य।

# विषयानुक्रमणी

## विरूपाक्षपञ्चाशिकायाः



## साम्बपञ्चाशिकायाः

## त्रिपुरामहिमस्तोत्रस्य

---

## स्पन्दप्रदीपिकायाः

## अनुभवसूत्रम्

### प्रथमाधिकरणे



### द्वितीयाधिकरणे



### तृतीयाधिकरणे



### चतुर्थाधिकरणे

## पञ्चमाधिकरणे



## षष्ठाधिकरणे



## सप्तमाधिकरणे

## अष्टमाधिकरणे



## वातुलशुद्धाख्यतन्त्रस्य

### प्रथमः पटलः

## द्वितीयः पटलः

तृतीयः पटलः



चतुर्थः पटलः



पञ्चमः पटलः

षष्ठः पटलः



सप्तमः पटलः



अष्टमः पटलः

नवमः पटलः



दशमः पटलः

# विरूपाक्षपञ्चाशिका

## विद्याचक्रवर्तिकृतविवृतिसमेता

नमो विश्वशरीराय विश्वैकात्म्यावभासिने ।
नित्यप्रत्यवमर्शाय शम्भवे विश्वसिद्धये ॥
संवित्सिद्धान्तसिद्धार्थसारसंग्रहरूपिणीम् ।
पञ्चाशिकां विरूपाक्षप्रोक्तां व्याकुर्महे वयम् ॥

इह विश्वानुग्रहैकरसिकः श्रीमान् परमशिवभट्टारकः परिगृहीतलीलाविग्रहः श्रीविरूपाक्षनाथपादनाम्ना परिभ्रमन् कदाचिद् दिविषदां नाथं गन्धसिन्धुरायोधनं पारमैश्वर्यमभिमन्यमानमधिगम्य तत्पुरस्तादिच्छामात्रेण प्रादुष्कृतमहाचलयुगलाहवस्तद्दर्शनकौतुकातिशयप्रशान्तैश्वर्यस्मये सर्वभावेनोपपन्ने तत्र तदवबोधनाय समस्तसंवित्सिद्धान्तार्थपरमनिष्कर्षभूतमेतत् पञ्चाशिकाशास्त्रमवतारयामास। तत्र प्रथमचरमयोः श्लोकयोरुपक्रमोपसंहाररूपत्वात् "शुकवामदेवयोः (५० श्लो०) इत्यस्य च प्रासङ्गिकत्वादनुपदेशरूपत्वम् । अवशिष्टाः श्लोकाः पञ्चाशद्रूपा इति शास्त्रमेतत् पञ्चाशिका । तत्र विमतिपदमित्यादिश्लोकसप्तकरूपेण प्रथमस्कन्धेन शरीरबाह्यतया प्रतीयमानस्य विश्वस्य शरीरत्वमुपपत्तिभिरवस्थापितम् । अथ देहदेहिभावलक्षणभेदभ्रमापासनाय प्रत्यवमर्शात्मेत्यादित्रयोदशश्लोकात्मना द्वितीयस्कन्धेन प्रकाशैकात्म्यं विश्वस्य वितत्य विवेचितम् । अथ प्रत्यभिज्ञातस्य प्रकाशैकात्म्यस्यासम्भावनाविपरीतभावनादिभिर्दोषैः संस्पर्शो मा भूदिति प्रत्यवमर्शप्रकाराः सप्रपञ्चं प्रदर्शिता अहमेकोऽनस्तमितप्रकाशेत्याद्येकोनविंशतिश्लोकात्मना तृतीयस्कन्धेन। अथ चतुर्थस्कन्धेन मत्स्थमपीत्यादिश्लोकैकादशकात्मकेनाप्रबुद्धप्रबुद्धादीनां प्रतीतिप्रकारोपन्यासपुरस्कारेण परापरसिद्धिप्रादुर्भावसरणिः पर्यन्ते महासिद्धिश्चोपदिष्टेति चतुःस्कन्धकमिदं शास्त्रम् । अवान्तरविशेषास्तत्र तत्रोपवर्ण्यन्ते ।

अथ ग्रन्थं व्याकुर्मः । तत्र शास्त्रमवतारयितुं पीठिकाबन्धमारचयति—

गन्धगजसमररसिकायेन्द्राय प्रकटिताद्रियुगसमरः ।
निजसिद्धिबीजमस्मै कथयति पृष्टो विरूपाक्षः ॥ १ ॥

पृष्ट इति प्रश्नलिङ्गानुमेयेन शक्तिपातेनास्य तत्त्वोपदेशार्हत्वादधिकारित्वमिन्द्रस्य सूचितम् । कथयति शाब्दीं दीक्षां प्रवर्तयितुमुपक्रमते ॥ १ ॥

तत्रादौ शरीरबहिर्भावेन प्रतीयमानस्य विश्वस्य शरीरत्वं साधयितुं पञ्चावयवोपपन्नं वाक्यमुपन्यस्यति—

विमतिपदमङ्ग सर्वं मम चैतन्यमात्मनः शरीरमिदम् ।
शून्यपदादीलावधि दृश्यत्वात् पिण्डवत् सिद्धम् ॥ २ ॥

अङ्गेत्युपदेश्यमभिमुखीकरोति । विमतिपदमिदं शून्यपदादीलावधि सर्वं ग्राहकाभिमानिना त्वया देहबाह्यत्वेन चैतन्यात्मना मया देहत्वेन च प्रतीयमानत्वाद् विवादास्पदमेतदनाश्रितादिभूम्यन्तं विश्वं मम शरीरम् । तत्र हेतुः—दृश्यत्वादिति । यथा ते ग्राहकत्वादवच्छिन्नस्य दृश्यत्वात् पिण्डः शरीरम्, तथा मम चैतन्यात्मनोऽनवच्छिन्नस्य विश्वमेव दृश्यत्वाच्छरीरम् । उपनयस्यार्थात् सिद्धिमभिसन्दधानो निगमयति—सिद्धमिति । सर्वस्य ह्ययं स्वानुभवसिद्धोऽर्थः । यदा प्रतिनियतं नीलपीतादिविशेषरूपं ग्राह्यं प्रत्युन्मुखीभवति, तदायं ग्राहकः स्वयमप्यवच्छिन्नप्रकाशो भवति । स च प्रकाशावच्छेदो ग्राह्यावच्छेदोपाधिक एव । यदा पुनः सर्वमेव वस्तु सामान्यतोऽनुसन्धत्ते, तदा चैतन्यात्मकोऽनवच्छिन्नप्रकाशोऽयम्, देशकालादिप्रकाशकस्य देशकालादिभिरवच्छेदासम्भवात् । अतस्तदा दृश्यत्वाद् विश्वमेव शरीरम् । यदि तथा न स्यात्, तदा ग्राहकपदे पिण्डोऽपि शरीरं न स्याद् दृश्यत्वाविशेषात् । अतो ग्राहकत्वलक्षणविशेषविगलने तवापि चैतन्यात्मनो विश्वमेव शरीरमित्युपदिष्टं भवति ॥ २ ॥

ननु दृश्यत्वमात्रं देहत्वे न हेतुः, अपि त्वहन्तया प्रतीयमानत्वम् । प्रतीयते च पिण्डोऽहन्तया । विश्वं पुनरिदन्तया । अतः कथमुक्तार्थसिद्धिरित्यत आह—

सम्पन्नोऽस्मि कृशोऽस्मि स्निग्धकरणोऽस्मि मोदमानोऽस्मि ।
प्राणिमि शून्योऽस्मीति च षट्सु पदेष्वस्मिता दृष्टा ॥ ३ ॥

सम्पद् गृहक्षेत्रादेर्विषयस्य धर्मः, कार्श्यं देहस्य, स्नेहश्चक्षुरादेरिन्द्रियस्य, मोदोऽन्तःकरणस्य, प्राणनं वायोः, शून्यता सुषुप्तपदस्य मायापर्यायस्य । एषु विषयादिषु षट्सु पदेषु, अस्मिता दृष्टा अहमभिमानस्तवापि स्वानुभवसिद्धः । इत्थञ्च सति यदा देहबाह्यत्वेनाभिमते विषयेऽहमभिमानः, तदा दृश्यत्वाद् विषयोऽपि शरीरम् । यदा तु नाहमभिमानः, तदा देहेन्द्रियाद्यपि न शरीरम् । अतः पिण्डेऽस्मिता तद्बहिर्भूते वस्तुनीदन्तेति यद्वैषम्यमाशङ्कितं तदविमर्शमात्रकृतो विप्रलम्भ एवेति भावः ॥३॥

ननु तथापि प्रतिनियतेषु विषयादिषु वस्तुषु षट्सु अस्मिता दृश्यते, न सर्वत्रेत्यत आह—

विषयशरीरेन्द्रियधीप्राणनिरोधप्रसिद्धयदस्मित्वम् ।
इत्थं चितिमखिलेऽध्वनि धारयतो विश्वदेहत्वम् ॥ ४ ॥

'विषयादिषु षट्सु येयमस्मिता प्रसिध्यति सा चितेरेवोपपद्यते, न तु ग्राहकस्य, तस्य शून्यपदे निमग्नत्वात्। इत्थं षट्सु पदेषु प्रसिद्धथदस्मित्वां चितिं यदि अखिलेऽध्वनि धारयसि षडात्मनीव सर्वत्रैव शिवादौ धरण्यन्ते वस्तुनि नित्यशुद्धामेव प्रत्यभिज्ञां दार्ढ्येनानुसन्धत्से, तदा तवापि विश्वदेहत्वं प्रत्यभिज्ञाविषयो भविष्यतीति शेषः। उक्तनयेन षट्सु पदेष्वस्मिता चितेरेव न ग्राहकस्य। चितेश्चानवच्छिन्नप्रकाशात्मनः प्रतिनियतेष्वस्मिता नोपपद्यते, उपपद्यते च सर्वत्रैव। तामिमां चितेः सर्वत्रैव नित्यसिद्धामस्मितां प्रतिपत्तिदार्ढ्येन यद्यवमृशसि, तदा ते नित्यसिद्धमेव विश्वशरीरत्वं प्रत्यभिज्ञातं स्यादिति तात्पर्यम् ॥ ४ ॥

ननूक्तनयेन सर्व एव लोको विश्वशरीरः प्राप्तः। न च तथा दृश्यते, पिण्डमात्रेऽहन्तायाः परिनिष्ठानात्। अतः प्रत्यक्षसिद्धमेतद् देहेऽभिमन्तृत्वं कथमन्यथयितुं शक्यत इत्यत आह—

उत्क्रम्य विश्वतोऽङ्गात् तद्भागैकतनुनिष्ठिताहन्तः।
कण्ठलुठत्प्राण इव व्यक्तं जीवन्मृतो लोकः ॥ ५ ॥

विश्वतोऽङ्गात् शरीरभूताद्विश्वस्मादेव शिवादेर्वस्तुन उत्क्रम्य अनुत्क्रान्तः सन्नपि स्वाविमर्शेनोत्क्रान्त इव भूत्वा तद्भागैकतनुनिष्ठिताहन्तस्तदन्तर्भूतायां कस्याञ्चिदेकस्यां तनौ सुरनरतिर्यगात्मिकायां दृढप्ररूढाहम्भावः, अत एव कण्ठलुठत्प्राण इव लोको व्यक्तं जीवन्मृतो जन्तुजातमेतज्जीवन्मृतकल्पं सत्यं वर्तत एव। न तत्रापलापः कश्चित्। तत्र हेतुर्विचार्यमाणः स्वाविमर्शलक्षणा मायैव। विमर्शे तु लब्धे सर्वो विश्वशरीरः शिव एव ॥ ५ ॥

यत इत्थमतः—

देहेऽस्मितया यद्वज्जडयोरास्फालनं मिथो बाह्वोः।
इच्छामात्रेणेत्थं गिर्योरपि तद्वशाज्जगति ॥ ६ ॥

ग्राहकाभिमानिनस्ते देहेऽस्मितया मिथः करयोरास्फालनं यथेच्छामात्रेण, तथा चैतन्यात्मनो मम जगत्यस्मितया गिर्योरास्फालनमिच्छावशादेव प्रवर्तते। देहे दृढोऽहमभिनिवेश इच्छा चेतीयदेव हि ते करास्फालने हेतुः, न तु हेत्वन्तरं किञ्चित्। तथा ममापि जगति दृढोऽहमित्यभिनिवेश इच्छा चेति गिर्यास्फालने हेतुः। अतो जगत्यहमभिनिवेशशैथिल्यादेव तवैतदनैश्वर्यम्। तद्दार्ढ्येन तु नित्यसिद्धमेवैश्वर्यं तवाप्याविर्भविष्यतीत्यभिप्रायः ॥ ६ ॥

ननु अस्मितेच्छामात्रं चेतीयता न करास्फालनसिद्धिमनुपश्यामः, अपि तु बिन्दुप्राणादिचेष्टालक्षणायां सत्यामेव सामग्र्याम्। अतः कथमुक्तार्थोपपत्तिरित्यत आह—

बिन्दुं प्राणं शक्तिं मन इन्द्रियमण्डलं शरीरं च ।
आविश्य चेष्टयन्तीं धारय सर्वत्र चाहन्ताम् ॥ ७ ॥

बिन्दुः ग्राहकग्रहणादिप्रतीतिविशेषोदयादर्वाक्तनी स्वरसवाहिनी सामान्यभूता सूक्ष्माहंप्रतीतिः । प्राणोऽभिमानाध्यवसायाद्यन्तःकरणक्षोभहेतुरसुः । शक्तिपदेन बुद्ध्यहंकारौ परिगृहीतौ, तयोरध्यवसायाभिमानप्रतीत्यात्मनोः शक्तिरूपत्वात् । षडेतान् बिन्द्वादीनर्थान् आविश्य चेष्टयन्तीं स्वसंस्पर्शलवमहिम्ना परिस्पन्दयन्तीम् अहन्तां सर्वत्र धारय । येन देहे दृढप्रतिपत्त्या धारयसि, तेनैव च नयेन यदि सर्वत्र धारयसि, तदा तवेदृश्यः सिद्धयो नित्यसिद्धा एव स्थिता इति भावः ॥ ७ ॥

ननु येयमहन्ता, सा भावनामात्रपरिनिष्पन्नविकासा, न पुनरीश्वरत्वकर्तृत्वादिधर्मोत्कर्षशालिन्यनुभूयते । अतः कथमेवंविधसिद्धिसम्भव इत्यनास्थां शमयितुमाह—

ईश्वरता कर्तृत्वं स्वतन्त्रता चित्स्वरूपता चेति ।
एतेऽहन्तायाः किल पर्यायाः सद्भिरुच्यते ॥ ८ ॥

येयं त्वयाऽहन्ता प्रत्यभिज्ञाता सैव ईश्वरता सैव च कर्तृत्वं स्वातन्त्र्यं चिन्मयत्वं च । यो यः शास्त्रेष्वीश्वरत्वादिः सिद्ध्यतिशयः, स सर्वोऽप्यहन्तामय एव । अत ईश्वरत्वादयः पर्याया वाचकाः । अनेनाहन्तायामीश्वरत्वाद्यननुभवनिबन्धना येयमनास्था सा निरस्ता, यथा यथा प्रत्यभिज्ञानदार्ढ्यं तथा तथा नित्यसिद्धानामीश्वरत्वकर्तृत्वादीनां विभूतीनामाविर्भाव इत्यासूत्रितं चेति शिवम् ॥ ८ ॥

इति विरूपाक्षपञ्चाशिकायां विवृतिसमेतायां विश्वशरीरत्वविवेचनस्कन्धः प्रथमः ॥

—:०:—

# अथ द्वितीयः स्कन्धः

इत्थं प्रथमस्कन्धेन विश्वशरीरत्वं प्रतिपाद्येदानीं देहदेहिभावादिभेदभ्रमबाधनाय प्रकाशस्य वैश्वात्म्यं द्वितीयस्कन्ध आरभ्यते। तत्र ग्राहकत्वादिविशेषविगलनेन सामान्यरूपा येयं स्वरसवाहिनी चितिः, नेयम् अहमिति प्रतीयते, अतः कथमियमहन्तेत्याशङ्क्याह—

प्रत्यवमर्शात्मासौ चितिः स्वरसवाहिनी परा वाग् या।
आद्यन्तप्रत्याहृतवर्णगणा सत्यहन्ता सा ॥ ९ ॥

प्रत्यवमर्शात्मा विमर्शस्वभावा। असौ सर्वस्यैव स्वानुभवसिद्धत्वाद् असावित्यध्यक्षतया निर्देष्टुमुचिता। चितिः विगलितचेत्योपरागा चेतनस्य स्वरूपेणावस्थितिः। स्वरसवाहिनी निरोधकाभावादनिशं स्फुरद्रूपा। सा विमर्शमयत्वाद् वाक्। तत्रापि स्वरूपज्योतिष्ट्वेनैव प्रकाशनात् स्वरूपव्यतिरिक्तपश्यन्त्यादिरूपा नेयम्, अपि तु परैव, यदागमः—"स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी" (वा० प० स्वो० १। १४२) इति। शुद्धवाग्रूपत्वाद् येयं वर्णात्मिका, सा प्रत्याहारयुक्त्या गृहीताभ्यामकारहकाराभ्यामहन्तेति निरुच्यते, न पुनरहमिति प्रतीयमानतयैवेयमहन्ता ॥ ९ ॥

नन्वहन्ता नामाहमो धर्मः। स कोऽन्य उपलभ्यते, यः प्रत्यवमर्शरूपचितिव्यतिरिक्तोऽहंव्यपदेशमर्हतीत्यत आह—

स्वपरावभासनक्षम आत्मा विश्वस्य यः प्रकाशोऽसौ।
अहमिति स एक उक्तोऽहन्ता स्थितिरीदृशी तस्य ॥ १० ॥

स्वं निष्कृष्टप्रकाशात्मकं परं च प्रत्यवमर्शादिनीलान्तमवभासयितुं शक्तश्चेतनाचेतनात्मकस्य जगतः स्वात्मभूतो योऽयमस्ति प्रकाशः, स देशकालादिभेदकानां स्वात्मन्यसम्भवाद् एकोऽद्वितीयः सन्नागमेषु अहमिति आम्नातः। यस्य समनन्तरनिरूपितचरी प्रत्यवमर्शात्मिका दशैव अहन्ता। अत्रायमाशयः—योऽयं प्रत्यवमर्शादिनीलान्तस्य वेद्यस्यावभासको वेदनैकस्वभावः सर्वप्रमितिभाक् प्रकाशो नासौ स्वयमिति पर इति वा व्यपदेशमर्हति, तयोर्वेद्यत्वात्। अतः स एक एव, तस्य भेदकस्य प्रमाणस्यासम्भवात्। तस्य प्रत्याहृताभ्यामकारहकाराभ्यामहमित्युक्तिरागमेषु। तत्रापि यद्यपि अहेति प्रकृतिमात्रमर्थवत्, तथापि केवलायाः प्रकृतेर्व्यवहारानर्हत्वादहमिति प्रत्ययसध्रीचीनतया व्यवहारः। तस्य कारणातायां येयमुद्भूतप्रत्यवमर्शता साऽहन्तेति ॥ १० ॥

नन्विदमिति वेद्यम्, अहमित्यहंप्रत्ययात्मको ग्राहकः, समनन्तरनिरूपितः प्रकाशश्चेति त्रितयमुपलभामहे। कथमुक्तार्थसिद्धिरित्यत आह—

विच्छिन्नाविच्छिन्ने इदमित्यहमित्युभे प्रथे तस्य।
आभास्याभासकतां स्फुटयन्त्यौ चेत्यचित्पदयोः॥ ११॥

तस्य निरूपितस्य प्रकाशस्य धर्मभूते द्वे प्रथे भवतः—एका विच्छिन्ना मिथो व्यावृत्तिरूपा इदमित्येवमात्मिका, अन्या त्वविच्छिन्ना इदंप्रथापेक्षयाऽनुवृत्ता। तत्रेदंप्रथा चेत्यपदे आभास्यतां स्फुटयति; अहंप्रथा त्वाभासकतां चित्पदे। इदम्प्रथा हि नीलमिदं पीतमिदमिति परस्परव्यावृत्तिरूपा। नहि तस्यामप्रसृतायां नीलादावाभास्यता प्रकाशते। अहम्प्रथा तु नीलं पीतं च वेद्मीत्यनुवृत्तिरूपा। तत्प्रथनैकनिबन्धनमाभासकत्वं चित्पदे॥ ११॥

एवं स्थिते—

एकः स आत्मनासौ नहि क्रमोऽस्तीह देशकालाभ्याम्।
भेदिनि मिथः स युक्तश्चेत्ये भेदाश्रयः खलु सः॥ १२॥

स प्रकाश आत्मना एकोऽद्वितीय एव, न तु प्रकाशो ग्राहकश्चेति द्विरूपः। नन्विहेदानीं ग्राहकोऽस्मीति देशतः कालतश्च क्रमोऽस्ति। कथमैक्यमित्याशङ्क्याह—नहि क्रमोऽस्तीह देशकालाभ्याम्। अत्र प्रकाशे देशकालनिबन्धनः क्रमो भेदो नास्ति। तत्र हेतुः—चेत्ये मिथो भेदिनि स युक्तः। इदं नीलम् इदं पीतमिति भेदशालिनि चेत्ये नीलं पीतं च वेद्मीति स युक्तोऽनुवृत्तः। एतदेव हृदयङ्गमीकरोति—भेदाश्रयः खलु सः। चेत्यधर्मस्य भेदस्याश्रय एव ह्ययम्। भेदो हि नाम व्यावृत्तरूपता। अभेदोऽनुवृत्तरूपता। देशकालकृतो भेदश्चेत्य एवास्ति। तद्भेदाश्रयभूते चित्पदे भेदभ्रमस्तदुपाधिनिबन्धन एव॥ १२॥

उक्तनयेन स्वरूपनिरूपणे न भेदः कश्चित् प्रकाशग्राहकयोः। अथ वेद्यमपि निरूप्यमाणं न प्रकाशाद् भिन्नमुपपद्यत इत्यभिप्रायेणाह—

स्वाङ्गे चिद्गगनात्मनि दुग्धोदनिभः स्वशक्तिलहरीणाम्।
सम्भेदविभेदाभ्यां सृजति ध्वंसयति चैष जगत्॥ १३॥

एष एव प्रकाशः स्वाङ्गे स्वस्वरूपे भित्तिभूते चिद्गगनात्मनि अनवच्छिन्नचिन्मये स्वशक्तीनां सम्भेदविभेदाभ्यां खेचर्यादिरूपाणां स्वरश्मीनां सम्भेदेन एकार्थग्रहणोन्मुखतया जगद् शिवादि सृजति अवभासयति विभेदेन, विज्ञातार्थवैमुख्येन ध्वंसयति संहरति च, यथोदधिर्लहरीणां सम्भेदेन तरङ्गबुद्बुदादीनि सृजति विभेदेन च

संहरति। शिवादिवस्तुग्रहणादर्वागपि गगनकल्पा चिदेवास्ति। अवबिभासयिषायां तु खेचरीगोचर्यादिक्रमेण शक्तीनामेककार्यपरतया बहिर्मुखीभावलक्षणेन सम्भेदेन सृजति। विमृष्टे वस्तुनि ताभिरेव कारणलयक्रमेण प्रत्यग्भावरूपं चिद्भेदमुपागताभिः संहरति। ताः शक्तयस्तच्च जगत् प्रकाशबहिर्भूततया नास्तीति प्रतिपत्तिदार्ढ्याय प्रकाशस्योदधित्वेन शक्तीनां लहरीत्वेनार्थसामर्थ्याच्च जगतस्तरङ्गादित्वेन रूपणं कृतम्। ततो जगत् तद्भेदस्तत्कारणभूताः शक्तयश्च विमृश्यमानाः प्रकाश एवेत्युपपादितं भवति ॥ १३ ॥

यतो ग्राह्यादि न किञ्चित् पृथगस्ति वस्तु, सर्वात्मकतया प्रकाश एवास्ति, अतो ग्राह्यादिभेदभ्रमसंस्कारोन्मूलनाय चितिरेवोक्तयुक्तिप्रत्यभिज्ञाता दाढर्यप्रतिपत्त्या भावनीयेत्याह—

रूपादिपञ्चविषयात्मनि भोग्यहृषीकभोक्तृरूपेऽस्मिन् ।
जगति प्रसरदनन्तस्वशक्तिचक्रा चितिर्भाव्या ॥ १४ ॥

यदेतद् भोग्यतत्साधनभोक्तृरूपं विश्वम्, तद् विचार्यमाणं रूपादिपञ्चविषयात्मकमेव भवति। तथा हि यदा रूपं भोग्यत्वेन विषयो भवति, तदा तद्ग्रहणसाधकं चक्षुस्तदात्मकं ग्रहीता च ताद्रूप्यमापद्यते। इत्थं रसादिष्वपीति भोग्यहृषीकभोक्तृरूपेऽस्मिन् जगति प्रसरदनन्तस्वशक्तिचक्रा व्याप्रियमाणनानाविधरश्मिपुञ्जा चितिर्भावनीया। अनेन वस्तूनामानन्त्यमिति, आनन्त्याद् भावनं दुश्शकमिति, चिद्व्यतिरिक्तत्वमेवैषां चेति ये भ्रमास्ते निरस्ताः ॥ १४ ॥

इत्थं जगत् पञ्चधा संक्षिप्य चिदात्मकत्वं चावस्थाप्य पुनर्भावनालाघवाय त्रिधा संक्षिप्योपदिशति चिदात्मकत्वम्—

सोमरविवह्निलक्षणभोग्येन्द्रियभोक्तृभानपिण्डात्मा ।
बिन्दुर्विमर्शधर्मा षण्णामेकोऽध्वनां प्राणः ॥ १५ ॥

भोग्यं सोमलक्षणं पराग्रूपत्वात्। इन्द्रियाणि रविलक्षणानि पराक्प्रत्यगात्मकत्वात्। भोक्ता वह्निलक्षणः प्रत्यगेकस्वभावत्वात्। एतत्त्रितयात्मकमेव विश्वम्, न व्यतिरिक्तं किञ्चित्। एषां भोग्यादीनां यो भानपिण्डो भोग्यत्वादिविशेषविगलनेन सामान्यात्मकं भानं तद्विमर्शमयं स बिन्दुरुच्यते। स बिन्दुरेक एव षण्णामध्वनां प्राणः उदयविश्रान्तिहेतुत्वादात्मभूतः। सोमाद्यभिमानिनीनां तिसृणां देवतानां पारमार्थिकं स्वरूपं विचार्यमाणं भोग्यादित्रयात्मकमेव, न तु तल्लीलाविग्रहमण्डलादिस्वरूपम्, मण्डलादेर्वेद्यरूपत्वेनेन्द्रियत्वभोक्तृत्वानुपपत्तेः। भोग्यादेश्च भोग्यादिविशेषरूपेण प्रतीयमानस्य निर्विशेषप्रतीत्यात्मको बिन्दुः प्राण इति बिन्दोरेव विकृतिः षड्विधोऽयमध्वा ॥ १५ ॥

एतदेव विशदीकर्तुमाह—

व्यक्तं हि पदार्थात्मकमिदं जगन्नित्यमेव तल्लग्नम् ।
शक्त्यात्मकमव्यक्तं तत्रैव पुनर्निमज्जति च ॥ १६ ॥

जगदेतद् द्विविधं स्थूलं सूक्ष्मं च । स्थूलं व्यक्तमुच्यते । सूक्ष्मं च शक्तिरुच्यते । तत्र पदार्थात्मकं यदेतद् व्यक्तं जगद् तद् नित्यमेव तल्लग्नम् उदयादिदशासु सर्वदा बिन्दुशक्तिलग्नमेव । यत् पुनरव्यक्तं शक्त्यात्मकम्, तदपि तत्र निमज्जति । स्थूलतया सूक्ष्मतया वा प्रतीयमानं यद्यावदस्ति जगत्, तत् सर्वं प्रत्यवमर्शात्मकचितिबहिर्भावेन नोपपद्यते, जलबहिर्भावेन तरङ्गादिवदिति यावत् ॥ १६ ॥

अथ येयं चितिः, तामेव नानाविधसिद्ध्यपेक्षया विविधेति परिकल्प्य केचिदुपासते, न पुनरुपास्यं वस्त्वन्तरमस्तीत्यत आह—

षोडशधैनं नवधा षोढा भिन्दन्त्यथ त्रिधा च बुधाः ।
आधारभेदलक्ष्यं बहुसिद्धिकरं च सेत्स्यन्तः ॥ १७ ॥

एनम् उपपादितरूपं बिन्दुम् आधारभेदलक्ष्यं षोडशाद्यात्मना भिन्नेष्वाधारेषु लक्ष्यत्वेन परिक्लृप्तम् । अत एव बहुसिद्धिकरम् आधारभेदोपाधिना सिद्धिवैविध्यावहं सेत्स्यन्तः साधकाः षोडशधा भिन्दन्ति आधारषोडशके षोडशात्मेति भावयन्ति, तथा नवधा षोढा त्रिधा च । अस्य षोडशादिरूपेण भेदेन आधाराणां षोडशादिभेदयोग उपाधिः, स्वरूपे भेदासम्भवात् । सेत्स्यन्त इति वदतोऽयमभिप्रायः—अलब्धैतत्स्वरूपप्रत्यभिज्ञानसिद्धयो मितयोगिन एवैवं भेदेनोपासते, न तु सिद्धाः । ते तु चिदैक्यप्रतिपत्तिदार्ढ्यलक्षणजीवन्मुक्त्येकरसाश्रितिमैकात्म्येनैव सन्ततमुपासते ॥ १७ ॥

अथान्वयव्यतिरेकाभ्यामण्डस्य भावाभावरूपं बिन्दुं मार्तण्डत्वेन निर्भुवन् स त्वमेवेत्युपदिशति युगलकेन—

यस्य विमर्शस्य कणः पदमन्त्रार्णात्मकस्त्रिधा शब्दः ।
पदतत्त्वकलात्मार्थो धर्मिण इत्थं प्रकाशस्य ॥ १८ ॥
स्वेन विना मृतमण्डं स्वावेशबलेन जीवयन्नेकः ।
मार्तण्डः परमोऽसौ परनभसि न किं त्वया दृष्टः ॥ १९ ॥

यस्य विमर्शस्येति वैयधिकरण्यम् । इत्थं प्रकाशस्य धर्मिणो धर्मित्वेनैवमुपपादितस्य प्रकाशस्य धर्मभूतो यो विमर्शोऽहन्तेति निरुक्तचरः, तस्य कणोंऽशमात्रमयं वर्णपदमन्त्रात्मकतया तत्त्वभुवनकलात्मकतया च प्रतिस्वं त्रैविध्यात्

षडात्मकः शब्दार्थरूपोऽध्वा। असौ परमो मार्ताण्डो यस्य धर्मिण इति यः परामृष्टचरः प्रकाशः, असावेवापरस्य लौकिकस्य मार्ताण्डस्य प्रकाशकत्वात् परमो मार्ताण्डः। कथमस्य मार्ताण्डता। स्वेन विना स्वस्य विश्वोन्मुखीभावमन्तरेण मृतमण्डं निमिषितमेव। तच्छिवादि विश्वं स्वावेशबलेन स्वस्यैतदुन्मुखीभावमहिम्ना यतो जीवयति उन्मेषयति। ईदृशोऽसौ मार्ताण्डः परनभसि भौतिकस्य नभसोऽवच्छेदकत्वात् परे हृदयाकाशे त्वया न किं दृष्टः। किमिति निषेधकाका दर्शनाभावं कालत्रयेऽपि निरस्यति। योऽसौ प्रकाशरूपो मृतस्याण्डस्यानुप्राणनात् परमो मार्ताण्डः, स परनभोव्यपदेशयोगिन्यभिव्यक्तिस्थाने हृदये त्वया सर्वदा दृश्यत एव, तस्यादर्शने वस्त्वन्तरदर्शनासम्भवात्। अतो हृदयावच्छिन्नतयैव प्रतीयमानो योऽयमनवच्छिन्नस्ते प्रकाशः, स एव त्वमिति प्रत्यभिज्ञापितमिति ॥ १८-१९ ॥

प्रत्यभिज्ञातस्य विश्वोत्पादकत्वं विविच्य दर्शयति—

चिद्गगनक्षीरोदं स्वयमिच्छामन्दरेण संक्षोभ्य।
तच्छक्तिवीचिभिरसावुत्थापयतीन्दुमण्डाख्यम् ॥ २० ॥

अनवच्छिन्नचिन्मयमब्धिं स्वयं स्वातन्त्र्येणैव इच्छामन्दरेण संक्षोभ्य अवबिभासयिषालक्षणेन गिरिणा कार्योन्मुखतां नीत्वा तच्छक्तिवीचिभिः खेचर्यादिरूपस्वशक्तिरूपैरेवोर्मिभिरण्डाख्यमिन्दुमुत्थापयति स्वेच्छावशतः स्वाभिन्नमेव विश्वं स्वभित्तावेव त्वमिति प्रत्यभिज्ञापितः प्रकाशोऽवभासयतीत्यर्थः ॥ २० ॥

अथाण्डस्यावान्तरकक्ष्या विभागेनोपन्यस्य स्वात्मभित्तिलग्नतां स्वानुभवसाक्षिकतया दर्शयति—

शक्तिर्माया प्रकृतिः पृथ्वीति चतुर्विभागमण्डं यत्।
यश्च विभागोऽस्य पुनर्बहुधा सर्वं स्थितं मयि तत् ॥ २१ ॥

शक्तिर्बिन्दुः। तेन कारणेन शुद्धाध्वलक्षणं कार्यमुपलक्ष्यते, मायया मिश्राध्वात्मकम्, प्रकृत्या शुद्धेतरात्मकम्, पृथिव्या स्थूलभोग्यभोगायतनादि। इति चतुर्विभागं यदण्डं यश्चास्य विभागो भुवनादिरूपः, तत् सर्वं मयि स्थितं परस्मिन्नेव प्रकाशे वर्तते। स्थितमिति भूतार्थतायामविवक्षा, स्थितेस्त्रैकालिकत्वाद् इति शिवम् ॥ २१ ॥

इति विरूपाक्षपञ्चाशिकायां विवृतिसमेतायां प्रकाशैकात्म्यविवेचनस्कन्धो द्वितीयः ॥

२

# अथ तृतीयः स्कन्धः

इयता सन्दर्भेण विश्वात्मकत्वमात्मनो युक्त्यनुभवोपपन्नतया प्रतिपादितम्। अथ निश्चितस्य वैश्वात्म्यस्यासम्भावनया विपरीतभावनया वोपरागो मा भूदिति तृतीयस्कन्ध आरभ्यते। तत्र मयि स्थितमिति कथनेनाधाराधेयभावलक्षणेन योऽयं भेदः प्रतीतः, तं व्यतीहारेण निरस्यति—

अहमेकोऽनस्तमितप्रकाशरूपोऽस्मि तेजसां तमसाम्।
अन्तः स्थितो ममान्तस्तेजांसि तमांसि चैकस्य ॥ २२ ॥

अनस्तमितप्रकाशरूपो नित्योदितप्रकाशमयः एकोऽद्वितीयः तेजसां तेजस्त्वेनाभिमतानां बुद्ध्यादिकरणानामर्कादिज्योतिषां च अन्तः स्थितोऽस्मि प्रकाशमानत्वेन तेषामन्तरात्मतयाऽहमस्मि। तथा तमस्त्वेन प्रकाशमानत्वात् तमसां बिन्दुमायादीनां चान्तः स्थितोऽस्मि। प्रकाशात्मनि मय्यन्तरवस्थिते तेजस्तेजस्तया तमस्तमस्तया च चकास्यादित्याशयः। तानि तेजांसि तमांसि च ममान्तः स्थितानि प्रकाशात्मकोऽहमेक एव भावाभावात्मकजगद्रूपतया परिस्फुरामि। अतो न भेदस्याशङ्कितस्यावकाशः कश्चिदिति भावः ॥ २२ ॥

इत्थं ग्राहकसामान्यापेक्षया ग्राह्यापेक्षया च चितेरेवाभेदमुपपाद्य 'स त्वम् अहम्' इति त्रिस्कन्धकस्याभासस्य भेदाभावं विवेचयितुमाह—

प्रथमो मध्यम उत्तम इति पुरुषा भेदिनस्त्रयोऽपि मिथः।
मत्तस्तु महापुरुषात् प्रत्यवमर्शात्मनो न बहिः ॥ २३ ॥

'सः' 'त्वम्' 'अहम्' इति विजातीयव्यपदेशयोगाद् मिथो भेदिनः परस्परव्यावृत्तरूपा य एते प्रथमो मध्यम उत्तम इति त्रयः पुरुषाः, सर्व एवैते प्रत्यवमर्शात्मनोऽनुवृत्ततया महापुरुषान्मत्तो न बहिः मद्व्यतिरिक्तं न तत्त्वान्तरम्। य एते प्रथमादयः पुरुषास्ते मिथो व्यावृत्तरूपा अपि प्रत्यवमर्शात्मकमदायत्तसर्गापवर्गत्वाद् मद्वित्तौ मदेकात्मतया प्रतीयमानत्वाच्च न मद्बहिः ॥ २३ ॥

ननु प्रथममध्यमपुरुषप्रतियोगित्वेन अहमित्यवच्छिद्यसे, अनवच्छिन्नप्रकाशात्मकश्चासि। इत्थं भेदे कथमैकात्म्यमित्यत आह—

युष्मच्छेपापोहवदहमिति यद्भाति भिन्नमिह रूपम्।
तदिदं भागविभेदो न त्वहमेकोऽस्मि यन्नित्यम् ॥ २४ ॥

युष्मदपोहवच्छेषापोहवच्च मध्यमप्रथमपुरुषाभ्यां व्यावृत्तमित्यर्थः। अत एव भिन्नं तदुभयप्रतियोगि यदेतद् अहमिति रूपं भाति। तदिदं भागविभेदः स इतिवत् त्वमितिवच्च ममांशविशेषः कश्चित्, न त्वहं न तु मे पारमार्थिकं स्वरूपम्। तत्र हेतुः—एकोऽस्मि यन्नित्यं नित्यम् अनवच्छिन्नप्रकाशैकघनोऽस्मि यतः। प्रकाशैकात्मकत्वमनवच्छिन्नत्वात् सदातनं सत् तात्त्विकं मे स्वरूपम्। अहमिति तु रूपमवच्छिन्नत्वादागन्तुकं सत् स इत्यादिवदंशविशेष एवेति भावः॥ २४॥

यथा चैवं ग्राहको विशेषतो विविच्यमानोऽपि ममैवांशः, तथा ग्राह्यमपि विशेषतो विविच्यमानं ममैव शक्तिप्रसर इत्याह—

द्यावापृथिवीदेशः कालोऽह्नो रात्रिरिति ययोः प्रसरः।
ते भानतिरोधिकृती शक्ती मे भाववृन्दस्य॥ २५॥

द्यौ पृथिवी चेति योऽयं देशः, यश्चाहो रात्रिश्चेति कालः, तदेतत् क्रोडीकृतग्राह्यान्तरं ग्राह्यद्वयं ययोरेव प्रसरः, ते भाववृन्दस्य भानतिरोधाने ममैव शक्ती। सर्वस्यैवार्थजातस्य यद् भानं यच्च तिरोधानं ते हि ममैव शक्ती। शक्तिसम्भेद एव खलु मे पदार्थानां भानन्, विभेद एव तिरोधानमित्युक्तं प्राक् "स्वशक्तिलहरीणाम्। सम्भेदविभेदाभ्यां सृजति ध्वंसयति च" (१३ श्लो०) इति। इत्थं च भावानां भानतिरोधानरूपे ये एते शक्ती, तयोरेव प्रसरभूतोऽयं देशः कालश्च भावप्रतियोगितया अभावप्रतियोगितया च स्थितः। स मद्बहिर्भावेन नास्तीत्यर्थः॥ २५॥

भानतिरोधानाभ्यां यत् कृत्यान्तरमुपलक्षितम्, तद् विशेषतो विविच्य दर्शयति—

धूमावती तिरोधौ पुष्टौ ह्लादा च भास्वती भाने।
क्षोभे च परिस्पन्दा व्याप्तौ विभ्वीति शक्तयः पञ्च॥ २६॥

धूमावतीति मे शक्तिः प्रथमे, पुष्टौ आप्यायने ह्लादाख्या, अवभासने भास्वती, क्षोभे परिस्पन्दने स्पन्दाख्या, व्याप्तौ विभ्वीति पञ्च मे शक्तयः॥ २६॥

शक्तीनामप्रत्यक्षत्वात् कार्यमुखेनैव स्वरूपनिश्चय इत्यभिप्रेत्य कार्यमुखेनैव ता निरूपयति—

धूमावती पृथिव्यां ह्लादाप्सु शुचौ तु भास्वती प्रथते।
वायौ स्पन्दा विभ्वी नभसि व्याप्तं जगत् ताभिः॥ २७॥

इत्थं च सति जगत् षडध्वात्मकं विश्वमेताभिर्व्याप्तं ममैव धूमावत्यादिभिः पञ्चभिः शक्तिभिः क्रोडीकृतम्। अनेन सर्वदा पञ्चकृत्यकारित्वं चिदात्मनो दर्शितमिति मन्तव्यम्। तथा हि—अवभासनं सृष्टिः, स्थापनं क्षोभः संहरणं तिरोधानं स्वशब्देनैवोक्तम्। व्याप्तिरनुग्रहः ॥ २७ ॥

एवमाभासनादिभिर्निष्पादितं जगद्विमर्शशक्तिस्पर्शमात्रेण प्रकाशैकार्णवतामापद्यत इत्याह—'निजधर्मिणम्' इत्यादिभिः 'कात्स्न्र्येनाविष्टमिव' इत्यन्तैश्चतुर्भिः श्लोकैः—

निजधर्मिणं प्रकाशं स्वरूपयन्ती प्रकाश्यवर्गस्य।
शक्तिर्विमर्शरूपा शरीरयत्यखिलमस्य मम ॥ २८ ॥

विमर्शरूपा मम शक्तिः प्रत्यवमर्शरूपिणीयं चितिः, अखिलं मम शरीरयति शिवादिधरण्यन्तं विश्वं मदेकात्मतामापादयति। कीदृशी? निजधर्मिणं धर्मभूतायाः स्वस्योदयलयादिभित्तिभूतमाश्रयं प्रकाशम् उपलब्ध्येकरूपं चैतन्यं प्रकाश्यवर्गस्य स्वरूपयन्ती ज्ञेयजातस्य तात्त्विकस्वरूपत्वेन व्यवस्थापयन्ती सर्वस्यैवास्य वेद्यजातस्य पर्यन्ते निर्बाधमवशिष्यमाणं स्वरूपं प्रकाश एवेति स्वानुभवसाक्षिकमुपदर्शयन्ती ममेयं विमर्शरूपा चितिशक्तिरखिलमेतच्छिवादिकमध्वानं मदीयमेवापादयति ॥ २८ ॥

तथाहि—

ज्ञातृज्ञानज्ञेयात्मकमखिलं मद्विमर्शवह्निशिखा।
दग्ध्वा प्रकाशरूपं शुभ्रं भस्मावशेषयति ॥ २९ ॥

मद्विमर्शवह्निशिखा विमर्शोऽयं सर्वात्मव्यापकेन रूपेण सर्वाध्वव्यापकज्वालात्वेन प्रतीयते। ममायमीदृशो विमर्शो ज्ञातृज्ञानज्ञेयात्मकम् अखिलं दग्ध्वा ज्ञातृत्वादिविशेषांशांस्तत्क्षणमेवोपमृद्य प्रकाशरूपं प्रकाशसामान्यात्मकं शुभ्रम् अकृत्रिमानन्दघनत्वात् क्लेशादिभिरकलुषितं भस्म सन्मात्रां विभूतिम् अवशेषयति तदेकार्णवीकरोति ॥ २९ ॥

ननु विमर्शसमनन्तरमेव वेद्यांशे भेदलय इति युक्तम्। ग्राहकांशे तु विमर्शनक्रियाकर्तुर्भेदेनावस्थानान्न कदाचिद् भेदकलानिवृत्तिरित्यत आह—

अकठोरमद्विमर्शज्वालाग्रस्ते तिरोधिमद् भानम्।
अङ्गारवदिव भस्म प्रथते तत्राणुवर्गस्य ॥ ३० ॥

तत्र ज्ञातृज्ञानाद्यात्मनि प्रक्रान्तेऽखिले अकठोरमद्विमर्शज्वालाग्रस्ते अहं विमृष्टवानित्यहमंशे भेदावशेषणाद् अनतिप्रकाशितदाहशक्तिना मद्विमर्शेनाक्रान्ते सति अणुवर्गस्य भानं ग्राहकवर्गस्यावशिष्टा अहमिति प्रतीतिः। कीदृक्? तिरोधिमद्

उपसंहृतत्वेद्यतया वेद्यांशाविनाभूतप्रसरेण भेदेनाच्छादितम् अङ्गारवद् भस्मेव प्रथते अन्तस्थितसूक्ष्मङ्गारभसितराशिकल्पतया प्रतीयते ॥ ३० ॥

यदि स एव दाहस्तीव्रस्तदा पश्येत्याह—

कात्स्न्येंनाविष्टमिवारण्यपुराद्यग्निना मयापि जगत् ।
चित्रमवधूय भेदं ननु गृह्णात्येकरूपत्वम् ॥ ३१ ॥

मया सर्वभेदोपसंहरणैकस्वभावविमर्शात्मना कात्स्न्र्येनाविष्टं निश्शेषतो विमृष्टं जगद् एतच्छिवादिभूम्यन्तम् अग्निना कात्स्न्येंनाविष्टमरण्यपुरादिकमिव चित्रं नानाविधं भेदम् अवान्तरविशेषम् अवधूय स्वात्मनि निमग्नं कृत्वा एकरूपत्वं गृह्णाति प्रकाशैकघनीभवति । नन्वित्यनेनास्य सर्वानुभवसिद्धतामाविष्करोति ॥ ३१ ॥

कात्स्न्र्येन विमर्शाविष्टे जगति सर्वभेदभ्रमोपशमो भवतीत्युक्तम्। तमेव कात्स्न्र्येनावेशप्रकारं विविच्य दर्शयति—

अन्तर्मुखं स्वरूपं ज्ञेयस्य ज्ञानमस्य तु ज्ञाता ।
ज्ञानस्य ज्ञातृतनोश्चितिरेकाऽस्यास्त्वहं नान्यः ॥ ३२ ॥

इह हि भावानां द्वे स्वरूपे भवतो बहिर्मुखमन्तर्मुखं च । तत्राद्यं स्थूलं व्यावृत्तमपारमार्थिकं च । यत् पुनरन्तर्मुखं तत् सूक्ष्ममनुवृत्तरूपं पारमार्थिकं च । इत्थं स्थिते ज्ञेयस्य घटादेर्यद् अन्तर्मुखं पारमार्थिकं स्वरूपं तद् घट इति ज्ञानमेव, बाह्याकारस्य तत एवोदयात्, तद्भित्तिलग्नत्वेनैवावस्थानात्, तत्रैव च लयात्, अस्य तु ज्ञाता घटज्ञानस्यापि तदुदयस्थितिनिदानभूतो ग्राहक एवाभिमन्तृतारूपोऽन्तर्मुखं रूपम्। ज्ञानस्य ज्ञातृतनोश्चितिरेका उक्तनयेन ज्ञेयाविभेदिनो ज्ञातृतामापन्नस्य प्रत्यवमर्शरूपा चितिरेवान्तरतमं तत्त्वम्। अस्यास्त्वहं नान्यः चितेरपि प्रत्यवमर्शलक्षणायाः प्रत्यवमर्शांशनिमज्जने निष्कृष्टप्रकाशात्मकः "अहमिति स एक उक्तः" ( १० श्लो० ) इति निरूपितचरोऽहमेव काष्ठाप्राप्तं तत्त्वम्, नान्यः कश्चिन्मद्व्यतिरिक्तोऽर्थः । इन्द्रियार्थसम्पातसमनन्तरमयं घट इति योऽयं विकल्प उत्पद्यते, तदुत्पत्तेर्वाग् घटस्य घटत्वेन वा वस्त्वन्तरत्वेन वा व्यपदेष्टुमशक्यत्वाद् ज्ञेयस्यान्तर्मुखं स्वरूपं ज्ञानमेव । ज्ञानस्यापि ज्ञात्रेकायत्तोदयलयस्य ज्ञातैवान्तरतमं रूपम्, ज्ञातुरप्यनेनैव नयेन चितिरेव। चितेरप्यहमेवैकोऽनुपचरितं तत्त्वम्। इत्थं कात्स्न्येंन विमर्शाग्न्यावेशे निर्विवादमेकस्वरूपत्वं ग्राह्यादीनां प्रकाशेन सहेत्युपदिष्टं भवति ॥ ३२ ॥

इत्थं ज्ञेयादित्रयस्य प्रकाशापेक्षया भेदाभावमुपपाद्य मिथोऽपि न भेदः कश्चिदिति विवेचयति—

अक्रमता मे क्रमिकं ज्ञात्राद्यं सक्रमाक्रमा तु चितिः ।
मद्वद् ज्ञाता ज्ञानं शक्तिरिव त्रितयवद् ज्ञेयम् ॥ ३३ ॥

अक्रमता मे निकृष्टप्रकाशपरमार्थस्य मम चित्यादिचतुष्टयापेक्षया स्वापेक्षया चाक्रमत्वमेव, सर्वानुस्यूतरूपतया व्यावृत्तिलवस्याप्यसम्भवात् । क्रमिकं ज्ञात्राद्यं ज्ञाता ज्ञानं ज्ञेयमिति मिथो व्यावृत्तरूपतया प्रतीतेस्त्रितयमेतत्क्रमिकम् । चितिस्तु सक्रमाऽक्रमा ज्ञात्राद्यपेक्षया सक्रमा, मदपेक्षया त्वक्रमेति द्विरूपा । इति प्रबुद्धस्य ते प्रतीतिप्रकाराः । वस्तुतस्तु मद्वद् ज्ञाता यथा चित्यादिचतुष्टयानुवृत्तेर्ममाक्रमत्वम्, तथा ज्ञानज्ञेयानुवृत्तेस्तदुभयापेक्षया मदपेक्षया च ज्ञातुरक्रमत्वम् । ज्ञानं शक्तिरिव यथा चितिज्ञात्राद्यपेक्षया सक्रमा मदपेक्षया त्वक्रमेति स्थितम्, तथा ज्ञानमपि ज्ञेयापेक्षया सक्रमं मदपेक्षया त्वक्रममिति शक्तिरिव । त्रितयवद् ज्ञेयं ज्ञाताहं चेति, ज्ञानं शक्तिश्चेति, ज्ञेयान्तरं चेति त्रितयम् ज्ञेयम् एतत्त्रितयवत् । यथा ज्ञाताहं चेत्यक्रमौ तद्वदावामप्यपेक्ष्य ज्ञेयमक्रमम् । अनयैव रीत्या शक्तिज्ञानापेक्षया सक्रमाक्रमम् । चितिस्तूभयापेक्षयोभयरूपेति यो भ्रमः स निरस्तः, यतो ज्ञाताहं चेति, ज्ञानं शक्तिश्चेति, ज्ञेयं त्रितयं चेति न तत्त्वान्तरम् । अत्रैतदाकूतम्—इदं वनमित्यादौ तर्वपेक्षया वनस्य वनापेक्षया तरूणां चानुवृत्तिरेवेति सर्वत्राभेद एव । यदा तु चूतश्चम्पक इत्यादिप्रतीतिः, तदा वनापेक्षया चूतचम्पकयोरनुवृत्तिरिति न भेदः, परम्परापेक्षया तु व्यावृत्तिरेवेति भेदः । इत्थं प्रकृतेऽपि प्रकाशापेक्षया समष्टिव्यष्ट्योश्च न भेदः, परस्परापेक्षया तु यथायोग्यमवस्थानम् । अतः सर्वत्रानुवृत्तक्रमत्वम्, सक्रमत्वं द्वैरूप्यं च व्यावृत्तमिति प्रकाशैकात्म्यमेव पारमार्थिकम्, भेदस्त्वविमर्शस्यैव विलसितमिति ॥ ३३ ॥

एतदेव विविच्य दर्शयति—

पीतादिषु हि न नीलं तेष्वत्र च भाति चाक्षुषं ज्ञानम् ।
न श्रौत्रादिषु तदपि ज्ञाता तेष्वत्र चानुगतः ॥ ३४ ॥

यदुक्तं ज्ञेयं ज्ञेयान्तरापेक्षया क्रमिकमेवेति, तदुदाहर्तुमाह—पीतादिषु हि न नीलं यदा हि पीतमिति प्रतिपत्तिः, न तदा नीलम् । एवं मिथो व्यावृत्तरूपत्वाद् ज्ञेयं ज्ञेयान्तरापेक्षया क्रमिकमेव । यच्चोक्तं ज्ञानशक्तिरिव सक्रमाक्रममिति, तदुपदर्शयति—तेष्वत्र च भाति चाक्षुषं ज्ञानं तेषु पीतादिष्वत्र नीले च, न श्रौत्रादिषु । तदपि श्रौत्रं श्रावणं ज्ञानं, तदपि चाक्षुषम् । एवं सक्रमाक्रमत्वाद् ज्ञानं शक्तिरिवेति युक्तम् । यच्चोक्तं मद्वद् ज्ञातेति, तदर्थमाह—ज्ञाता तेष्वत्र चानुगतः । तेषु पीतनीलादिषु चाक्षुषेषु । अत्र श्रौत्रादिके । अतः सर्वत्रानुवृत्तरूपत्वान्मद्वद् ज्ञातेत्यपि सिद्धम् ॥ ३४ ॥

यत इत्थमर्थस्वरूपनिर्णयः, ततः—

ज्ञातारं मां ज्ञानं शक्तिं त्रितयात्मकं पुनर्ज्ञेयम् ।
अविकल्पं भावयतः सोऽहं सा तत् त्रयं तच्च ॥ ३५ ॥

ज्ञातारं मामविकल्पं भावयतः सोऽहम् उक्तेन नयेन विकल्पहेतोरसम्भवाद् ज्ञातृप्रकाशयैकात्म्येन भेदसंस्कारोपशमादन्तर्दृढप्रतिपत्त्या परिशीलयतस्तद्भेदभ्रमापगमलक्षणा सिद्धिर्भवति। तथा ज्ञानं शक्तिम् अविकल्पं भावयतः सा तद् उक्तनयेनैव शक्तिज्ञानयोरभेदभावनादार्ढ्येन तदभेदप्रत्यभिज्ञानरूपा सिद्धिः। तथा च त्रितयात्मकं पुनर्ज्ञेयं तथा भावयतः त्रयं तच्च। वेद्यस्य प्रकाशज्ञातृभ्यां शक्तिज्ञानाभ्यां ज्ञेयान्तरेण सह ( च ) स्थितो योऽयं दुरुत्तरो भेदभ्रमः, तस्य समूलोन्मूलनरूपा सिद्धिः सद्य एव। अत्र 'सोऽहं' 'सा तत्' 'त्रयं तच्च' इत्येषु त्रिष्वपि वाक्येषु भवतीत्यादिका क्रिया नोपात्ता, अपि तु तादात्म्यस्य स्वरूपमेव निवेदितम्। अतो नैतदेषामैकात्म्यं साध्यम्, अपि तु नित्यसिद्धमेवोक्ताभिर्युक्तिभिः प्रत्यभिज्ञायत इत्यनुसंहितमाचार्येण ॥ ३५ ॥

तत्र ज्ञातुः क्रमिकत्वस्य नित्यसोपाधिकत्वात् प्रकाशतादात्म्यं नित्यसिद्धमित्युपदिशति—

सन्तानान्तरवाहे ज्ञाता व्यावृत्तभासनः क्रमिकः ।
जीवाख्यो मद्योगान्मद्वत् स्यादक्रमाभासः ॥ ३६ ॥

सन्तानान्तरवाहे नीलसंकल्पविकल्पाद्येकसन्तानसमनन्तरं पीतसङ्कल्पविकल्पादौ सन्ताने वहति सति व्यावृत्तभासनो ज्ञाता क्रमिकः 'नीलस्यावभासकोऽस्मि' 'पीतस्यावभासकोऽस्मि' इति परस्परपरिहाररूपेणावस्थितग्रहणत्वाद् ग्राहकः क्रमवान्। यदा चेत्थं क्रमिकता, तदैव चासौ जीवाख्यः, वस्तुतः शिवस्य सतोऽस्य जीव इति संज्ञा तत्कालमात्रमेव। मद्योगात् तु यदेतन्मयि क्रमिकत्वं तद् वेद्योपाधिकमेव। वस्तुतस्तु नीलस्य पीतस्य चावभासकत्वादनुवृत्तः सन् सर्वदा सर्वानुवृत्तप्रकाशात्मक एवास्मीत्येवंरूपत्वान्मम परप्रकाशस्य योगाद्वस्तुविमर्शलक्षणात् संस्पर्शात् मद्वत् स्यादक्रमाभासः। यथा प्रकाशो नित्यमक्रममेव भासते, तथा ग्राहकोऽपि। तस्यामेव पीतादिग्रहणदशायां प्रकाशैकात्म्येनाक्रममेवावभासते। अनेन प्रबुद्धस्य विश्वप्रतियोगित्वं यदा तदैव शिवत्वम्, यदा तु प्रतिनियतार्थप्रतियोगित्वं तदा ग्राहकत्वमिति द्वैरूप्यानतिक्रमाद् जीवत्वसंस्कारः सदानुवर्तत एवेति योऽयं भ्रमः स्थितः, स दूरतरमुत्सारित उक्तनयेन पीतादिग्रहणदशायामप्यक्रमपरिपूर्णैकघनप्रकाशात्मकशङ्करस्वभावत्वादित्युपदिष्टं भवति ॥ ३६ ॥

अथ वेत्त्रतिरिक्ततया वेद्यमिति वेदनमिति च कक्ष्याद्वयकल्पनं यावतीमेवास्ति विमर्शवन्ध्यां कालकलां तावदेवास्ति वेद्यं वेदनं च। विमर्शे तु कृते नोभयमप्यस्ति प्रकाशबहिर्भावेनेत्युपदिशति—

वेद्यं स्वक्रमविद्धां वित्तिमनुप्रविशदङ्गविषयाद्यम् ।
वेदितरि वित्तिमुखतो लीनं तल्लक्षणं भवति ॥ ३७ ॥

अङ्गविषयाद्यं भोगायतनभोग्याद्यात्मकं देहपीतादि वेद्यम् । स्वक्रमविद्धां वित्तिमनुप्रविशद् "अर्थेनैव विशेषोऽस्ति निराकारतया धियाम्" इति नयेन योऽर्थ उपाधिस्ताद्रूप्यमापद्यमानं वेदनमनुप्रविशति, ग्रहणकौतुकोपरमादिन्द्रियव्यापारनिवृत्तौ पीतज्ञानं मम जातमिति वेदनात्मतामापद्यते । अथ वेदितरि वित्तिमुखतो लीनं वित्तिमेव मुखीकृत्य वित्तिलयसमग्रे वेदितरि लीयते । तथा लीनं सत् तल्लक्षणं भवति ऊर्मौ लीनम् ऊर्मिलयमुखेनाब्धौ बुद्बुदादीव तदेकात्मतां वस्तुतः सतीमेवावलम्बते । इह प्रकाशस्यैव शिवादिवस्तुतदुदयस्थित्यादितद्भेदादिरूपप्रपञ्चात्मना स्फुरणात् प्रकाशबहिर्भूतं न किञ्चिदुपलभ्यते, न चोपपद्यते, नाप्युपयुज्यते । अतो-वेत्तृवेदनादिविकल्पानामूर्म्यादिवत् तदभिन्नतयैव यदुन्मज्जनं तदेव वेत्त्रादिवस्तु सत्ता तदुदयादिस्तद्भेदश्च । अस्यार्थस्यैवंविमर्श एव शिवत्वम् । अमन्दो विमर्शः प्रबुद्धता । अविमर्शस्तु पशुत्वमित्युपदेशनिष्कर्षः ॥ ३७ ॥

अथ यथा वेदकस्य 'सः' 'त्वम्' इत्यादिप्रत्ययविषयतया भेदमाशङ्क्य परिहृतः "प्रथमो मध्यमः" ( २३ श्लो० ) इत्यादिना, तथैव वेद्यस्यापि स्मृत्यादिप्रत्ययविषयतया भेदानाशङ्क्य परिहरति—

स्मृत्यनुभवानुसंहितिवशतस्तज्जगदिदं तथा तदिदम् ।
स्वैर्यहमाभासयिता भिन्नं चापोहनेन मिथः ॥ ३८ ॥

स्मृतिवशात् तदिति, अनुभववशाद् इदमिति, अनुसंहितिः प्रत्यभिज्ञा तद्वशात् तदिदमिति च शिवादि जगत् स्वैर्यहमाभासयिता स्वतन्त्रोऽहं सृजामि । कथं भिन्नं चापोहनेन मिथः मिथो व्यावर्तनेन भिन्नं चकारादभिन्नं च । सोऽयं स्वैरिण्णो महिमा । मिथो व्यावर्तनस्यान्यान्यनिमेषरूपत्वाद् भिन्नतया सृजामि, उक्तयुक्तिभिः प्रत्यवमर्शने कृते व्यावृत्त्यपगमादभिन्नतया च, विमर्शस्य व्यावृत्त्यात्मकनानानिमेषप्रसनैकस्वभावत्वात् । विमर्शशैथिल्ये हि 'तद्' 'एतद्' इत्यादि व्यावृत्तरूपतोदयः, कृते तु विमर्शे तदादिविशेषविगलनात् प्रकाशैकसाम्राज्यमिति भावः ॥ ३८ ॥

उक्तरीत्या प्रकाशमेव भित्तित्वेनाश्रित्य तदभिन्नतयैव तदेतदादिभेदानामुदयलयाद्यनभ्युपगच्छतो भेदवादिनो बाधकं तर्कमाह—

स्मृतिरनुभवस्य भानं सोऽर्थस्य द्वौ सहानुसन्धानम् ।
त्रितयमपि मां विनैकं क्रमरहितं न घटते विदुषाम् ॥ ३९ ॥

अनुभवस्य भानम् अयं नील इत्याद्यर्थविषयस्य ज्ञानस्य यदेतद् भानं, तन्नीलाद्यर्थव्यपेक्षया स्मृतिः । सोऽर्थस्य स इति स्मृतिमूलभूतानुभवः परामृश्यते । अर्थस्ये-

त्यत्र भानमित्युनुकृष्यते। अर्थस्य भानं त्वनुभव इत्यर्थः। द्वौ सह तावेतौ स्मृत्यनुभवौ द्वावपि दृष्टचरार्थप्रतिसन्धानवेलायामेकप्रत्ययतापन्नौ अनुसन्धानं प्रत्यभिज्ञोच्यते। तदेतद् क्रमिकं त्रितयमपि क्रमरहितं मामेकं विना न घटते सर्वप्रमितिभाजनमत एवानुस्यूतं प्रकाशमेकमन्तरेण नोपपद्यते। यद्यक्रमिकः सर्वानुसन्धाता प्रकाशो नाभ्युपगम्येत, तदा क्रमिकाभिमतं तदेतदित्याद्यपि निर्भित्तिकं चित्रमापद्येतेत्यर्थः॥ ३९॥

यत इत्थम्, अतः—

अस्तमितमर्थजातं भात्वा भिन्नमिव रुद्धतद्भानम्।
मद्भानैकात्म्येन स्रोत इवाब्धौ स्थितं हि मयि॥ ४०॥

अर्थजातं भिन्नमिव भात्वा वस्तुतो भेदासम्भवाद् इदंनीलज्ञानस्याप्युपशमावसरे नीलमस्तमितमिति च भानं रुणद्धि प्रकाशस्यान्तरत्वमज्जयति। तथाभूतं तु मद्भानैकात्म्येन वर्तते। अथार्थजातमपि प्रकाशात्मकमेव प्रान्ते भवतीति भावः॥ ४०॥

इति श्रीविरूपाक्षपञ्चाशिकायां विवृतिसमेतायां
विमर्शस्कन्धस्तृतीयः॥

———

३

# अथ चतुर्थः स्कन्धः

अथ चतुर्थो विभूतिस्कन्ध आरम्भणीयः। तत्र विभूत्याविर्भावाङ्गत्वेनाप्रबुद्धादीनां प्रतीतिप्रकारः प्रथमं निरूप्यते 'मत्स्थमपि' इत्यादि श्लोकचतुष्केण। तत्राप्रबुद्धः, प्रबुद्धकल्पः, प्रबुद्धः, सुप्रबुद्धकल्पः, सुप्रबुद्ध इति पञ्च प्रमातारः। तेषु यस्य यादृशी प्रतीतिः, तां विभज्य दर्शयति—

मत्स्थमपि भुवनवृन्दं बहिरिव मद् भाति मायया भविनाम्।
अथ विद्यया भवेद् भवपदिनामन्तर्बहिष्ठेन॥ ४१॥

मत्स्थमपि उक्तन्यायेन प्रकाशात्मतया मद्भित्तिलग्नमपि भुवनवृन्दम् अनाश्रितादिकालाग्न्यन्तं भुवनमण्डलं भविनां बहिरिव मद् भाति। भवो भेदप्रतिपत्तिः, तद्वतां सांख्यादिसिद्धान्तानाम्। तत्र हेतुः मायया अभिन्ने वस्तुनि भिन्नप्रतीत्यात्मिकया मायया। भवपदिनां तु येषां भवो नास्ति तत्संस्काररूपं तु भवास्पदमस्ति ते भवपदिनो विद्याप्रमातारः सम्प्रज्ञातसमाधेरर्वाक्पर्वप्रविष्टाश्च, तेषाम् अन्तर्बहिष्ठेन भवेद् अन्तः—सङ्कल्पादिरूपतया भिन्नमिवाभाति। तत्र हेतुः—विद्ययेति शुद्धया॥ ४१॥

अथानयोर्यस्य बहिर्भाति, सोऽत्र संविदुपदेशे योग्यः पशुरित्याह—

ग्राहकमेवं त्वजडं जडमन्यद् ग्राह्यमस्य यो मनुते।
मायाविमोहितात्मा बोध्यः सोऽणुर्भवी सद्भिः॥ ४२॥

ग्राहकम् अजडं चिदात्मकम्, ग्राह्यं जडमचिदात्मकम्, अन्यच्च मनुते यः स मायाविमोहितात्मा येयं ग्राह्याभिमते वस्तुनि जडत्वेनान्यत्वेन च प्रतीतिः, सैव माया, तया विमोहितात्मा अप्रत्यभिज्ञातस्वरूपः, अत एव भवी सद्भिर्बोध्योऽणुः प्रत्यभिज्ञातस्वरूपैर्गुरुभिरुपदेश्यः पशुः, यदागमः—

अन्यतन्त्रेषु ये मुक्ता धर्माधर्मक्षयान्नराः।
तेऽत्र रुद्राणवः प्रोक्ताः कालकर्मविवर्जिताः॥ इति।

अनेन तार्किकमीमांसकादीनामप्रत्यभिज्ञातचेत्यविविक्तचित्स्वरूपाणां सच्छास्त्रोपदेशे नैवाधिकार इत्युपदिष्टं भवति। तेषु संवित्सिद्धान्तप्रकाशने प्रत्यवायश्रुतिश्च—

अन्यायात् कथनं कुर्वन्नकाले मृत्युमाप्नुयाद्। इति।

अतः पशुषु संवित्सिद्धान्तार्थो गोपनीय इति शिवाज्ञा सर्वथा नोल्लङ्घनीयैव॥ ४२॥

एवमप्रबुद्धस्य प्रबुद्धकल्पस्य च प्रतीतिप्रकारो विविच्य दर्शितः। यस्तु प्रबुद्धः, तस्येदानीं विवेचयति—

जडतात्मिकामिदन्तामथाजडत्वात्मिकामहन्तां च ।
सामानाधिकरण्याददिमहमिति बुध्यते द्विपदी ॥ ४३ ॥

द्विपदी भवोद्भवोभयसंस्कारवशात् भेदाभेददशावस्थितो जडतात्मिकामिदन्ताम् इदमिति प्रतीयमानं जडं वस्तु अथाजडत्वात्मिकामहन्तां च अजडमिति प्रतीयमानमहंवस्तु च सामानाधिकरण्याद् अभेदारोपणेन भेदांशमवमज्जयन् इदमहमिति बुध्यते स्वशरीरकल्पतया द्वैरूप्येण पश्यति । सेयमीश्वरदशा ॥ ४३ ॥

अथ यः सुप्रबुद्धकल्पो यश्च सुप्रबुद्धः, तयोः प्रतीतिप्रकारं विवेचयति—

उद्भविनां केवलया निमग्नमन्तःपदे दृशा भाति ।
मग्नोन्मग्नोभयविधमुन्मनया मयि पुनः पूर्णे ॥ ४४ ॥

अभेदप्रतिपत्तिलक्षणं कैवल्यमुद्भवः । तद्वताम् अन्तःपदे अहमात्मके स्वरूपे निमग्नं भाति इदम्प्रतीतिविषयं वेद्यं निमिषितं प्रतीयते । केन हेतुना दृशा विमर्शशक्त्या । इयमहन्ताच्छादितास्फुटेदन्तामयी सदाशिवदशा । अतः सुप्रबुद्धे अत एव पूर्णे मयि प्रकाशे मग्नोन्मग्नोभयविधं निमिषितत्वेनोन्मिषितत्वेन च द्विरूपं प्रतीयते । यथा हि जलधौ तरङ्गादि निमिषदुन्मिषच्च भवति, सर्वस्यामेव दशायां जलधिरेव तत्, तथा शिवादि विश्वं मदात्मकमेव सदुन्मिषति, मद्व्यतिरिक्तं च मय्येव निमिषतीति । एवं वस्तुयाथात्म्यप्रत्यभिज्ञाने हेतुः, उन्मनया स्वस्वरूपावस्थितिरेवोन्मना, यदागमः—

उन्मना सा तु विज्ञेया मनो यत्र न विद्यते । इति ॥ ४४ ॥

एवमुपदिष्टं प्रतीतिक्रमं पर्यालोचयतो यदोन्मनया पूर्णत्वसिद्धिरविचला, तदा स योगी सिद्धः सुप्रबुद्ध उच्यते । तस्येच्छामात्रेणाभिमतानां विभूतीनामाविर्भावो भवतीत्याह श्लोकाष्टकेन । तत्रापरसिद्ध्याविर्भावप्रकारं प्रपञ्चयति—

रविसोमतडिद्वज्राम्बुदवाडवजलधिगिरिगुहारण्यैः ।
दृढभावितात्मभावैर्योगी तत्कर्म निर्वहति ॥ ४५ ॥

वज्रं दम्भोलिः । दृढभावितात्मभावैः दृढमात्मत्वेन भावितैः रव्यादिभिः योगी तत् कर्म निर्वहति रव्यादिष्वर्थेषु यद्यज्जगत्प्रकाशनादि कर्म तत्तन्नित्यसिद्धं सदेव प्रत्यभिज्ञानदार्ढ्याद् अर्थक्रियाकारितालक्षणं निर्वाहं नयतीत्यर्थः । अत्रैतदाकूतम्— उक्तनयेन रव्याद्यर्थरूपेण स्वयमेवावतिष्ठते, विमर्शदौर्बल्येन तु विभिन्न इव स्थितः । प्रबलेन विमर्शेन भेदभ्रमसंस्कारापगमे विश्वात्मकस्य सतः सर्वा एव सिद्धयो नित्यसिद्धा एव प्रत्यभिज्ञानदार्ढ्यादर्थक्रियाकारिण्यो भवन्तीति सर्वत्रैव सिसाधयिषुणा विश्वात्मकपरिपूर्णपरप्रकाशात्मकस्वस्वरूपादविचलतैव रव्याद्यात्मकत्वभावना सर्वात्मकत्वभावनाशेषतां नेतव्येति श्रीगुरवः ॥ ४५ ॥

या देवता यमर्थं करोति तेनार्थिनो दृढं तस्याम् ।
विधृताहङ्कारस्य क्षणेन सोऽर्थः समायाति ॥ ४६ ॥

या देवतास्ति लोके हेरम्बभारतीहरिहरादिका, सा यं यमर्थं करोति प्रत्यूहध्वंसवाक्प्रवर्तनपालनसंहरणादिकं कार्यं निष्पादयति, तेनार्थिनः तेन प्रयोजनवतः तमर्थं सिसाधयिषोरित्यर्थः । तस्यां दृढं विधृताहङ्कारस्य तस्यामविचलत्वेनैकात्म्यमनुसन्दधतो योगिनः क्षणेन सोऽर्थः समायाति सोऽर्थो निर्विलम्बं सिद्ध्यति ॥ ४६ ॥

अथ तत्र सिद्धीराह—

धारणसंग्रहपाकव्यूहाप्रतिघातलक्षणैर्भूतैः ।
स्वस्वनिविष्टाहन्तैर्योगिन इष्टा क्रिया भवति ॥ ४७ ॥

धारणलक्षणं भूतं पृथिवी । संग्रहलक्षणमापः । पाकलक्षणं तेजः । व्यूहोऽवयवसंहननम्, तल्लक्षणं वायुः । अप्रतिघातोऽव्याहतप्रसरत्वम्, तल्लक्षणमाकाशः । एतैः पञ्चभिर्भूतैः प्रतिस्वं दृढमात्मत्वेनानुसंहितैः योगिन इष्टा क्रिया भवति सिसाधयिषितधारणादिकर्मसिद्धिर्भवति ॥ ४७ ॥

इति तन्मात्राकर्मज्ञानेन्द्रियमानसास्मिताधीषु ।
अव्यक्ते पुंसि तथा धृतचितिशक्तिश्च तत्कर्मा ॥ ४८ ॥

अस्मिताहङ्कारः । एतेषु तन्मात्रादिपुमन्तेषु तत्त्वेषु इति धृतिचितिशक्तिः उक्तेनैव नयेन विधृताहङ्कारः । स च तत्कर्मा तत्तत्कर्मसिद्धिमान् भवति ॥४८॥

रागनियत्योः काले विद्याकलयोर्गुहासरस्वत्योः ।
ईशसदाशिवशक्तिषु शिवे च तद्वत् कृताहन्तः ॥ ४९ ॥

गुहा माया । सरस्वती शुद्धविद्या । तद्वदिति तत्कर्मेत्यनुकृष्यते ॥ ४९ ॥

प्रसङ्गाच्छुकादीनां सिद्धयः क्षोदीयस्य इत्याह—

शुकवामदेवयोरपि कृष्णदधीच्योस्तथा च वैन्यस्य ।
भूतात्मयोगजं खल्वार्षे वैश्वात्म्यमाख्यातम् ॥ ५० ॥

भूतात्मयोगजं पञ्चभूतधारणोद्भवम् । वैश्वात्म्यं भूतपञ्चकात्मप्रपञ्चरूपम् । आर्षे इतिहासादौ शास्त्रे । उक्तास्वेतासु सिद्धिषु गुहासिद्ध्यन्ता अपराः, अन्याः पञ्च पराः सारस्वत्यादिसिद्धयः ॥ ५० ॥

अथेदानीं सर्वसिद्धिमूर्धन्यं सिद्धिद्वयं श्लोकाभ्यामाह—

कालाग्निकोटिदीप्तां दाहे पाशोच्चयस्य पटु तृप्तौ ।
अमृतौघवृष्टिमूर्तिं स्मर शक्तिं भव गुरुर्जगतः ॥ ५१ ॥

कालाग्निकोटिदीप्तां प्रलयप्रबुद्धकालाग्निकोटिवत् सर्वाध्वनिर्दाहक्षमानवच्छिन्नज्वालाजालरूपतया दीप्यमानाम्। पाशोच्चयस्य दाहे शक्तिं पटु स्मर षडध्वलक्षणस्य पाशस्य दाहरूपायां शुद्धौ चितिं निरर्गलमनुसन्धेहि। तृप्तौ अमृतौघवृष्टिमूर्तिम् आप्लावनलक्षणायां तु शुद्धौ तद्वदेव सर्वाध्वक्रमणक्षमानवच्छिन्नसुधासमुद्रसहस्रसम्पातमयीं पटु स्मर। अत्र दाहाप्लावनाभ्यां सकलीकरणमप्युपलक्ष्यते, यदुक्तमाचार्यप्रवरैः—

कालाग्निकोटिरुचिमम्ब ! षडध्वशुद्धा-
वाप्लावनेषु भवतीममृतौघवृष्टिम्।
श्यामां घनस्तननतां सकलीकृतौ च
ध्यायन्त एव जगतां गुरवो भवन्ति ॥ इति।

अत इष्टदेवतामूर्त्यात्मकसङ्कल्पकोटिमयत्वेन विश्वानुचिन्तनलक्षणं सकलीकरणमप्युपदिष्टं मन्तव्यम्। भव गुरुर्जगतो यावतोऽध्वनः शुद्धिः कृता, तावतो निश्शेषस्यैव जगतोऽनुग्रहीतृतया गुरुराचार्यप्रवरो भूयाः। अत्रैतदाकूतम्—यदेतच्छोधनं क्रियते न तदस्य देहात्मकतया संक्षिप्तस्य षडध्वसंघातस्य, अपि तु सर्वस्यैव, उक्तनयेन सर्वस्यैवाचार्यादेर्विश्वशरीरत्वात्। न ह्येतदाचार्यादित्वं यत् प्रतिनियतदेहेन देहित्वम्। अतो विश्वशरीरेण सता विश्वस्यैव शुद्धिः कार्येति शास्त्रोपपादितयुक्तिक्रमेण प्रकाशैकात्म्यमस्य विश्वस्य पश्यतो यत् स्वरूपावस्थानं स सर्वस्यैवाध्वनो दाहः। तदेव च प्रकाशैकात्म्यं विमृश्यमानं चिच्चमत्कारात्मकमाप्लावनम्। "प्रकाशस्य विमर्शैकघनताप्रत्यभिज्ञानदार्ढ्यात् परानन्दाविर्भावः सकलीकरणम्" इति श्रीमद्योगीश्वराचार्यपादाः ॥ ५१ ॥

एवं गुरुलाभरूपां परामाद्यां सिद्धिमुपदिश्य द्वितीयामप्युपदिशति—

**ख्यातिमपूर्णां पूर्णख्यातिसमावेशदार्ढ्यतः क्षपय।**
**सृज भुवनानि यथेच्छं स्थापय हर तिरय भासय च ॥ ५२ ॥**

सारस्त्वायं सर्वोपदेशनिष्कर्षः। अपूर्णा पूर्णा चेति ख्यातिद्वयमेवास्ति, न वस्त्वन्यत्। तत्र पूर्णख्यातिं वस्तुभूतां सुदृढमवष्टभ्य कादाचित्कत्वादवस्तुभूतामपूर्णां ख्यातिं क्षपय प्रतिक्षणमनुसन्धानदार्ढ्यादुन्मूलय। तथा क्षपयन् सृज भुवनानि यथेच्छं स्थापय हर तिरय भासय च। तथावस्थितस्य ते ये स्वस्वरूपावारकतया सम्मता पदार्थानामाभासनशक्त्यादयो विकल्पाः, त एव ते जगत्सृष्ट्यादिरूपतया प्रत्यभिज्ञाताः सर्वसिद्धिसमष्ट्यात्मकं पारमैश्वर्यमाविष्करिष्यन्ति। अत एवं स्वरूपे नित्यमवतिष्ठस्वेत्युपदेशसर्वस्वम्। अत्र 'रविसोम' इत्यादिषु शिवान्तासु विभूतिषु 'तत्कर्म निर्वहति' इत्यादिना ताटस्थ्यप्रकाशनात् 'स्मरशक्तिं भव गुरुर्जगतः' इति, 'अपूर्णख्यातिं क्षपय भुवनानि सृज' इति च सादरमुपदेशाच्च पक्षपातः प्रत्याय्यते।

अत एवं प्रत्यभिज्ञातस्वरूपेण सिद्ध्यन्तरस्याभासभूतत्वात् तदभिनिवेशो न कार्यः। अग्रे तु सिद्धिद्वये नित्यप्रत्यवमर्शाभिनिवेशिना भवितव्यमित्यनक्षरमुपदिश्यत इति शिवम् ॥ ५२ ॥

अथ शास्त्रमुपसंहरन्नाह—

इति बोधितः स इन्द्रो देवेष्वधिकारमलमपोह्य स्वम् ।
आविष्टशक्तितत्त्वः शिववदपश्यत् स्वमात्मानम् ॥ ५३ ॥

इति प्रथमस्कन्धेन शरीरबाह्याभिमते शिवादिवस्तुनि शरीरतां सोपपत्तिकं प्रत्यभिज्ञाप्य अथ विश्वशरीरत्वशुद्धौ द्वितीयस्कन्धेन शरीरत्वेन प्रतियोगिभूतस्य सतः स्वस्वामिभावलक्षणं भेदभ्रममपनेतुं विश्वस्य प्रकाशैकघनत्वमुपपत्तिभिः स्थिरीकृत्य तथा स्थिरीभूतस्य वैश्वात्म्यस्य विपरीतभावनादिभिर्दोषैर्दौर्बल्यं मा भूदिति तृतीयस्कन्धेन विविधान् वैश्वात्म्यविमर्शनप्रकारानुपदिश्य चतुर्थेन स्कन्धेन सिद्ध्याविर्भावं जगद्गुरुत्वशिवत्वयोर्महासिद्ध्योर्नित्यसिद्धत्वप्रत्यभिज्ञानलक्षणां महासिद्धिं चाविचलामुक्त्वा बोधितो वस्तुयाथात्म्यं सम्यक्प्रत्यभिज्ञापितः स इन्द्रः स्वं देवेष्वधिकारमलमपोह्य स्वर्गस्याहमधिपतिरिति परस्वरूपसंकोचलक्षणं पशुत्वमवधूय स्वात्मानं शिववदपश्यत् शिवो बोधकत्वेन पुरोवस्थिताः श्रीमदाचार्यविरूपाक्षनाथपादाः, एवं बोधितस्य तस्य गुरुव्यतिरेकेण शिवान्तरासम्भवात् तद्वदपश्यत्। न तदानयोर्बोध्यबोधकयोर्ज्ञाने तारतम्यकला काचित्, अपि तु 'जगतोऽस्य गुरुः साक्षात् परमेश्वर एवास्मि' इति निष्प्रत्यवायं प्रत्यपद्यतेति शिवम् ॥ ५३ ॥

इति श्रीविरूपाक्षपञ्चाशिकायां महामाहेश्वरविद्याचक्रवर्तिकृतविवृतिसमेतायां विभूतिस्कन्धश्चतुर्थः ॥

स्वरूपप्रत्यभिज्ञानमनायासेन लिप्सुभिः ।
पञ्चाशिकासुविशदा वृत्तिरेषा निषेव्यताम् ॥
कृतेयं विवृतिर्लघ्वी श्रीविद्याचक्रवर्तिना ।
गोविन्दचन्द्रधीनाम्नि निकषे विनिवेशिता ॥
नमः शिवाय गुरवे देवायानन्दमूर्तये ।
परब्रह्मस्वरूपाय देवदेवाय शम्भवे ॥

॥ समाप्तश्चायं ग्रन्थः ॥

# साम्बपञ्चाशिका

## राजानकश्रीक्षेमराजकृतया टीकया समेता

पुष्णन् देवानमृतविसरैरिन्दुमास्राव्य सम्यग्
भाभिः स्वाभी रसयति रसं यः परं नित्यमेव ।
क्षीणं क्षीणं पुनरपि च तं पूरयत्येवमीदृग्
दोलालीलोल्लसितहृदयं नौमि चिद्भानुमेकम् ॥
एतदावेशवैवश्यप्रोन्मिषद्धिषणा वयम् ।
विमृशामो मनाक्छ्रीमत्साम्बपञ्चाशिकास्तुतिम् ॥
सोऽयं परामृतरसो रसज्ञैरिह रस्यताम् ।
आयुष्याज्यामृतस्पर्शः शतपद्या हि शान्तये ॥

समस्तागममहाम्नायरहस्यविन्महायोगीगिसहस्रसंप्रदायसंपूर्णः श्रीवासुदेवस्य भगवतः पुत्रः श्रीसाम्बः स्वात्मविवस्वत्स्तुतिं जगतोऽनुग्रहाय वक्तुमुपक्रमते—

शब्दार्थत्वविवर्तमानपरमज्योतीरुचो गोपते-
रुद्गीथोऽभ्युदितः पुरोऽरुणतया यस्य त्रयीमण्डलम् ।
भाव्यद्वर्णपदक्रमेरिततमःसप्तस्वराश्वैर्वियद्-
विद्यास्यन्दनमुन्नयन्निव नमस्तस्मै परब्रह्मणे ॥ १ ॥

तस्मै परस्मै सर्वोत्कृष्टाय विश्वपूर्णादिकर्त्रे च । अत एव चाभावशान्तब्रह्मचित्रब्रह्मादिसर्वब्रह्मक्रोडीकर्त्रे ब्रह्मणे बृहते व्यापकाय बृंहणाय च विश्वकर्त्रे चिदात्मने नमः । देहादिप्रमावृताप्रशमनेन तदेवाविशामीत्यर्थः । यस्य ब्रह्मणः सम्बन्धि ऊर्ध्वमशेषविश्वाभेदात्मतया उत्कृष्टतया गीयते विमृश्यत इत्युद्गीथः प्रथमोन्मेषात्मशब्दब्रह्मरूपः प्रणवो ध्वनिः । देवतास्तुतिकर्मप्रधानसामर्ग्यजुर्वेदाख्या त्रय्येव शाखाप्रपञ्चक्रोडीकृतसमस्ताम्नायवाक्यैकवाक्यताव्याप्त्या मण्डलम् । अतश्चैतत्सर्वासां विद्यानां मन्त्रशास्त्रविज्ञानानां स्यन्दनमास्पदं प्रसवकारणं च कर्मभूतं च वियत्पराकाशमुन्नयन्नुल्लासयंस्तन्मयत्वमापादयन्निव पुरः प्रथममरुणतयाऽतिदीप्तत्वेनोदितः

स्वयमुन्मिषितः। वियन्मयस्याप्यस्य दीप्तस्योन्मेषावष्टम्भपुरःसरं तथा स्फुरणादुन्नयन्निवेत्युक्तम्। एतच्च त्रयीमण्डलं भास्वद्भिः प्रोद्गीथारुणिम्ना स्फुरितैर्वर्णपदक्रमैरक्षरवाचकतदानुपूर्वीभिरीरितं ध्वस्तं तमोऽज्ञानं येन तादृक्। उच्चारणपदार्थवाक्यार्थप्रतिपत्तिषु परमचिदभेदविश्रान्तिदमित्यर्थः। केन वियदुन्नयन्। सप्त ये स्वराः स्वयं राजमाना विश्वाक्षेपिणो वर्णाः पश्यन्त्यादिप्रवर्तनप्राणितकल्पाः षड्जादिध्वनिविमर्शास्त एव सर्वत्राशुसंचारित्वादश्वास्तैः। यस्य ब्रह्मणः कीदृशस्य। गोपतेः परादिवाक्प्रभोर्मरीचिचक्रेश्वरस्य च। अत एव शब्दार्थत्वेन नानालौकिकेतरशब्दतदर्थतत्संबन्धैर्विचित्रतया वर्तमानं स्वातन्त्र्यादेतद्वैचित्र्याभासात्म यत्परं ज्योतिः शाक्तं वीर्यं तेन च रुग्दीप्तिर्यस्य। बाह्यस्यापि सूर्यस्य "ज्ञानशक्तिः परा ह्येषा तपत्यादित्यविग्रहा" इत्याम्नायनीत्या परब्रह्मप्रतिबिम्बकल्पस्य प्रणवव्याप्तिकोऽरुणः पूर्वमुदितः। त्रयीव्याप्तिकं मण्डलमितरविद्याव्याप्तिकं स्यन्दनं च क्रमेभास्वद्वर्णैः पदक्रमैर्देदीप्यमानचरणविन्यासैरीरिततमसो ये सप्तस्वरव्याप्तिका अश्वास्तैर्वियदुत्क्षिपति। अथ च विचित्रवाच्यवाचकात्मजगद्वृत्तेश्चिच्चक्रेश्वरस्योद्गीथः शक्त्यङ्कुरोन्मेषो दीप्तो ब्रह्मविष्णुरुद्रजाग्रत्स्वप्नसुषुप्तिब्रह्ममूलमायाण्डादित्रयीमण्डलम्। वियद्व्यापकम्। "वेदनानादिधर्मस्य परमात्मत्वबोधना" इत्याद्याम्नायनिरुक्तोन्मनाशक्त्याख्या विद्यास्यन्दनं स्वरैर्विचित्रैर्मन्त्रैर्ध्वनिभिरुन्नयन्निव प्रथममुदितः। किं कृत्वा ? भास्वतां वर्णानामाकारादिमात्राणां पदानां बिन्द्वादिविश्रान्तीनां क्रमेण परिपाट्या ईरितं तमः समनान्तं पाशजालं यत्र ॥ १ ॥

एवं सामान्यव्याप्त्या परमार्कं स्तुत्वा देहस्थमध्यनाडीव्याप्त्या स्तौति—

ओमित्यन्तर्नदति नियतं यः प्रतिप्राणि शब्दो<br>
वाणी यस्मात् प्रसरति परा शब्दतन्मात्रगर्भा।<br>
प्राणापानौ वहति च समौ यो मिथो ग्राससक्तौ<br>
देहस्थं तं सपदि परमादित्यमाद्यं प्रपद्ये ॥ २ ॥

तं परमादित्यं परब्रह्मस्वरूपमेव देहस्थितं मध्यनाडीगतप्राणब्रह्मनिविष्टम् आद्यं विश्वचित्रभित्तिभूतं सपदि प्रपद्ये अभिसन्ध्यवधानेन समाविशामि। कं तमित्याह—य ओमितिशब्दः क्रोडीकृताशेषशब्दनात्मनादरूपो महाप्रणवः प्रतिप्राणि सर्वभूतेषु नियतमविच्छिन्नप्रवाहेणान्तर्नदति परावागात्मस्वरूपं विमृशन् स्थितः। यस्माच्च शब्दतन्मात्रगर्भा आसूत्रितक्रमा आदिक्षान्तशब्दसामान्यमात्राऽविभागज्योतिर्मयी पराद्वितीया वाणी पश्यन्ती प्रसरत्युन्मिषति। यश्च मिथो ग्राससक्तावन्योन्यकवलनपरौ समौ समानभूमिकारूढौ प्राणापानौ वहति। उदानवह्न्यात्मनिजमहाज्योतिर्मयौ करोति ॥ २ ॥

एवं महाव्याप्त्या सूक्ष्मव्याप्त्या चानवच्छिन्नं मध्यधामस्थं च चिदर्कं नुत्वा प्रपञ्चव्याप्त्यापि स्तौति—

यस्त्वक्चक्षुःश्रवणरसनाघ्राणपाण्यङ्घ्रिवाणी-
पायूपस्थस्थितिरपि मनोबुद्ध्यहङ्कारमूर्तिः ।
तिष्ठत्यन्तर्बहिरपि जगद्भासयन् द्वादशात्मा
मार्तण्डं तं सकलकरणाधारमेकं प्रपद्ये ॥ ३ ॥

मृतानां वेद्यैकरूपतया शवप्रायाणामण्डानां देहप्राणादिपिण्डानामयमनुप्राणको मार्तण्डश्चिद्भानुस्तमेकमद्वितीयमपि प्रपञ्चव्याप्त्या सकलानां प्रमातॄणां सकलानि करणानि च त्रयोदशकरणानि च तेषामाधारमनुप्राणकमविभिन्नमाश्रयं प्रपद्ये । यस्त्वगाद्यहङ्कारान्तस्वीकृतत्रयोदशेन्द्रियमूर्तिः । अतश्चान्तरहङ्कारात्मा वेद्यग्राहकरूपः बहिश्चाध्यवसायादिव्यापारबुद्ध्यादिकरणद्वादशात्मा ग्राह्यरूपं जगद्भासयंस्तिष्ठतीति स्थूलदृशार्थः । रहस्यदृशा तु गृहीतसर्वेन्द्रियमूर्तिरपि यः सृष्ट्यादिमरीचिचक्रचित्र-संचारचातुर्याद्द्वादशात्मा एक एव चिदर्कोऽन्तर्बहिश्च जगत्कालानलादि व्योमकलान्तं विश्वं भासयंस्तुर्यधामात्मनिजभासा चक्रमयत्वमापादयन् सर्वकरणान्याधारतया निजौजोज्ज्वलनज्वलितान्याश्रित्य स्थितस्तं प्रकर्षेण प्रपद्ये । निजव्युत्थानं साक्षात्कुर्वन् स्थितोऽस्मीत्यर्थः ॥ ३ ॥

प्रपञ्चव्याप्त्याखिलेन्द्रियाधारे स्तुतेऽपि भगवति प्रकाशविमर्शपरमार्थे तद्विमर्श-प्रसरसरणिं वाणीं स्तौति—

या सा मित्रावरुणसदनादुच्चरन्ती त्रिषष्टिं
वर्णानत्र प्रकटकरणैः प्राणसङ्गात् प्रसूतान् ।
तां पश्यन्तीं प्रथममुदितां मध्यमां बुद्धिसंस्थां
वाचं वक्त्रे करणविशदां वैखरीं च प्रपद्ये ॥ ४ ॥

"अविभागात्तु पश्यन्ती सर्वतः संहृतक्रमा । स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी ॥" इत्यादिना लक्षितां प्रथममादावुदितामुन्मिषितां तां स्वरूपज्योतीरूपां पश्यन्त्याख्यां तदनु तामेव बुद्धिसंस्थां बुद्ध्यभ्यासं प्राप्ताम् । "केवलं बुद्ध्युपादानात् क्रमरूपानुपातिनी । प्राणवृत्तिमतिक्रम्य मध्यमा वाक् प्रवर्तते ॥" इत्यादिलक्षिताम् । मध्ये भवत्वान्मध्यमां मध्येऽन्तःकरणे वर्तमानाम् । तदनु वक्त्रे वदने करणेषु जिह्वामूलजिह्वामध्यमादिषु विशदां निर्मलाम् । "स्थानेषु विवृते वायौ कृतवर्णपरिग्रहा । वैखरी वाक्प्रयोक्तॄणां प्राणवृत्तिनिबन्धना ॥" इत्यादिना लक्षिताम् । विखरे शरीरे

४

भवत्वात्तदाख्यां वाचं प्रपन्नोऽस्मि। कां तामित्याह—या सा मित्रावरुणसदना-दग्नीषोममयात्मनः परावाक्प्रधानान्मध्यधाम्नोऽकारादींस्त्रिषष्टिं वर्णानुच्चरन्ती आसूत्रितक्रमतया भेदाभेदाभ्यां भेदेन च विमृशन्ती। केनोच्चरन्ती? प्रकटैरन्त-र्मुखीभावेनाभिन्नस्फुटप्रकाशैकमध्यमात्मैः करणैः सर्वेन्द्रियैः। कीदृशान् वर्णान्? प्राणसङ्घात् प्रसूतानुद्भूतान्। तत्र चिज्ज्योतिषि गुणीभूतसूक्ष्मप्राणसङ्घात् पश्यन्त्यां गुणीभूतचित्सूक्ष्मप्राणसङ्घान्मध्यमायां स्थूलप्राणसङ्घाद्वैखर्यां वर्णा जायन्ते। ते च त्रिषष्टिः। तद्यथा—अ–इ–उ–ऋ–वर्णाश्चत्वारो ह्रस्वदीर्घप्लुतभेदा द्वादश ऌकारस्य दीर्घो नास्तीति ह्रस्वप्लुतभेदाद् द्विविधः। संध्यक्षराणां ह्रस्वा न सन्तीति दीर्घप्लुतभेदादष्टविधाः। एवं स्वरा द्वाविंशतिः। कादयो मान्ताः पञ्चविंशतिः स्पर्शाः। अन्तस्थाश्चत्वारः। ऊष्माणश्चत्वारः। कुं खुं गुं घुं इति यमाश्चत्वारः। अनुस्वारविसर्गजिह्वामूलीयोपध्मानीया अं अः ᳲक ᳲप इति चत्वारः। यथोक्तम्—

> स्वरा द्वाविंशतिश्चैव स्पर्शानां पञ्चविंशतिः।
> यादयः शादयश्चाष्टौ चत्वारश्च यमाः स्मृताः॥
> अनुस्वारो विसर्गश्च ᳲक ᳲप इति पराश्रयौ।
> त एते गदिता वर्णास्त्रिषष्टिरिह सूरिभिः॥ इति।

मित्रः सूर्योऽन्तरशेषद्वैतप्लोषकारित्वादग्निः। वरुणो ह्लादाप्यायकारित्वात् सोमः। "वर्णानन्तः प्रकटकरणैः प्राणसङ्घात् प्रसूते" इति पाठान्तरे या परावाक्शक्तिर्मित्रा-वरुणसदनादुच्चरन्ती प्रमाणप्रमेयात्मकसूर्यचन्द्राश्रयेणात्माकाशादूर्ध्वं सरन्ती सर्वोत्तीर्णं निजं धाम प्रमातृरूपं स्रवन्ती अस्ति। सैवान्तः प्रकटैरन्तरेव स्फुटैरिन्द्रियैः कृत्वा त्रिषष्टिं वर्णान् प्राणसङ्घाद्धेतोः प्रसूते जनयतीत्यन्वयः। इन्द्रियाणां रूपाद्युपलब्ध्यानुमेयत्वाद् बहिः स्फुटत्वाभावेनान्तः प्रकटीभावः। एतदभिधेयपक्षे उच्चारणप्रसूत्योः क्रमेणानु-वाद्यविधेयभावः॥ ४॥

एवं वाक्प्रसरान्तं भगवन्तं स्तुत्वा मध्यमधामसाफल्यमर्थयते—

> ऊर्ध्वाधःस्थान्यतनुभुवनान्यन्तरा संनिविष्टा
> नानानाडिप्रसवगहना सर्वभूतान्तरस्था।
> प्राणापानग्रसननिरतैः प्राप्यते ब्रह्मनाडी
> सा नः श्वेता भवतु परमादित्यमूर्तिः प्रसन्ना॥ ५॥

परमादित्यस्य चिद्भानोर्ब्रह्मनाडीरूपा या सेति दिव्या मूर्तिः समुच्छ्रिता-कृतिर्नोऽस्माकं प्रसन्ना प्रशस्ता प्रशमितप्राणादिकालुष्या अत एव श्वेता चिदानन्द-घनतया स्फुरन्ती अस्तु। कीदृशी सा? या ऊर्ध्वमधश्च स्थितानि अतनून्यनल्पानि

अनाश्रितादिकालाग्न्यन्तभुवनेशनानाभुवनानि देहे बहिश्चान्तरा मध्ये संनिविष्टा व्याप्यावस्थिता। तथा नानानाडीनां चक्षुरादिरोमरन्ध्रान्तानां सुषिराणां प्रसवेन स्फारेण गहना सर्वैर्दुष्प्रापा। सर्वेषां स्थावरादिदेवयोनिभेदान्तानां भूतानामन्तरस्था देहमध्ये वर्तमाना। यतश्चोक्तयुक्त्या गहना अत एव कैश्चिदेव प्राणापानयोः सर्ववाह-प्रसवप्रवेशयोर्ग्रसननिरतैर्भक्षणप्रगल्भैः प्राप्यते-समाविश्यते ॥ ५ ॥

किञ्च—

न ब्रह्माण्डव्यवहितपथा नातिशीतोष्णरूपा

नो वा नक्तंदिवगममितातापनीयापराहुः।

वैकुण्ठीया तनुरिव रवे राजते मण्डलस्था

सा नः श्वेता भवतु परमादित्यमूर्तिः प्रसन्ना ॥ ६ ॥

ब्रह्मणो ब्रह्मबिलावरणनिविष्टस्याण्डं गर्भीकृतभूमूलमायाण्डप्रपञ्चशक्त्यण्डं तेन न व्यवहिता अपि तु समन्ततः क्रोडीकारी पन्थाः प्रसरमार्गो यस्याः, तथा अतिशीतः सोमः, अत्युष्णो वह्निः, इयं तु द्वैतदाह्लादद्वैतानन्दस्यन्दित्वाच्च नैवंरूपा। अपि तु समरसीभूताग्नीषोमात्मा। तथा नक्तंदिनं रात्रिदिनं यो गमो भ्रमणं तेन नो इता प्रमेयभावं न प्राप्ता तद्वती। तथा अतापनीया परमाह्लादप्रदा। तथा अपगतो राहुराच्छादनप्रधानः शून्यप्रमाता यस्याः सा। किञ्च, रवेश्चिद्भानोर्मण्डले रश्मिपरिवेषे राजते दीप्यते। बाह्यार्कमूर्तिस्तु ब्रह्माण्डव्यवहिता स्वर्लोकान्तमात्रावभासिका शिशिर-ग्रीष्मादावतिशीतोष्णरूपा अहर्निशं भ्रमन्ती सन्तापिका राह्वभिभूता चेति व्यतिरेक-ध्वनिः। वैकुण्ठस्य विष्णोर्मूर्तिरिवेत्युपमा। सापि च बलिवञ्चनावसरे ब्रह्माण्डे ब्रह्माण्डान्तर्निरुद्धमार्गा न केनचित्। अत एव नातिशीतोष्णरूपा। प्रकाशाह्लाददा भक्तानामित्यर्थः। नक्तंदिवगमेनाहोरात्रपरिभ्रमणेन न मिता। देवादिभिर्नेयत्तया परिच्छिन्नेत्यर्थः। तापनीया महाप्रतापवती। अपगतराहुरपक्रान्तरविमण्डला चेति श्लेषः। एवमयमत्रोपमाश्लेषो व्यतिरेकध्वनिना संसृष्टः ॥ ६ ॥

अथ युगपदन्तर्बहिश्चार्कमूर्तिं स्तौति—

यत्रारूढं त्रिगुणवपुषि ब्रह्म तद्बिन्दुरूपं

योगीन्द्राणां यदपि परमं भाति निर्वाणमार्गः।

त्रय्याधारः प्रणव इति यन्मण्डलं चण्डरश्मे-

रन्तःसूक्ष्मं बहिरपि बृहन्मुक्तयेऽहं प्रपन्नः ॥ ७ ॥

तच्चण्डरश्मेश्चिद्दीप्तांशोर्मण्डलं मुक्तये समावेशात्मजीवन्मुक्त्यर्थं प्रपन्नोऽस्मि। कीदृशम्? अन्तश्चिद्भुवि सूक्ष्ममाद्योन्मेषात्मं। योगीन्द्रैरेव लभ्यम्। बहिरपि

बृहन्महापरिमाणम् । यत्र सृष्टिस्थितिसंहारकारिरजःसत्त्वतमोनिविष्टब्रह्मविष्णु-रुद्राभिधाय्यकारोकारमकाराख्यह्रस्वदीर्घप्लुतवर्णत्रयात्मत्रिगुणवपुषि प्रणवे विश्व-वेद्याविभागवेदनात्मा बिन्दुरिति तदुपलक्षितोन्मनान्ताप्रमेयपरिपाटीरूपं यस्य तादृग् ब्रह्म बृहद् बृंहकं च शाक्ततेज आरूढमत्युत्कृष्टतया व्यवस्थितम् । यच्च परम-मसामान्यम् । योगीन्द्राणां मितयोग्यतिशायिपरतत्त्वैकभाजां निर्वाणमार्गो जीवन्मुक्त्यु-पायो भाति स्वप्रकाशतया स्फुरति । त्रय्याः प्राङ्निर्णीताया आधार आश्रयः । प्रकर्षेण नूयते उत्कृष्टतया विमृश्यते परं पारमेश्वरं स्वरूपं येनेति कृत्वा प्रणव इत्येतन्नाम यत् । बाह्येऽप्यर्कमण्डले "नवयोजनसाहस्रो विग्रहोऽर्कस्य मण्डलम् । त्रिगुणम्" इति स्वच्छन्दा-दिष्टनीत्या यत्र बिन्दुरूपमिति सितवर्तुलाकारं ब्रह्ममयं तदसामान्यं बिम्बमारूढम् । तच्च योगिनां निर्वाणमार्गः, तेषां हि सूर्यमण्डलभेदनस्य श्रवणात् । तथा वक्ष्यमाणदृशा सामर्ग्यजुर्मयधाममण्डलाकृतित्वात् त्रय्याधारः । प्रकर्षेण नूयमानत्वात्प्रणवो विश्व-शरीरत्वाच्च प्रणवः ॥ ७ ॥

यस्मिन् सोमः सुरपितृनरैरन्वहं पीयमानः
क्षीणः क्षीणः प्रविशति यतो वर्धते चापि भूयः ।
यस्मिन् वेदा मधुनि सरघाकारवद्भान्ति चाग्रे
तच्चण्डांशोरमितममृतं मण्डलस्थं प्रपद्ये ॥ ८ ॥

चिद्भानोर्मण्डलस्थं मध्यधामनिविष्टं तत्परमानन्दरूपममितमनल्पममृतं प्रपद्ये समाश्रये । यत्रामृते सोमः सर्वो मेयवर्गः सुरादिभिः सर्वैः प्रमातृभिः प्रतिदिनं कला-ग्रासयुक्त्या पीयमानत्वात् क्षीणः क्षीणः सन् पुनः पुनः प्रविशति ह्वृद्विश्रान्त्यनन्तरं निमज्जति । यत एव मण्डलाद् भूयोऽपि वर्धतेऽभिव्यज्यते मेयरूपश्चन्द्रः । यस्मिंश्च वेदाः सर्वशास्त्राणि मधुनि माक्षिके सरघाणां मधुकरीणामाकार इवाग्रे भान्ति पुरः स्फुरन्ति । यथा सरघा माक्षिकं संचित्य परिवृत्त्य सोल्लासमासते, तथा सर्वे वेदा वाक्यैकवाक्यतया परामृतमामृश्य भ्राजन्ते । बाह्योऽपि सोमः कृष्णपक्षेषु पितृदेवनरग्रस्तकलापञ्चदशकोऽमावास्यायां सूर्यमण्डलं प्रविश्य वर्धते । वेदाश्चार्क-ज्योतिर्लग्ना आसते ॥ ८ ॥

ऐन्द्रीमाशां पृथुकवपुषा पूरयित्वा क्रमेण
क्रान्ताः सप्त प्रकटहरिणा येन पादेन लोकाः ।
कृत्वा ध्वान्तं विगलितबलिव्यक्तिपातालभीनं
विश्वालोकः स जयति रविः सत्त्वमेवोर्ध्वरश्मिः ॥ ९ ॥

"यो हि यस्माद् गुणोत्कृष्टः स तस्मादूर्ध्वमिष्यते" इति स्थित्या ऊर्ध्वा विश्वोत्कृष्टा रश्मयो यस्य । अत एव सतां विद्यमानानामशेषाणां भावः सत्त्वं महाप्रकाशात्मरूपम् ।

तदेव तत्परमार्थः। ततश्च प्रकाशमानतया प्रकाशात्मन्येव विश्वस्य मग्नत्वात् प्रकाशो विश्वालोकः स एव रविश्चिद्भानुर्जयति सर्वोत्कर्षेण वर्तते। येनैन्द्रीमाशां प्राच्योन्मेषदशां पृथुकवपुषा योगिगम्यसूक्ष्मशाक्तस्पन्दात्मना पूरयित्वा उन्मिषितप्राणादिसंकोचचित्प्राधान्योच्छलितां कृत्वा "शिवादिसकलात्मान्ताः शक्तिमन्तः प्रकीर्तिताः" इति-श्रीपूर्वादिष्टनीत्या शिवमन्त्रमहेश्वरमन्त्रेश्वरमन्त्रविज्ञानाकलप्रलयाकलसकलाख्याः क्रमात्क्रमं प्राणीयत्रुटिस्था निजशक्तिसहिताः सप्तलोकाः "पादोऽस्य विश्वा भूतानि" इति स्थित्या पादेन निजांशमात्रेणाक्रान्ताः क्रोडीकृत्य स्वज्योतिर्मयीकृताः। कीदृशेन? प्रकटाः स्वात्माभासा रूपादिविश्वहरणाद्धरयश्चक्षुरादिशक्तयो यस्य। तदुक्तं श्रुतौ— "युक्ता ह्यस्य हरयः शता दश" इति। निःसंख्यशक्तिरात्मेति ह्यस्यार्थः। कथं क्रान्ताः? ध्वान्तमात्मन्यनात्मप्रतीत्यात्माज्ञानं विगलिता बलिरनात्मन्यात्माभिधायिनी व्यक्तिर्यस्य तादृक् पाताललीनं निःशेषप्रशमितं कृत्वा। बाह्येनाप्यर्केण सप्ताश्वारूढेनैन्द्रीं दिशं सूक्ष्मरूपेणापूर्य भूरादिलोकाः पादेन मरीचिभिर्ध्वान्तं ध्वंसयित्वा क्रमेण क्रान्ताः। प्रकटहरिणा च नारायणेन विगलिता बल्याख्यस्य दानवेन्द्रस्य व्यक्तिर्यत्र तद्ध्वान्तं दानवकुलं पाताललीनं कृत्वा भूरादिलोकाश्चरणविन्यासक्रमेणाक्रान्ताः। किं कृत्वा? पृथुकवपुषा बालवामनशरीरेण इन्द्रादिदिगापूरणं कृत्वा। सोऽपि विश्वालोकः सत्त्वप्रधानश्चेत्यत्र श्लेषालङ्कारः। श्लेषोपमाध्वनिसंसृष्टिरियम्॥ ९॥

ध्यात्वा ब्रह्म प्रथममतनु प्राणमूले नदन्तं
दृष्ट्वा चान्तः प्रणवमुखरं व्याहृतीः सम्यगुक्त्वा।
यत्तद्वेदे तदिति सवितुर्ब्रह्मणोक्तं वरेण्यं
तद्भर्गाख्यं किमपि परमं धामगर्भं प्रपद्ये॥ १०॥

ब्रह्मणा प्रजापतिना वेदेषु प्रणवमुखरमोङ्कारोच्चारणपूर्वं तदित्यादि गायत्र्याः सवितुर्विश्वप्रसूतिहेतोश्चिदादित्यस्य यत्तत्किमपीत्यसामान्यं भर्ग इत्याख्या यस्य तत्परमं सर्वोत्कृष्टं धाम परिस्फुरत्तात्म शाक्तं तेजो बाह्यसूर्यसोमवह्न्यादिधामक्रोडीकारित्वाद्धामगर्भं वरेण्यमनुग्रहकारि उक्तं तत्प्रपद्ये समाविशामि। किं कृत्वा ब्रह्मणोक्तम्? किं कृत्वा च प्रपद्ये? प्रथममादावतनु अशरीरं श्रीभर्गशिखादिष्टनीत्या अकारपरामर्शात्म वीरेश्वराख्यं च ब्रह्म बृहद् बृंहकं च परं शाक्तं धाम प्राणमूले अप्राणाद्यस्फुरत्ताधाम्नि ध्यात्वा विचिन्त्यानन्तरं नदन्तमिति नादाख्यं परविमर्शात्मानमन्तरित्युक्तशाक्तरूपप्राणितकल्पतया स्थितं दृष्ट्वा स्वात्मतया साक्षात्कृत्य तन्नादविमर्शानुप्रवेशावष्टम्भबलोन्मिषत्प्रणवोच्चारणपूर्वम्। तथा 'भूः स्वाहा' 'भुवः स्वाहा' 'स्वः स्वाहा' 'भुर्भुवःस्वः स्वाहा' इति च मन्त्ररूपा समग्रमेयमानप्रमातॄणां ससंस्काराणां परब्रह्ममयत्वामर्शिनीर्व्याहृतीश्चतस्रः सम्यगित्यन्तरामर्शावष्टम्भाशैथिल्येनोक्त्वा उच्चार्य। अथ च "सर्वव्यवहारानेकरूपाः कथा जपः" इति शिवसूत्रादिष्टनीत्या तदभेदामर्शप्रधानतया

परशाक्तरसप्लावितान् संपाद्य । शाक्तधामैकाग्र्यवशासादितशाम्भवधामावष्टम्भबलेन व्युत्थानदशामपि तदभेदरसप्रोक्षितां विधायेत्यर्थः । धामगर्भमित्यत्र धामशब्दस्तन्त्रेण द्विरुक्तः । तथा प्रणवमुखरमिति ॥ १० ॥

त्वां स्तोष्यामि स्तुतिभिरिति मे यस्तु भेदग्रहोऽयं
सैवाविद्या तदपि सुतरां तद्विनाशाय युक्तः ।
स्तौम्येवाहं त्रिविधमुदितं स्थूलसूक्ष्मं परं वा
विद्योपायः पर इति बुधैर्गीयते खल्वविद्या ॥ ११ ॥

हे भगवन्, त्वां स्तुतिभिः स्तोष्यामीति स्तोतृस्तुत्यस्तुतिकल्पनात्मा यो मे भेदग्रह एषैव चिदद्वयाप्रथनात्माविद्या, तथापि तस्या अविद्यायाः सुतरामतिशयेन विनाशाय निःशेषोन्मूलनाय युक्तो नित्यसंबद्धस्त्वां स्तौम्येव देहादिप्रमातृतानिमज्जनेन सर्वोत्कृष्टतया सततं परामृशामि, न तु क्षणमप्युदासीन आसे । त्वामेव चिदर्कं स्तौमि न तु परिमितां काञ्चन देवताम् । कीदृशं त्वाम् ? स्थूलं बाह्यप्राणार्करूपम् । सूक्ष्मं मध्यनाडीगतं प्राणब्रह्मरूपम् । परं चानवच्छिन्नं विश्वात्मचिदानन्दघनम् । तदिति प्राक्तनवाक्यव्यावर्णितमेकमेव । नित्योदितं च । वाशब्दश्चार्थे । युक्तं चैतत् । यतो बुधैस्तत्त्वज्ञैरविद्यैव विद्योपायः पर इत्युक्तः । स्तोत्रस्तुत्यादिविभागकल्पनात्माविद्यया समस्ताविद्याबीजदेहादिप्रमातृत्वाभिमानप्रशमनेन चिदानन्दघनपरमात्मोत्कर्षपरामर्शात्मा स्तुतिः परमसमावेशप्रदेत्यर्थः ॥ ११ ॥

स्तौम्येवेत्युक्तिं प्रपञ्चयति—

योऽनाद्यन्तोऽप्यतनुरगुणोऽणोरणीयान् महीयान्
विश्वाकारः सगुण इति वा कल्पनाकल्पिताङ्गः ।
नानाभूतप्रकृतिविकृतीर्दर्शयन् भाति यो वा
तस्मै तस्मै भवतु परमादित्य नित्यं नमस्ते ॥ १२ ॥

हे परमादित्य चिदर्क, तस्मै तस्मै इति परसूक्ष्मस्थूलरूपाय विश्वात्मने तुभ्यं नित्यं नमः । सर्वकालं देहादिप्रह्वतया परामृशंस्त्वामेव समाविशामीत्यर्थः । कीदृशाय तस्मै ? यो अनाद्यन्तो देशकालाद्यनवच्छिन्नः । अतनुराकारानियन्त्रितः । अतश्च सार्वज्ञादिगुणास्पृष्टः । अणोरत्यन्तसूक्ष्मरूपतया योगिदृश्यात् परमाणोरप्यणीयानतिसूक्ष्मः न कस्यापि वेद्यः । अपि तु स्वप्रकाशचिदेकरूपः । न तु देशतः संकुचितः । परमाणोः सूक्ष्मस्य वेद्यत्वाद् दृश्यत्वाच्च । महीयान् व्यापकः । अतश्च विश्वक्रोडीकारित्वाद्विश्वाकारः । सार्वज्ञादिगुणयोगात् सगुणः । इत्येवं प्रकारया कल्पनया

कल्पितानि पृथक्पृथगुल्लिखितान्यङ्गानि तत्तद्धर्मरूपा अवयवभागा यस्य तादृग् वेत्य-नयोक्त्याऽवच्छिन्नवस्तुविषयशब्दविकल्पासंस्पृष्टं परमेकं स्वरूपमनवच्छिन्नमिति ध्वनयति। नानाभूतानि विचित्राः स्थावरादिब्रह्माण्डान्ताः प्राणिनस्तेषां प्रकृतीर्माया-प्रकृतिशुक्रशोणितादिकारणानि, विकृतीः कलाबुद्धिदेहादिकान् दर्शयन् य आभाति। संकुचितसर्वाभासोल्लासकतया वा यः स्फुरतीत्यर्थः॥ १२॥

तत्त्वाख्याने त्वयि मुनिजना नेति नेति ब्रुवन्तः
श्रान्ताः सम्यक् त्वमिति न च तैरीदृशो वेति चोक्तः।
तस्मात्तुभ्यं नम इति वचोमात्रमेवास्मि वच्मि
प्रायो यस्मात्प्रसरतितरां भारती ज्ञानगर्भा॥ १३॥

यस्मात्त्वत्तो भारती पश्यन्त्यादिवाक् ज्ञानगर्भा स्वावभाससंवित्प्रधाना प्रसरति तस्मै तुभ्यं नम इति वचोमात्रमेव, न त्वतिरिक्तं स्तुतिवाक्यादि वच्मि। ज्ञानस्य सर्ववाक्प्रसरहेतोरनवच्छिन्नस्य विभिन्नस्तुतिवाग्भिः स्तोतुमशक्यत्वात्। नमःशब्देन तु देहादिप्रह्वतां तुरीयकस्वचित्प्रकर्षपरामर्शनस्य कर्तुं शक्यत्वात्। युक्तं चैतत्। यस्मान्मुनयोऽपि त्वयि त्वद्विषये तत्त्वाख्याने अणुर्न महान् न ह्रस्वं दीर्घं नेत्यादि ब्रुवन्तः श्रान्ताः क्लिष्टाः। न च तैस्त्वमित्येवंविधोऽसीति एतादृशो वेति एतत्तुल्यो वेति सम्यगुक्तः। वागगोचरत्वादेवेत्यर्थः॥ १३॥

सर्वाङ्गीणः सकलवपुषामन्तरे योऽन्तरात्मा
तिष्ठन् काष्ठे दहन इव नो दृश्यसे युक्तिशून्यैः।
यश्च प्राणारणिषु नियतैर्मथ्यमानासु सद्भि-
र्दृश्यं ज्योतिर्भवसि परमादित्य तस्मै नमस्ते॥ १४॥

हे परमादित्य चिदर्क, तस्मै निर्विशेषाय ते तुभ्यं नमः। यस्त्वं स्थावरादि-देवयोन्यन्तानां रुद्रक्षेत्रज्ञानां च सर्वेषां सर्वाङ्गेषु भवो व्यापकः सकलवपुषामन्तरे मितग्राहकात्मनि स्वरूपे योऽन्तरात्मा परमानन्दत्वात् "आत्मा चैवान्तरात्मा च" इति श्रीस्वच्छन्दादिष्टपुर्यष्टकप्रमाता तिष्ठन्नवस्थास्नुरपि युक्त्या योगेन शून्यैरपि न दृश्यसे। यथा काष्ठेऽग्निस्तिष्ठन्नपि युक्तिशून्यैररणिमथनानभिज्ञैर्न दृश्यते तत्काष्ठकवलीकारिज्वलद्रूपतया नोपलभ्यते। यश्च त्वं प्राणारणिषु सर्ववाह्मार्गोदय-विश्रान्तिपदेषु सद्भिर्योगिभिर्नियतैरभियुक्तैर्मथ्यमानासु—"ऊर्ध्वशक्तिनिपाताच्च अधःशक्तिनिकुञ्चनात्। रुद्रशक्तिसमावेशं यो जानाति स पण्डितः॥" इत्याम्नाया-दिष्टयुक्त्याऽनवरतान्दोलनतः प्रशमितमरुद्व्यापिकासु दृश्यं ज्योतिर्भवसि स्वप्रकाश-चिद्रूपः स्फुरसि। अत्र पर्यायेण प्राणापानावूर्ध्वाधरारणिरूपौ। योगिप्रयत्नो मथन-काष्ठम्॥ १४॥

स्तोता स्तुत्यः स्तुतिरिति भवान् कर्तृकर्मक्रियात्मा
क्रीडत्येकस्तव नुतिविधावस्वतन्त्रस्ततोऽहम् ।
यद्वा वच्मि प्रणयसुभगं गोपते तच्च तथ्यं
त्वत्तो ह्यन्यत्किमिव जगतां विद्यते तन्मृषा स्यात् ॥ १५ ॥

हे गोपते चिन्मरीचिचक्रेश्वर, भवानेकोऽद्वितीयः स्तोत्रादिरूपतया क्रीडति स्वस्वातन्त्र्यात्तत्तद्रूपतया स्फुरति । यदुक्तं मयैव भैरवानुकरणस्तोत्रे—"स्तोता स्तुत्यः स्तुतिरिति यदपि विभिन्नं न किञ्चिदस्तीह। मृशसि यथा यद्रूपं चिद्रूपतया भवस्येतत्॥" इति। यतोऽहमिति भवत्कल्पितमेव । ततोऽहमिति संकोचप्रधानो मायाप्रमाता त्वत्स्तोत्रकरणेऽस्वतन्त्रस्त्वामेव चिदात्मानं स्तौमि । न त्वहं नामान्यः कश्चिदित्यर्थः । यच्च किञ्चित्त्वदात्मैवाहं प्रणयसुभगं प्रार्थनासुन्दरं वच्मि तत्सर्वं तथ्यं त्वत्परमार्थमेव। यतस्त्वत्तश्चिदात्मनो व्यतिरिक्तं जगतां किमिव विद्यते ? न किञ्चिदस्ति। यदि वा तथापि किञ्चित्संकल्प्यते तन्मृषा स्यात्। नैव भवेत्। चिदात्मतां विना कस्यचिदपि चेतना चेति तस्य संकल्पविकल्पविषयत्वस्याप्ययोगेन गगनकुसुमतोऽपि निकृष्टत्वात्। इत्थं युक्तितस्त्वदभेदसारैव स्तुतिः॥ १५ ॥

नेति

प्रातीतिकक्रमेण तु यद्यपि भेदस्तथापीत्थं त्वमाराध्योऽस्माकमित्याह—

ज्ञानं नान्तःकरणरहितं विद्यतेऽस्मद्विधानां
त्वं चात्यन्तं सकलकरणागोचरत्वादचिन्त्यः ।
ध्यानातीतस्त्वमिति न विना भक्तियोगेन लभ्य-
स्तस्माद्भक्तिं शरणममृतप्राप्तयेऽहं प्रपन्नः ॥ १६ ॥

ऐन्द्रियकज्ञानवतां मायाप्रमातॄणामस्माकमिन्द्रियागोचरो भवानचिन्त्यत्वाद्ध्यानविषयो न भवतीति देहादिमितप्रमातृतामज्जनोन्मज्जनचिदर्कभजनात्मकभक्तियोगसंपादनीयत्वाद्भगवतो भक्तिमेव शाक्तस्फारावेशमयामृतप्राप्तयेऽस्म्याश्रितः । उक्तं च विज्ञानभैरवे—"भक्त्युद्रेकाद्विरक्तस्य यादृशी जायते दशा। सा शक्तिः शाङ्करी नित्यं भावयेत्तां ततः शिवः॥" इति॥ १६॥

हार्दं हन्ति प्रथममुदिता या तमःसंश्रितानां
सत्त्वोद्रेकात्तदनु च रजः कर्मयोगक्रमेण ।
स्वभ्यस्ता च प्रथयतितरां सत्त्वमेव प्रपन्ना
निर्वाणाय व्रजति शमिनां तेऽर्क भक्तित्रयीव ॥ १७ ॥

हे अर्क, तव भक्तिः प्रपन्ना समाश्रिता सती शमिनां शान्तरागादिकलङ्कानां निर्वाणाय मोक्षाय व्रजति जीवच्छिवत्वाभिव्यक्तये घटते। त्रयी यथा। सापि हि काम्यकर्म परिहृत्यानुष्ठीयमाना त्र्यन्तविदामपवर्गहेतुः। तथा चैषा प्रथममुदिता समुन्मिषितमात्रा हार्दं प्रकाशानन्दात्मह्रद्भवं तमस्त्वभेदाख्यातिरूपमाणवं मलं संश्रितानां भक्तिभाजां हन्ति नाशयति। तदनु सत्त्वस्य प्रकाशस्योद्रेकात्प्रकर्षात्कर्मयोगक्रमेण स्वात्मदेवताविश्रान्तिफलशारीरकर्मानुष्ठानेन कार्ममलरूपं रजो हन्ति। तथा सुष्ठु अभ्यस्ता परिशीलनेन स्वीकृता सती भावः सत्त्वं प्रकाशैकघनत्वमेव प्रकाशमाने सर्वत्र प्रथयतितराम्। न तु पशुवन्मायीयमलात्मभिन्नवेद्यप्रथाकृत्। त्र्यपि त्र्यन्तविदां तन्निष्ठानां सत्त्वं प्रथयति ॥ १७ ॥

तामासाद्य श्रियमिव गृहे कामधेनुं प्रवासे
ध्वान्ते भातिं धृतिमिव वने योजने ब्रह्मनाडिम्।
नावं चास्मिन् विषमविषयग्राहसंसारसिन्धौ
गच्छेयं ते परमममृतं यन्न शीतं न चोष्णम् ॥ १८ ॥

तां भक्तिमाश्रित्य चिदर्कस्य ते सम्बन्धि परमममृतं परं शाक्तं धाम गच्छेयं समाविशेयम्। यच्छैशिरग्रैष्मबाह्यार्कधामवैलक्षण्याच्छीतमुष्णं च न भवति। अपि तु मोहदाहप्रकाशाह्लादकृदग्नीषोमात्म। कीदृशीं ताम्? गृहे शून्ये वेश्मनि श्रियमिव। सम्पूर्णभोगप्रदत्वात्। प्रवासे रिक्तबन्धुदेशे कामधेनुमिव चिन्तितमात्राभीष्टफलप्रदत्वात्। ध्वान्ते गाढतमसि भातिमिव। पूर्णप्रथाहेतुत्वात्। वने गहनपर्वतादौ धृतिमिव। विश्रान्तिहेतुत्वात्। योजने परशिवात्मैक्यावेशे ब्रह्मनाडिं सुषुम्णाम्। परमोपायत्वात्। विषमविषया एव ग्राहा भीषणा जलचरा यत्र तादृशे संसारसमुद्रे नावमिव। उत्तारकत्वात् ॥ १८ ॥

अग्नीषोमावखिलजगतः कारणं तौ मयूखैः
सर्गादाने सृजसि भगवन् ह्रासवृद्धिक्रमेण।
तावेवान्तर्विषुवति समौ जुह्वतामात्मवह्नौ
द्वावप्यस्तं नयसि युगपन्मुक्तये भक्तिभाजाम् ॥ १९ ॥

हे भगवन्, अखिलस्य बाह्यस्य नीलसुखादेर्ग्राह्यरूपस्यान्तरस्य च ग्राहकरूपस्य देहादेर्जगतो यावग्नीषोमौ सर्ववाहवाही प्राणोऽपानश्च प्रकाशनावस्थानहेतुत्वात्कारणम्। तौ प्रसिसृक्षाप्रविविक्षात्मसर्गादानसमये वस्त्वाभासनविमर्शात्मसृष्ट्यादौ तन्निमित्तं च ह्रासवृद्धिक्रमेण द्वादशषोडशकलाकलनपर्यायतो मयूखैः सृष्ट्यादिदेव्यात्मनिजमरीचिभिः सृजसि मुहुर्मुहुर्निर्मिमीषे। तावेव च भक्तिभाजामन्तर्विषुवति

सम्यङ्नयनात्मसमानमरुत्प्रधाने कुम्भके समौ सोमसूर्यकलान्योन्यसंघर्षमिश्रितौ सन्तावात्मवह्नावुदानवह्नौ जुह्वतां मुक्तये शिवात्मभेदप्रथारूपाणवादिमलत्रयप्लुष्टोपलक्षितशिवाद्वैतप्राप्तये द्वावपि युगपत्क्रमं मयूखैरेवास्तं नयसि विश्वात्मकव्यानव्याप्तिमाविश्य ज्ञानक्रियात्मपराग्नीषोमरूपस्वात्ममयौ संपादयसि ॥ १९ ॥

स्थूलत्वं ते प्रकृतिगहनं नैव लक्ष्यं ह्यनन्तं
सूक्ष्मत्वं वा तदपि सदसद्व्यक्त्यभावादचिन्त्यम् ।
ध्यायामीत्थं कथमविदितं त्वामनाद्यन्तमन्त-
स्तस्मादर्क प्रणयिनि मयि स्वात्मनैव प्रसीद ॥ २० ॥

हे अर्क, ते तव स्थूलत्वं विश्वव्यापकत्वं प्रकृत्या गहनत्वान्नैव लक्षयितुं शक्यम् । यस्मादनन्तं दिक्कालाकारैरनवच्छिन्नम् । सूक्ष्मत्वमपि वा "अणोरणीयान्" इत्येतद्व्याख्यानावसरव्याकृतयुक्त्या परप्रमात्रात्म यत्तदपि सदसद्व्यक्त्यभावाद्भावाभावरूपत्वेनाप्रतीतेरचिन्त्यम् । तदित्थमनाद्यन्तत्वादविदितं त्वां कथमन्तः स्वान्ते चिन्तयामि न कथञ्चित् । तस्मान्मयि प्रणयिनि त्वत्प्रार्थनावहिते स्वयमेव प्रसीद प्रशमितदेहादिप्रमातृताभिमानकालुष्यः प्रस्फुर ॥ २० ॥

यत्तद्वेद्यं किमपि परमं शब्दतत्त्वं त्वमन्त-
स्तत्सद्व्यक्तिं जिगमिषु शनैर्लाति मात्राकलाः खे ।
अव्यक्तेन प्रणववपुषा बिन्दुनादोदितं स-
च्छब्दब्रह्मोच्चरितकरणव्यञ्जितं वाचकं ते ॥ २१ ॥

यत्किमप्यसामान्यं त्वं तदन्तरित्यन्तर्मुखानवच्छिन्नप्रकाशात्मनि पदे । शब्दतत्त्वमिति "शास्त्रं शब्दात्मकं सर्वं शब्दो हंसः प्रकीर्त्तितः" इति श्रीस्वच्छन्दादिष्टानाहतभट्टारकरूपम् । परममिति परमोत्कृष्टम् । यदुक्तं श्रीकालोत्तरे—"नादाख्यं यत्परं बीजम्" इति । वेद्यमिति सुप्रकटसुस्फुरत्तात्मकत्वादनपह्नवनीयम् । न तु विदिक्रियाकर्मात्मकम् । यदुक्तं श्रीस्वच्छन्दे—

यस्य रूपं शरीरं वा नास्ति वर्णः क्रिया तथा ।
स कथं गृह्यते सूक्ष्मो ह्यग्राह्यो नित्यमव्ययः ॥ इति ।

श्रीभर्गशिखायामपि—

नैष वर्णो न वा शब्दो न चैवायं कलात्मकः ।
केवलः परमानन्दो वीरो नित्योदितो रविः ॥
नास्तमेति न चोदेति न शान्तो न विकारवान् ।
सर्वभूतान्तरचरो भानुर्भर्ग इति स्मृतः ॥ इति ।

तदेतत्परब्रह्मात्मशक्तिमद्रूपम्। सद्व्यक्ति जिगमिष्विति। "ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः" इति स्थित्या शक्त्यात्मब्रह्मरूपतां जिघृक्षु खे सुषुम्णाधाम्नि अकारोकारमकारादिमात्रारूपाः कला विमर्शशक्तीः शनैः शनैः क्रमेण लाति गृह्णाति। इत्थं शक्तिमच्चिदर्कावभासितशब्दब्रह्मभित्तौ प्रणववपुषा ॐकारात्मना अव्यक्तेन पश्यन्तीवाक्प्रधानेन रूपेण न तु व्यक्तेन मध्यमादिवाग्भूमिकास्पृशा। "प्रणवः सर्ववेदेषु" इति स्थित्या क्रोडीकृताशेषवाच्यवाचकस्फारं शब्दब्रह्मोच्चरति स्वयं प्रवर्तते। न तूच्चार्यते। कीदृक्? विन्दुनादाभ्यां समस्तवेद्याभेदिवेदनसमस्तवाचकाभेदिपरामर्शरूपाभ्यामुदितम्। सर्वोत्कृष्टगगनारूढं सत्कथं समुच्चरति अत्रागमिकीं युक्तिं स्मारयति—करणेन दिव्यकरणवन्धेन न तु जिह्वामूलमध्यादिना व्यञ्जितं प्रकटीकृतम्। यदुक्तं श्रीस्वच्छन्दे—

"दिव्यं तु करणं कृत्वा तत्त्वस्योच्चारणं कुरु" इत्यादि।

यच्चैतच्छब्दब्रह्मतत्त्वशक्तिस्वरूपामर्शनमुखेनैव ते वाचकं तत्स्वरूपामर्शकम्॥ २१॥

प्रातः सन्ध्यारुणकिरणभागृङ्मयं राजसं यन्मध्ये
चापि ज्वलदिव यजुः शुक्लभाः सात्त्विकं वा।
सायं शामास्तमितकिरणं यत्तमोल्लासिरूपं
साह्नः सर्गस्थितिलयविधावाकृतिस्ते त्रयीव॥ २२॥

हे भगवंश्चिदर्क, अह्नः सार्वजनीनस्य प्राणदिनस्य सर्गस्थितिलयविधौ ते सम्बन्धिनी सा कृतिः क्रोडीकृताशेषसृष्ट्यादिस्तुर्याख्या शक्तिर्विजृम्भत इत्यर्थः। का सा इत्याह—प्रातः हृदुन्मेषात्मनि प्रभाते गुणीभूतप्राणापानवृत्तिः शिवशक्तिसंघट्टात्मा या सन्ध्या तत्र येऽरुणकिरणा अनुन्मिषितवैचित्र्यादीप्ताः शरीरादयश्चक्षुरादिप्रकाशास्तान् भजते यदत एव राजसं विश्वराजानं विश्वप्रसरासूत्रणं च ऋङ्मयम्। यच्च परधामामर्शनात्मा स्तुतिकृच्च मध्ये मध्यधाम्नि यजुश्चिद्देवतापूजात्मक्रियाशक्तिप्रधानम्। द्वैतेन्धनप्लोषादिव ज्वलत्। ह्लादात्मसोमव्याप्त्युन्मज्जनाच्छुक्लभाः अमलमात्मभाःस्वरूपम्। सात्त्विकं च सतां भावः सत्त्वं प्रकाशमानत्वं तस्येदं सम्पादकम्। स्वप्रकाशावेशेन विश्वप्रकाशकमित्यर्थः। सायमूर्ध्वतुर्यार्धेऽस्तमितकिरणं गलितप्राणादिसंस्कारक्षयात् प्रशान्तसितोज्ज्वलितमरीचिनिचयम्। अतश्च निःसंस्कारद्वैताद्वैतकवलनात्तदपेक्ष्यैव तमोवस्तुविश्रान्त्यैकरसत्वात् साम। एतत्त्रिविधं स्थूलसूक्ष्मपरस्वरूपं यल्लासि गृह्णासि सा तवाकृतिस्त्रयीव ऋग्यजुःसामानीव। तथाहि—प्रातरर्कदेवतास्तुतिप्रधाना ऋग्वेदव्याप्तिः। मध्ये कर्मानुष्ठानात्मा यजुर्वेदोदयः। सायं विश्रान्तिहेतुगीतप्रधाना सामवेदप्रधानतेति प्रतिदिनं स्थितिः॥ २२॥

ये पातालोदधिमुनिनगद्वीपलोकाधिबीज-
च्छन्दोभूतस्वरमुखनदत्सप्तसप्तिः प्रपन्नाः ।
ये चैकाश्वं निरवयववाग्भावमात्राधिरूढं
ते त्वामेव स्वरगुणकलावर्जितं . यान्त्यनश्वम् ॥ २३ ॥

अतलादीनि सप्त पातालानि । क्षीराद्याः सप्तोदधयः । अत्र्याद्याः सप्त मुनयः । महेन्द्राद्याः सप्त पर्वताः । जम्ब्वादीनि सप्त द्वीपानि । भूराद्याः सप्त लोकाः ।

मोहो मदश्च गर्वश्च विषादः क्रोध एव च ।
भयं च हर्षणं चैव देहे सप्ताधयः स्मृताः ॥

इत्युक्ता मोहाद्याः सप्ताधयः । यवादीनि सप्तबीजानि । गायत्र्यादीनि सप्तच्छन्दांसि । भूताः प्राप्ताः । एतदामाशत्वात् । ईदृग्विश्वप्रपञ्चरूपा ये षड्जाद्याः सप्त स्वरास्ते मुखेषु येषां ते तन्मुखास्तानेवार्थान्नदन्तो ध्वनन्तः सप्त सप्तयो मनोबुद्धीन्द्रियात्मानोऽश्वा यस्य तादृशं त्वां प्रपन्नाः । ये च निरवयवा वाक् पश्यन्ती तस्या भावः सत्ता तन्मात्राधिरूढं मध्यमामोन्मिषत्पश्यन्त्यामर्शपरिमर्शितम् । अतश्चैकाश्वं च त्वां बुद्ध्वा ये प्रपन्नाः, उभयेऽपि ते त्वामेवानश्वं चिदर्कं परं ब्रह्म यान्ति त्वदेकतामाप्नुवन्ति । कीदृशम् ? स्वरैः षड्जादिभिः गुणैः सत्त्वादिभिः कलाभिरकारादिभिर्वर्जितं निरुपाधिप्रकाशानन्दघनम् । साश्वोपासनानश्वप्राप्तिहेतुरिति विरोधाभासः ॥ २३ ॥

दिव्यं ज्योतिः सलिलपवनैः पूरयित्वा त्रिलोकी-
मेकीभूतं पुनरपि च तत्सारमादाय गोभिः ।
अन्तर्लीनो विशसि वसुधां तद्गतः सूयसेऽन्नं
तच्च प्राणास्त्वमिति जगतां प्राणभृत् सूर्य आत्मा ॥ २४ ॥

हे भगवन्, त्वं ज्योतिःसलिलपवनैश्चित्प्रकाशकरन्ध्रप्रविशच्छाक्तामृतप्राणमरुद्भिस्त्रिलोकीं जागरस्वप्नसुषुप्तित्रयीं पूरयित्वा तस्यामेव त्रिलोक्यामेकीभूतं सामरस्यं प्राप्तं दिव्यं सारं तुर्यानन्दघनं गोभिरनुत्तरैर्मरीचिभिः पुनरिति पुनः पुनरादाय चमत्कृत्य अन्तरिति अन्तर्मुखे पदे लीनो वसुधां परां भूमिं विशसि तन्मयतया स्फुरसि तद्गतश्चान्नमदनविषयं वेद्यजातं सूयसे आश्यानीभूय तद्रूपतया स्फुरसि । तच्चान्नं प्राणापानावस्थितिहेतुस्त्वमेव न त्वन्यत् किञ्चिदिति । अनया युक्त्या सूर्यः प्राणभृदात्मा च कथ्यसे । यदाह श्रुतिः—"अहमन्नमहमन्नदोऽहमन्नादश्च" इति । बाह्योऽपि सूर्यो भूर्भुवःस्वस्त्रयीं ज्योतिःसलिलपवनैस्तत्र तत्र समय आपूर्य समरसी-

भूतं दिव्यं त्रिलोक्यां रसरूपं सारं रश्मिभिर्ग्रीष्मादावादाय पुनरपि भूमिमन्तस्तापनयुक्त्या लीनः सन् विशति। तद्गतश्चान्नमोषध्याख्यं प्राणावस्थितिहेतुं जनयति। ततः स एवान्नमन्नदोऽन्नादश्च ॥ २४ ॥

अग्नीषोमौ प्रकृतिपुरुषौ बिन्दुनादौ च नित्यौ
प्राणापानावपि दिननिशे ये च सत्यानृते द्वे।
धर्माधर्मौ सदसदुभयं योऽन्तरावेश्य योगी
वर्तेतात्मन्युपरतमतिर्निर्गुणं त्वां विशेत् सः ॥ २५ ॥

यो योगी नित्यौ सततवाहिनौ प्राणापानावेव कवलनाप्यायनहेतुत्वादग्नीषोमौ ज्ञानक्रियाशक्तिप्राधान्यात् प्रकृतिपुरुषौ वेदनविमर्शत्वाद् बिन्दुनादौ प्रसरविश्रान्तिपदत्वाद् दिननिशे विकाससंकोचनिमित्तत्वात् सत्यानृते ऊर्ध्वाधोगतिकारणत्वाद् धर्माधर्मौ बाह्यानां सत्तासत्तयोर्ज्ञापकत्वात् सदसदुभयमन्तरुदानधाम्नि आवेश्य विलाप्यात्मनि चिद्धाम्नि वर्तेतावतिष्ठेत स त्वां निर्गुणं सत्त्वादिगुणातीतं परमादित्यं विशत्येव ॥ २५ ॥

गर्भाधानप्रसवविधये सुप्तयोरिन्दुभासा
सापत्न्येनाभिमुखमिव खे कान्तयोर्मध्यसंस्थः।
द्यावापृथ्व्योर्वदनकमले गोमुखैर्बोधयित्वा
पर्यायेणापिबसि भगवन् षड्रसास्वादलोलः ॥ २६ ॥

हे भगवंश्चिद्भानो! द्यावापृथ्व्योः सर्वद्वादशान्तात्मान्तरिक्षदेहभूम्योः कान्तयोर्निजविज्ञानेनैव रमणीयतां प्रापितयोर्वदनकमले शक्तिनलिने गोमुखैरनुत्तरैर्मरीचिभिर्बोधयित्वा विकास्य असामान्यशाक्तानन्दास्वादनलम्पटः सन् पर्यायेण विचित्रोन्मेषनिमेषक्रमैरापिबसि चमत्कुरुषे। कीदृशः? मध्यसंस्थोऽग्नीषोमाधिरूढः। किमर्थम्? गर्भे स्वान्तर्यदाधानं प्रक्षेपोऽर्थाद्विश्वस्य प्रसवस्तदौचित्येन भासनं तद्विधानार्थम्। कीदृश्योर्द्यावापृथिव्योः? खे शून्यप्रमातरि सुप्तयोः "कलोद्वलितमेतच्च चित्तत्त्वं कर्तृतामयम्। अचिद्रूपस्य शून्यादेर्मितं गुणतया स्थितम् ॥" इति नीत्या शून्यप्रधानताश्रयेण निमज्जितपारमार्थिकस्वरूपयोरभिमुखावस्थितयोः। कथं सुप्तयोः? सापत्न्येन परस्परप्रतियोगितयैवाभिमुखं कृत्वा। उभयानुकूलत्वादाभिमुख्यमाश्रित्येत्यर्थः। बाह्योऽप्यर्को द्यावापृथिव्यो रात्राविन्दुभासा सुप्तयोर्मीलितस्वरूपयोरभिमुखावस्थितयोर्मध्ये गोभिर्वदननलिने विकास्य तदीयविचित्ररसास्वादलोल आपिबति भौमान्तरिक्षान् रसान्। गर्भाधानाय ग्रीष्मादौ कर्षण्यादिनिजरश्म्यन्तर्निवेशनाय। प्रावृडादौ च प्रसवाय वर्षण्यादिमरीचिविसर्गतो नानौषध्युत्पत्तये। अर्थं च सापत्न्येनाभिमुखयोः

सुप्तयोरिन्दुभासोपलक्षितयोः कर्पूराच्छुरितयोः कान्तयोर्मध्यसंस्थो नायको वैदग्ध्याद् गोमुखैर्वक्त्रपद्मे पर्यायेण युगपद् बोधयित्वा लोचनपरिचुम्बनपुरःसरमुन्निद्रे विधाय वक्त्रासवामृतलम्पटो गर्भस्याधानप्रसवनिमित्तमापिबति रतयेऽत्यर्थं परिचुम्बतीति श्लेषालङ्कारः श्लेषध्वनिसंसृष्टश्च ॥ २६ ॥

सोमं पूर्णामृतमिव चरुं तेजसा साधयित्वा
कृत्वा तेनानलमुखजगत्तर्पणं वैश्वदेवम् ।
आमावस्यं विघसमिव खे तत्कलाशेषमश्नन्
ब्रह्माण्डान्तर्गृहपतिरिव स्वात्मयागं करोषि ॥ २७ ॥

हे चिदर्क ! ब्रह्मरन्ध्रावस्थितशाक्तब्रह्मोपलक्षितस्याण्डस्य अन्तरिति धरामूलमाया-शक्त्यण्डचतुष्टयस्य मध्ये गृहे स्वात्मयागं करोषि । किं कृत्वा ? सोमं रूपादिपञ्च-दशात्मकमेयं तेजसा निजमरीचिविस्फुरणेन पूर्णामृतं चरुरिव साधयित्वा "एकैकत्र च तत्त्वेऽपि षट्त्रिंशत्तत्त्वरूपता" इति कृत्वा विश्वात्मनिजशाक्तामृताभासमयं स्वसंनिविष्टं विधाय । अनल उदानवह्निर्मुखं प्राप्त्युपायो यस्य ब्रह्माद्यनाश्रितान्तकारणाधिष्ठित-धरादिशिवतत्त्वान्ताध्वविस्फारमयस्य जगतस्तस्य तर्पणं यत्तदेव वैश्वदेवं यागं तेन सोमेन चरुणा विधाय तस्य सोमस्य कलाशेषं जगत्तर्पणोपयुक्तकलापञ्चदशावशिष्ट-मूर्ध्वतुर्याख्यामावस्यासम्बन्धि अमाख्यकलारूपं विघसमिव कवलिताशेषसंस्कार-कल्पमिवाश्नन् ।

अमृतं चन्द्ररूपेण द्विधा षोडशधा पुनः ।
पिबन्ति च सुराः सर्वे दश पञ्च पराः कलाः ॥
अमाशेषगुहान्तःस्थामावस्या विश्वतर्पिणी ॥

इति श्रीकालिकाक्रमादिष्टनीत्या विश्वदेवता परमार्थे स्वात्मनि चमत्कुर्वन् । कीदृक् त्वम् ? गृहपतिरिव । सोऽपि हि पूर्णामृतकल्पमामावस्यं चरुं प्रसाध्य तेनाग्निप्रमुख-सर्वजगत्तर्पणं वैश्वदेवं च कृत्वा तच्छेषमश्नन् स्वात्मदेवतायागं करोति । बाह्योऽपि सूर्यः स्वरश्मितापप्रद्रावितसोमकलापञ्चदशकेन देवर्षिनरात्मजगत्तर्पणं विधायामाख्यकला-चमत्करणात्स्वात्मयागं ब्रह्माण्डस्यान्तर्विधत्ते ॥ २७ ॥

कृत्वा नक्तं दिनमिव जगद्बीजमाव्यक्तिकं यत्
तत्रैवान्तर्दिनकर तथा ब्राह्ममन्यत्ततोऽल्पम् ।
दैवं पित्र्यं क्रमपरिगतं मानुषं चाल्पमल्पं
कुर्वन् कुर्वन् कलयसि जगत् पञ्चधावर्तनाभिः ॥ २८ ॥

हे दिनकर विश्वोदयकारिदिवससंपादक चिद्भानो, जगतः सदाशिवान्तस्य विश्वस्य यद् बीजमारम्भावसानयोरुदयापवर्गकारणं श्रीस्वच्छन्दादिष्टविततपरार्धात्म-कालरूपमहोरात्रं तत्कृत्वाभास्य तत्रैवान्तर्जगतः कलादिक्षित्यन्तस्याशुद्धाध्वरूपस्य बीजं मायेयमहोरात्रं तदन्तरप्याव्यक्तिकं प्राकृतं तदन्तरपि ब्राह्मं तत्रापि दैवं तत्रापि पित्र्यं पितृसम्बन्धि तत्रापि मानुषं क्रमेणाल्पमल्पं कुर्वन् कुर्वन्निव वैचित्र्य-सहस्रैराभासयन्निव जगद्विश्वं पञ्चधावर्तनाभिर्विचित्रजागरादिदशापञ्चकपरावर्तनैः कलयसि अन्तरवस्थितं बहिः क्षिपसि। निर्मिमीषे निर्मितं च कलयसि। इदमित्थ-मिदमिदमिति संख्यानेन स्थापयसि। स्थापितमपि कलयसि अन्तःसंहरसि। संहृतमपि कलयसि संस्कारगालनेन विमृशसि। विमृष्टमपि कलयसि स्वात्माभेदेन जानीषे स्वप्रकाशैकात्म्यमापादयसि। तथा पुनरपि स्वरूपात् कलयसि नवं नवमुल्लासयसि। इत्येवं सर्गस्थितिसंहृतिविलापनस्वात्मैक्याभासनपरस्परान्दोलनलीलाक्रान्तं करोषि। अत्र जगद्बीजमावर्त्ये द्विर्योज्यम्। अल्पमल्पमिति वीप्सायाम्। अयमाशयः—यद्यस्य यावदहोरात्रं तत्तदीये प्राणचारे तदंशांशकास्वपि वा श्रीस्वच्छन्दादिष्टमासोदयादिषष्ट्य-ब्दोदयान्तप्रक्रियया योगिज्ञानापेक्षयातिपरिमितमाभासयति भगवान्, तत्राप्यन्त-र्विश्वैकात्म्यप्रथनात् सादाशिवान्तकालकलनामशेषामाभासयतीत्याभासमानोऽयं कालो न त्वस्य वास्तवं किञ्चित्तत्त्वमस्ति। अत एव कुर्वन्निवेतीवशब्देनायमेवार्थः स्पष्टः। वस्तुतो ह्येतावद्विश्वोदयावस्थानविलापनाद्यात्मा परमेश्वर एवेति स्फुरति। न तु चिदेकवपुषस्ततोऽतिरिक्तं किमप्यस्ति। अत्र च मानुषाद्यहोरात्रप्रमाणं श्रीस्वच्छन्दे चोक्तम्। तद्यथा—

मुहूर्तास्तु तथा त्रिंशदहोरात्रस्तु मानुषः।
दक्षिणं चायनं रात्रिरुत्तरं चायनं दिनम्॥
पितृणां तदहोरात्रमनेनाब्दं तु पूर्ववत्।
एवं दैवैस्त्वहोरात्रः ..................॥ इति।

यत्त्विह दैवं पित्र्यं पृथगुक्तं तत्पितृसम्बन्ध्यहोरात्रो ज्ञेयः। तेषां शुक्लकृष्णरूपो हि सः। किञ्च—

कल्पो ब्रह्मदिनं प्रोक्तं चतुर्युगसहस्रकम्।
षट्त्रिंशत्तु सहस्राणि ब्रह्मणः प्रलयोद्भवः॥
अव्यक्तस्थेषु रुद्रेषु दिनरात्रिश्च तावती।
प्राधानिकपरार्धेन दशधा गुणितेन तु।
माया संहरते सर्वं पुनश्चैव सृजेज्जगत्॥ इति।

तथा—

शक्तिकालपरार्धस्य कोटिधा गुणितस्य च।
अनाश्रितस्य देवस्य दिनमेतत् प्रकीर्तितम्॥

इत्येवमादि। तथैकत्र प्राणचारे घटिकोदयात् प्रभृति षष्ट्यब्दोदयान्तं विततं तत्रादिष्टं ग्रन्थगौरवभयान्न दर्शितम्। एवमहोरात्रकृत्त्वेन जगद्विपरिवर्तकत्वं भगवत उक्तम्॥ २८॥

ये त्वहोरात्रप्रशमे रूढास्ते लोकोत्तरा एवेत्याह—

तत्त्वालोके तपन सुदिने ये परं संप्रबुद्धा
ये वा चित्तोपशमरजनीयोगनिद्रामुपेताः।
तेऽहोरात्रोपरमपरमानन्दसंध्यासु सौरं
भित्त्वा ज्योतिः परमपरमं यान्ति निर्वाणसंज्ञम्॥ २९॥

हे तपन महाप्रकाशरूप, ये योगिनस्तत्त्वालोकात्मनि शोभनेऽनिशोदितेऽनस्तमिते दिने पारमार्थिके सर्वदशानुस्यूते सर्वतोमुखे चित्प्रकाशे सम्यक् प्राणायामाद्यायासं विना विमर्शयुक्त्या प्रबुद्धा गलिताख्यातितामिस्राः। ये चान्ये चित्तोपशम एव सर्वबाह्याभ्यासनिवृत्तिहेतुत्वाद् रजनी, तस्यां योगनिद्रामुपेताः। प्रशमितविकल्पसविकल्पप्रकाशैक्यमापन्नाः। उभयेऽपि ते प्राग्वर्णितसमस्ताहोरात्रोपरम एव परमानन्दरूपाः सन्ध्या निमज्जत्प्राणापानव्याप्तिशिवसामरस्यभुवः सर्वतोदिक्कमुदितास्तासु सौरमिति प्राणीयमपरममिति स्थूलं ज्योतिः संकुचितं प्रकाशं भित्त्वा निःसंस्कारं विलाप्य परं निर्वाणमार्गं यान्ति सदा परं शाक्तं धामाश्लिष्यन्ते॥ २९॥

न केवलं चित्रां कालकलनामकालकलितस्वरूपसमापत्तिं च दर्शयसि, यावज्जगदुदयापायावपीत्याह—

आ ब्रह्मेदं नवमिव जगज्जङ्गमस्थावरान्तं
सर्गे सर्गे विसृजसि रवे गोभिरुद्रिक्तसोमैः।
दीप्तैः प्रत्याहरसि च लये तद्यथायोनि भूयः
सर्गान्तादौ प्रकटविभवां दर्शयन् रश्मिलीलाम्॥ ३०॥

आब्रह्मणः शाक्ताद्रूपादाब्रह्म निजं परं शाक्तं रूपं वर्जयित्वा इदं सर्वं सादाशिवादिक्षित्यन्तं जङ्गमस्थावरे अन्तौ भागौ यस्य तादृग् जगत्सर्गे सर्गे प्रथमेच्छोन्मेषात्मन्यादिसर्गे भूयो भूय उद्रिक्तसोमैः स्फीतशाक्तामृतैर्गोभिर्मरीचिभिर्विसृजसि आश्यानीभूतं निजरश्मिरूपं प्रकटयसि। भूयो दीप्तैरग्निप्रधानैर्गोभिस्तज्जगद्यथायोनि प्रत्याहरसि स्वस्वातन्त्र्यावभासिततत्तत्कारणनिवेशपुरःसरं लये स्वचिदैक्याभासनात्मनि संहारे प्रतीपमाहरसि चिदेकमयमेव करोषि। किं कुर्वन्? सर्गस्य सृष्टेरादौ अन्ते प्रकटविभवां स्फुटमाहात्म्यां रश्मिलीलां प्रकटयन्निजमरीचिविलासमाभासयन्॥ ३०॥

श्रित्वा नित्योपचितमुचितं ब्रह्मतेजःप्रकाशं
रूपं सर्गस्थितिलयमुचा सर्वभूतेषु मध्ये ।
अन्तेवासिष्विव सुगुरुणा यः परोक्षः प्रकृत्या
प्रत्यक्षोऽसौ जगति भवता दर्शितः स्वात्मनात्मा ॥ ३१ ॥

हे भगवन्, यः प्रकृत्या स्वभावेन परोक्षोऽक्षागोचर आत्मा असौ जगति सर्वभूतेषु मध्ये भवताऽन्तेवासिषु अनुग्राह्येषु आत्मनैव प्रत्यक्षो दर्शितः स्वप्रकाशतया प्रकटीकृतः। किं कृत्वा ? नित्योपचितं सदा परिपूर्णमुचितं चिदानन्दघनं रूपं श्रित्वा देहादिनिमज्जनेनोन्मग्नं विधाय। कीदृग् रूपम् ? ब्रह्मतेजःप्रकाशं बृहत्त्वाद् बृंहकत्वाच्च ब्रह्म द्वैतदाहित्वात्तेजो यस्य तादृशः प्रकाशः प्रथा यस्य। कीदृशेन भवता ? सर्गस्थिति-लयमुचा जननादिशून्येन यथान्तेवासिषु शिष्येषु शोभनेन दृष्टतत्त्वेन गुरुणा आत्मा दर्श्यते चिन्मयी सत्ता प्रकटीक्रियते, तथा त्वयान्तः परमात्मतया बहिश्च तेजो विश्व-रूपतया स्वयमात्मा प्रकटीक्रियते ॥ ३१ ॥

लोकाः सर्वे वपुषि नियतं ते स्थितास्त्वं च तेषा-
मेकैकस्मिन् युगपदगुणो विश्वहेतोर्गुणीव ।
इत्थंभूते भवति भगवन्न त्वदन्योऽस्मि सत्यं
किन्तु ज्ञस्त्वं परमपुरुषोऽहं प्रकृत्यैव चाज्ञः ॥ ३२ ॥

हे भगवन् परानन्दात्मक स्वातन्त्र्यशक्तिस्वरूपपरावागालिङ्गितमूर्ते, ते तव विश्वहेतोरशेषकारणस्य वपुषि प्रकाशानन्दघने स्वरूपे सर्वे लोका लोक्यमानाः पदार्थाः, लोकयितारश्च रुद्रक्षेत्रज्ञरूपाः प्रमातारः स्थिताः। त्वच्चिदात्मिकां सत्तां विना हि कथमेते त्वत्तो विश्वहेतोरुदियुः। तेषां च लोकानां संबन्धिन्येकैकस्मिन् वपुषि त्वं युगपदक्रमेणैव स्थितः। अन्यथा ते त्वत्प्रकाशतां विना हि कथं प्रकाशेरन्। अतश्च त्वं सत्त्वादिगुणहीनोऽपि विश्वात्मताभासगुणाद् गुणीवाभासि । इत्थमुपवर्णिते विश्वात्मनि भवति सति सत्यमस्मि नान्यः। किन्तु त्वमेवंभूतः परमः पुरुषो ज्ञः परिपूर्णः सार्वज्ञ्यादिधर्मः । अहमिति त्वयैव देहादिषु आहितप्रमातृभावः प्रकृत्या त्वन्मायामाहात्म्यादज्ञः । अतश्च देहादिप्रमातृतानिमज्जनेनाज्ञतां प्रशमय्य नित्यं स्वात्मसमावेशेन ज्ञतां ममोन्मज्जयेत्यर्थादुक्तं भवति ॥ ३२ ॥

संकल्पेच्छाद्यखिलकरणप्राणवाण्यो वरेण्याः
संपन्ना मे त्वदभिनवनाज्जन्म चेदं शरण्यम् ।
मन्ये चास्तं जिगमिषु शनैः पुण्यपापद्वयं तद्
भक्तिश्रद्धे तव चरणयोरन्यथा नो भवेताम् ॥ ३३ ॥

इत्थमज्ञस्यापि मे त्वदभिनवनाच्चिदात्मत्वदाभिमुख्यप्रवृत्तत्वत्परामर्शात्मस्तुतिवशात्। संकल्पः स्थूलेच्छा। इच्छा सङ्कल्पकारणभूता सूक्ष्मविकल्पपरामर्शात्मा। आदिशब्दात् प्रयत्नस्तदनन्तरमालोचनादानादिप्रवृत्तानि वाग्वर्जान्यखिलानि करणानि सत्सहवृत्तिः प्राणः, सर्वत्रात्र सूक्ष्मपरामर्शरूपतया व्यापकत्वेन स्थिता वाणी चेत्येते मम वरणे परानुग्रहे साधवो वरेण्या जाताः, तथेदमिति पश्चिमजन्म शरण्यं शरणे साधु अनुग्राह्यानुग्रहैकपरं सम्पन्नम्। अहं हि सर्वदशासु चिदर्कपरामर्शपरः परानप्यनुगृह्णन् स्थितः। किञ्च, मन्ये स्वानुभवेनैवैतच्चेतये यत्पुण्यपापद्वयं सुकृतासुकृतजातं सर्वं तदित्यनन्तजन्मार्जितं शनैरस्तं जिगमिषु हिमविलायं विलीयमानं स्थितम्। प्राक्संचितसर्वकर्मणां हि ध्वंसेऽपि देहारम्भककर्मणां ध्वंसोन्मुखत्वाज्जिगमिष्विल्युक्तम्। अन्यथेति। यदि नैवं स्यात्तत्कथं भवच्चरणयोर्भक्तिश्रद्धे भवेताम्। नैव स्याताम्। यदुक्तं नन्दिशिखायाम्—

यदा शिवेऽभिलाषो वै जायते च नृणां सदा।
तदा शिवाभिमानास्ते जायन्ते परमाणवः॥
मुक्तास्तदैव ते दीक्षां प्राप्नुवन्ति गुरोस्ततः॥ इति॥ ३३॥

सत्यं भूयो जननमरणे त्वत्प्रपन्नेषु न स्त-
स्तत्राप्येकं तव नुतिफलं जन्म याचे तदित्थम्।
त्रैलोक्येशः शम इव परः पुण्यकायोऽप्ययोनिः
संसाराब्धौ प्लव इव जगत्तारणाय स्थिरः स्याम्॥ ३४॥

हे देव, यद्यपि त्वत्प्रपन्नेषु त्वत्समाविष्टेषु संसारहेतुसर्ववासनादाहाद् भूयो जननमरणे न स्तः, तथापि त्वन्नुतिस्त्वत्स्तुतिरेव फलं यस्य तादृगिदमेकं पश्चिमजन्म याचे। यथा भवदवमर्शात्मचमत्काराधायि एतन्मागात्। तदित्थमनेनैव त्वन्नुतिरसाविष्टेन प्रकारेणास्मिन्नेव देहे परः शम इव शाम्यत्यस्मिन् विश्वमिति व्युत्पत्त्या परः शङ्करात्मस्वभाव इव जाग्रत्स्वप्नसुषुप्तात्मनि त्रैलोक्ये ईशः प्रभुः। न तु परतन्त्रः। अत एव पुण्यो दर्शनस्पर्शनादिना परानुग्राही कायो यस्य तादृक्। अयोनिरिति नित्योदितचिदानन्दैकघनः सन् जगतो विश्वस्य तारणाय संसाराब्धिमध्ये प्लव इव पोत इव स्थिरः स्यां चिरकालं भूयासम्॥ ३४॥

सौषुम्णेन त्वममृतपथेनैत्य शीतांशुभावं
पुष्णास्यग्रे सुरनरपितॄन् शान्तभाभिः कलाभिः।
पश्चादम्भो विशसि विविधाश्चौषधीस्तद्गतोऽपि
प्रीणास्येवं त्रिभुवनमतस्ते जगन्मित्रतार्क॥ ३५॥

हे अर्क ! अतो हेतोस्ते जगतो मित्रता यौगिकमित्रशब्दाभिधेयत्वम्, यतस्त्वं सौषुम्णेन मध्यमेनामृतपथेनाप्यायिना मार्गेण शीतांशुभावमपानचन्द्रत्वमेत्यागत्याग्रे प्रथमं सुरादीन् सर्वान् प्रमातॄन् पुष्णासि लब्धावस्थितीन् करोषि । केन शान्तभाभिरन्तर्मुखीभावेनोपसंहृतबाह्यप्रथाभिः कलाभिरादिविसर्गान्तस्वाभाविमर्शशक्तिभिः । पश्चादनन्तरमम्भ इति बहिः प्रसरप्रवृत्तान् सर्ववाहान् विशसि स्वामृताच्छुरितान् करोषि। विविधाश्चौषधीर्विशसि स्थावरादिसर्वबाह्याभासान् स्वप्रकाशापूरितान् विधत्से। तद्गतो मेयप्रपञ्चात्मतया स्फुरितोऽपि त्रिभुवनं विश्वमेवमिति तदाभासनविमर्शनयुक्त्यैव चन्द्रत्वमेत्य पूर्वोक्तनीत्या सुरादीन् प्रीणासि तर्पयसि । बाह्योऽप्यर्कः सुषुम्णामार्गेणामृतसंक्रमणयुक्त्या चन्द्रत्वमेत्य पूर्वोक्तनीत्या सुरादीन् पुष्णाति । शान्तभाभिर्निवृत्तदीप्तिभिः कलाभिः शक्तिभिरम्भो विशति दक्षिणायने आसाररूपतां स्वीकरोति। ओषधीश्च विशति सरसाः करोति। तद्गतश्च वैश्वदेवयागानुयागक्रमेण त्रिभुवनं पुष्णन् जगन्मित्रत्वमेव दर्शयति ॥ ३५ ॥

मन्दाक्रान्ते तमसि भवता नाथ दोषावसाने
नान्तर्लीना मम मतिरियं गाढनिद्रां जहाति ।
तस्मादस्तंगमिततमसा पद्मिनीवात्मभासा
सौरीत्येषा दिनकर परं नीयतामाशु बोधम् ॥ ३६ ॥

हे नाथ दिनकर स्वामिन् चिदर्क, त्वया तमस्यज्ञाने मन्दाक्रान्ते निर्मूलनायाघ्राते सति इयं मदीया मतिर्धी रागद्वेषाणामवसाने जातेऽपि अन्तर्लीनान्तर्मुखीभूतापि गाढनिद्रां त्वदभेदाख्यातिं न जहाति । तस्मादेषा त्वया अस्तंगमितं तमो यया तादृश्यात्मभासा स्वदीप्त्या कारणभूतया आश्वविलम्बितमेव परं बोधं प्रशान्ताख्यातिनिजज्योतिरात्मतां नीयतां प्राप्यताम्। सूर्यो देवता यस्याः सा सौरीति कृत्वा पद्मिनीव नलिनीव। सापि त्वया दोषावसाने प्रभाते तमसि मन्दाक्रान्तेऽन्तर्लीना कर्णिकासंश्लिष्टदला गाढनिद्रां न जहातीत्यस्तंगमिततमसा स्वात्मभासा गाढीभूतज्योतिषा प्रबोध्यते त्वया ॥ ३६ ॥

येन ग्रासीकृतमिव जगत्सर्वमासीत्तदस्तं
ध्वान्तं नीत्वा पुनरपि विभो तद्दयाघ्रातचित्तः ।
धत्से नक्तंदिनमपि गती शुक्लकृष्णे विभज्य
त्राता तस्माद्भवपरिभवे दुष्कृते मेऽपि भानो ॥ ३७ ॥

हे विभो भानो चिन्मरीचिमालिन्, येन तमसाऽज्ञानेन जगदिदं ग्रासीकृतमासीत्, तदनुगृहीतान् प्रत्यस्तं नीत्वा विनाश्य तद्दयाघ्रातचित्त इव तदनुकम्पयैव शुक्लकृष्ण-

गती विभज्य व्युत्थानावसरे प्राणापानभूमिकामवरुह्य तद् ध्वान्तं पुनरपि धत्से पुष्णासि। निर्व्युत्थानं समाधिं झगिति न वितरसीत्यर्थः। यथा बाह्यो भानुर्ग्रासीकृतजगत्तिमिरं विनाश्य पुनर्दययेव नक्तंदिनं निशादिने विभज्य धत्ते पुष्णातीति श्लेषोपमा। यत एवं दुरात्मनि तमस्यपि त्वमनुकम्पावानिव ततो मे मम परिभवे व्युत्थानात्मनि क्लेशेऽपि त्राता रक्षिता भव। कीदृशे परिभवे ? दुष्कृते दुष्टं कृतं करणं विषयहानादानादिपरिभवो यत्र। निर्व्युत्थानसमावेशरसास्वादिनं मां कुर्वित्यर्थः ॥३७॥

व्युत्थितः समावेशमप्राप्नुवन् व्युत्थानदशानिर्भर्त्सनपरः समावेशपरं भगवन्तं प्रार्थयितुमाह—

आसंसारोपचितसदसत्कर्मबन्धाश्रितानामाधिव्याधिप्रजनमरणक्षुत्पिपासार्दितानाम्।
मिथ्याज्ञानप्रबलतमसा नाथ चान्धीकृतानां
त्वं नस्त्राता भव करुणया यत्रतत्रस्थितानाम् ॥ ३८ ॥

सत्पुण्यम्। असत्पापम्। यत्रतत्रस्थितानामिति देशे कालेऽवस्थावैचित्र्ये च त्राता समावेशप्रथनेन रक्षकः। शिष्टं स्पष्टम् ॥ ३८ ॥

सत्यासत्यस्खलितवचसां शौचलज्जोज्झितानामज्ञानानामफलसफलप्रार्थनाकातराणाम् ।
सर्वावस्थास्वखिलविषयाभ्यस्तकौतूहलानां
त्वं नस्त्राता भव पितृतया भोगलोलार्भकाणाम् ॥ ३९ ॥

भोगेषु विषयसुखेषु लम्पटानामस्माकमर्भकाणां बालानामिव त्वं पितृतया जनकत्वेन त्राता भवेति प्राग्वत्। त्वं ह्यस्माकं तत्त्वदृष्ट्या जनकः। सत्यासत्येत्युभयत्र समम्। स्खलितं प्रमादि एकत्र, अन्यत्राऽस्पष्टवर्णत्वम्। एवं शौचं चैत्तं शारीरं च। अफला सफला च या प्रार्थना तया कातराणामधीराणाम्। यत्तत्प्रार्थयमानानामिति। सुबोधमन्यत् ॥ ३९ ॥

यावद्देहं जरयति जरा नान्तकादेत्य दूती
नो वा भीमस्त्रिफणभुजगाकारदुर्वारपाशः ।
गाढं कण्ठे लगति सहसा जीवितं लेलिहान-
स्तावद्भक्ताभयद सदयं श्रेयसे नः प्रसीद ॥ ४० ॥

हे भक्ताभयद, यावद्व्युत्थितामरणावसानां दुर्दशां नाप्नुमस्तावन्नोऽस्माकं प्रसीद देहादिसंस्कारकालुष्यप्रशमनेन निर्मलीभव। निर्व्युत्थानप्रकाशानन्दघनपरमसमावेशामृतरसास्वादसुखितानस्मान् संपादयेत्यर्थः। स्पष्टमन्यत् ॥ ४० ॥

विश्वप्राणग्रसनरसनाटोपकोपप्रगल्भं
मृत्योर्वक्त्रं दहननयनोद्दामदंष्ट्राकरालम् ।
यावद् दृष्ट्वा व्रजति न भिया पञ्चतामेष काय-
स्तावन्नित्यामृतमय रवे पाहि नः कांदिशीकान् ॥ ४१ ॥

मृत्योरन्तकस्य वक्त्रं दृष्ट्वा यावदेष काय इति सपुर्यष्टको देहो भिया भीत्या पञ्चतां मृत्युं न व्रजति तावदेव रवे चिदर्क नित्यामृतमय अनस्तमितपरमानन्दैकघन-स्वभाव नोऽस्मान् कांदिशीकान् व्युत्थाने त्वत्समावेशप्राप्तिं विना कां दिशं कायतः का दिक्का दिगस्माकमिति क्रन्दतः पाहि निर्व्युत्थानसमावेशान् संपादय। कीदृङ् मृत्योर्वक्त्रम्? विश्वेषां प्राणग्रसनो जीवितभक्षको रसनाटोपो लोलरसनाव्यापारो यस्य तादृशि कोपे प्रगल्भं प्रौढम्। तथा दहनानि प्लोषकाणि नयनानि यस्य तादृक्। तथा उद्दामाभिरूर्जिताभिर्दंष्ट्राभिः करालम् ॥ ४१ ॥

शब्दाकारं वियदिव वपुस्ते यजुःसामधाम्नः
सप्तच्छन्दांस्यपि च तुरगा ऋङ्मयं मण्डलं च ।
एवं सर्वश्रुतिमयतया मद्दयानुग्रहाद्वा
क्षिप्रं मत्तः कृपणकरुणाक्रन्दमाकर्णयेमम् ॥ ४२ ॥

हे भगवन्, ते तव निर्णीतदृशा सामवेदात्मकं धाम तेजो यस्य तादृशः। यजुर्वेदात्मकं शब्दाकारं वपुः शरीरं वियदिव व्यापकम्। तदपि शब्दाकारमिति शब्दानाकरोति समस्तशब्दाश्रयः। अपि च गायत्र्यादि सप्तच्छन्दांसि ते तुरगाः। मण्डलं प्रभा परिवेषोऽपि ऋग्वेदमय इत्येवं सर्वश्रुतिमयत्वात्। यद्वा अनुकम्पा-प्रधानादनुग्रहान्मत्तो मत्सकाशादुक्तवक्ष्यमाणप्रार्थनापरत्वात् कृपणं विरसं संसार-विभावकत्वाच्च करुणं करुणरसप्रधानमिममाक्रन्दं त्वत्प्रसादप्रार्थनापरं प्रलपितं क्षिप्र-मुदीरणानन्तरमेवाकर्णय करुणयाऽस्मदनुजिघृक्षयाऽवधारय ॥ ४२ ॥

नाशं नास्मच्चरणशरणा यान्त्यपि ग्रस्यमाना
देवैरित्थं सितमिव यशो दर्शयन् स्वं त्रिलोक्याम् ।
मन्ये सोमं क्षततनुममागर्भवृद्ध्या विवस्वन्
शुक्लच्छायां नयसि शनकैः स्वां सुषुम्णांशुभासा ॥ ४३ ॥

हे भगवन् विवस्वन् चिद्भानो, अस्मच्चरणशरणा देवैरपि ग्रस्यमाना नाशं न यान्ति इत्येवं सितं शुभ्रं यशस्त्रिलोक्यां दर्शयन्निव सोमं क्षततनुं देवैरपि ग्रस्तसमस्त-कलं सुषुम्णाख्यमध्यनाड्या अंशवो मरीचयस्तद्भासा दीप्त्या हेतुभूतया अमाख्यकलया गर्भेऽन्तर्या वृद्धिस्तया स्वां शुक्लां छायां संपूर्णसितां कान्तिं नयसि प्रापयसीति मन्ये

जानामि। अत्र रहस्यदृशा देवा इन्द्रियाणि सोमोऽपानयुक्त्यान्तःप्रविष्टः षोडशकलारूपात्मा मेयवर्गः सर्ववाह्योल्लासयुक्त्या कलाग्रासेन क्षीणकलः सन् सुषुम्णांशुभासा मध्यधामस्फारेणोन्मिषच्छुभाख्यतुर्यप्रकाशदीप्त्या अमाया अन्ततुर्यार्धस्फुरच्छक्तेर्गर्भेऽन्तर्या वृद्धिः प्राणादिप्राधान्यनिमेषोन्मिषच्छाक्तवीर्यभाभिः स्फुरिता, तया शुक्लां चिदेकघनां नयसि प्रापयसीत्यर्थः। बाह्यस्तु स्पष्टः॥ ४३॥

आस्तां जन्मप्रभृति भवतः सेवनं तद्धि लोके
वाच्यं केनापरिमितफलं भुक्तिमुक्तिप्रकारम्।
ज्योतिर्मात्रं स्मृतिपथमितो जीवितान्तेऽपि भास्वन्
निर्वाणाय प्रभवसि सतां तेन ते कः समोऽन्यः॥ ४४॥

हे भास्वन्, जन्मप्रभृति यत्त्वत्सेवनं तदपरिमितफलं केन वाच्यं केन वक्तुं शक्यम्, इयत्तया परिच्छेद्यत्वाभावात्। तद्यस्माद् भुक्तिमुक्तिप्रकारं भुक्तिर्विषयभोग एव स्वात्मानन्दविश्रान्तिदत्वेन जीवच्छिवत्वाभिव्यक्तात्मा मुक्तिरेव च चिच्चमत्कारावेशरूपा भुक्तिः, न तु विषयासक्तिरूपा। तां भुक्तिं मुक्तिं प्रकाशयति सेवकांस्तन्मयान् संपादयति जीवितान्ते निर्वाणावसरेऽपि ज्योतिर्मात्रात्मा त्वं सतां स्मृतिपथं प्राप्तो निर्वाणाय मुक्तये प्रभवसि। अतस्ते समः कोऽन्यः। असामान्यमहिमाऽसीत्यर्थः॥४४॥

अप्रत्यक्षत्रिदशभजनाद्यत्परोक्षं फलं तत्
पुंसां युक्तं भवति हि समं कारणेनैव कार्यम्।
प्रत्यक्षस्त्वं सकलजगतां यत्समक्षं फलं मे
युष्मद्भक्तेः समुचितमतस्तत्तु याचे यथा त्वाम्॥ ४५॥

अप्रत्यक्षेन्द्रचन्द्रादिदेवताराधनादाराधकानां यत्स्वर्गप्राप्त्यादि परोक्षं कालान्तरे भावि फलं तद्युक्तम्। यतो मृद इव मृण्मयो घटः कारणोचितमेव सर्वत्र कार्यं भवति। त्वं तु चिदर्कः सर्वेषां प्रत्यक्षः स्वप्रकाशः, चिदर्कस्वप्रकाशात्मतां विना कस्याप्यप्रकाशादिति। त्वद्भक्तेर्हेतोर्मम नित्योदितत्वत्समावेशात्मफलं समुचितम्। अतो हेतोस्तत्फलं याचे प्रार्थये। यथा कृतिमतीषु देवतासु सतीषु त्वामेव याचे तथा निर्व्युत्थानसमावेशात्मैव फलं याचे। न तु मितं किञ्चित्॥ ४५॥

ये चारोग्यं दिशति भगवान् सेवितोऽप्येवमाहु-
स्ते तत्त्वज्ञा जगति सुभगा भोगयोगप्रधानाः।
भुक्तेर्मुक्तेरपि च जगतां यच्च पूर्णं सुखानां
तस्यान्योर्कादमृतवपुषः को हि नामास्तु दाता॥ ४६॥

येऽपि च केचिदविमृष्टसमावेशात्समुख्यफला भगवान्सेवित आरोग्यं दिशतीत्याहुस्तेऽपि जगति तत्त्वज्ञाश्च सुभगाश्च। यतो भोगयोगप्रधाना भोगाय योगाय चारोग्यं वाञ्छन्ति। युक्तं चैतत्। यतोऽमृतवपुषः परानन्दप्रकाशघनाच्चिदर्कादन्यः को नाम भोगमोक्षयोस्तदाश्रयस्य पूर्णसुखात्मन आरोग्यस्य च दाता। न कश्चित्। "पूरणगुणसुहितार्थ" इति तृप्त्यर्थैः सह षष्ठीसमासनिषेधाज्ज्ञापकात् सुखानां पूर्णमित्यत्र षष्ठी ॥ ४६ ॥

हित्वा हित्वा गुरुचपलतामप्यनेकान्निजार्था-
न्यैरेकार्थीकृतमिव भवत्सेवनं मत्प्रियार्थम्।
तेषामिच्छाम्युपकृतिमहं स्वेन्द्रियाणां प्रियाणा-
मादौ तस्मान्मम दिनपते देहि तेभ्यः प्रसादम् ॥ ४७ ॥

हे दिनपते चिद्भानो, यैरिन्द्रियैरन्तर्बहिःकरणैर्गुर्वीं चपलतां महतीमनवस्थितिं पुनः पुनः प्रवृत्तामपि तथाऽनेकान्निजार्थान् विषयविश्रान्त्यात्मकानि नानास्वप्रयोजनानि हित्वा त्यक्त्वा भवत्सेवनमन्तर्मुखीभावयुक्त्या त्वत्परिशीलनं मम प्रियार्थमेवैकार्थीकृतमभिनिवेशेनाश्रितम्। तेषां प्रियाणां स्वेन्द्रियाणामहमुपकारमिच्छामि। तस्मान्ममादौ तेभ्यः प्रसादं देहि मायीयदेहपरिहारेण निजमरीचिचक्रात्मतां प्रकटयेत्यर्थः ॥ ४७ ॥

किं तन्नामोच्चरति वचनं यस्य नोच्चारकस्त्वं
किं तद्वाच्यं सकलवचसां विश्वमूर्त्ते न यत् त्वम्।
तस्मादुक्तं यदपि तदपि त्वन्नुतौ भक्तियोगा-
दस्माभिस्तद्भवतु भगवंस्त्वत्प्रसादेन धन्यम् ॥ ४८ ॥

हे विश्वमूर्त्ते अनवच्छिन्न, त्वन्नुतिविषये इदन्तावच्छेदप्रधानतया असमञ्जसप्रायं किमप्यस्माभिस्त्वद्भक्तित उक्तं तद्विश्वस्य वाच्यवाचकात्मनस्तव प्रसादादन्तर्नैर्मल्यप्राप्तेर्धन्यमस्तु त्वद्रूपतयैव स्फुरतु ॥ ४८ ॥

या पन्थानं दिशति शिशिराद्युत्तरं देवयानं
या वा कृष्णं पितृपथमथो दक्षिणं प्रावृडाद्यम्।
ताभ्यामन्या विषुवदभिजिन्मध्यमा कृत्यशून्या
धन्या काचित्प्रकृतिपुरुषावन्तरा मेऽस्तु वृत्तिः ॥ ४९ ॥

प्रकृतिपुरुषौ वामदक्षिणवाहौ अन्तरा तन्मध्ये काचिदसामान्या धन्या संपन्मयी मे वृत्तिः स्थितिरस्तु। कीदृशी ? विषुं व्याप्तिमर्हतीति विषुवत्। अभिजयति

द्वैतप्रशमनात् सर्वोत्कर्षेण वर्तत इत्यभिजित्। सर्वमध्यवर्तित्वान्मध्यमा। स्वानन्दविश्रान्तिसारत्वात् कृत्यैः सौम्यक्रूरादिभिः कार्यैः शून्या। तथा देवप्रीतिकारित्वाद्देवयानं हृदो द्वादशान्तं यावत् प्रसरणरूपं शिशिरवसन्तग्रीष्मस्वभावमुत्तरपन्थानमुत्तरायणं या प्राणाख्या वृत्तिर्दिशति प्रथयति, या वा अपानाख्या वृत्तिर्द्वादशान्ताद्धृत्प्रवेशरूपा प्रावृट्शरद्धेमन्तरूपं दक्षिणं पन्थानं दक्षिणायनं भोगप्रदत्वात् कृष्णं पितृप्रीतिहेतुत्वात्पितृपथं दिशति ताभ्यामन्या व्यतिरिक्ता जीवन्मुक्तिप्रदा। उन्मनाख्येत्यर्थः। षट्त्रिंशदङ्गुलेऽङ्गुलषट्के हृदःप्रभृति मकरादिराश्युदय इत्यर्थः श्रीस्वच्छन्दादिशास्त्रेष्वस्ति ॥ ४९ ॥

स्थित्वा किञ्चिन्मन इव पिबन् सेतुबन्धस्य मध्ये
प्राप्योपेयं ध्रुवपदमथो व्यक्तमुद्घाल्य तालु।
सत्यादूर्ध्वं किमपि परमं व्योम सोमाग्निशून्यं
गच्छेयं त्वां सुरपितृगती चान्तरा ब्रह्मभूतः ॥ ५० ॥

सुरपितृगती अन्तरा ऊर्ध्वाधःप्रवेशात्मनिर्णीतदेवपितृमार्गयोर्मध्ये चकारात् सर्ववाहानामप्यन्तर्ब्रह्मभूतोऽनवच्छिन्नतां प्राप्तस्त्वां गच्छेयं परतत्त्वात्मचिदर्करूपः स्याम्। कीदृशं त्वाम्? सत्याद्विश्वसत्ताप्रदात् सामरस्याद्धाम्न ऊर्ध्वमुत्कृष्टं प्रकाशानन्दैकघनं किमपि परमं व्योमेत्यनुत्तरचिदाकाशरूपं सोमाग्निशून्यं प्रशान्तप्राणापानसंस्कारम्। किं कृत्वा? तालुलम्बिकाख्यरौद्रग्रन्थिधामव्यक्तिं कृत्वा। दिव्यकरणबन्धाश्रयत उद्घाल्य निर्भिद्य। अथो अनन्तरं ध्रुवपदं प्राप्य समस्तवेद्याविभागप्रकाशात्मबिन्दुस्थानमासाद्य। सेतुबन्धस्य मध्य इति निरोधकोर्ध्वशक्त्या तटद्वयान्तर्वाहिप्राणापानाद्युत्तरणोपायनादनादात्मसृष्टिनिरुद्धसमस्तकरन्ध्रमार्गे स्थित्वाऽधिरुह्य किञ्चिन्मनः पिबन्निव समनान्तसविकल्पकमनःसंस्कारं प्रशमयन् ॥ ५० ॥

सर्वात्मत्वं सवितुरिति यो वाङ्मनःकायबुद्ध्या
रागद्वेषोपशमसमतायोगमेवारुरुक्षुः।
धर्माधर्मग्रसनरशनामुक्तये युक्तियुक्तां
स श्रीसाम्बः स्तुतिमिति रवेः स्वप्रशान्तां चकार ॥ ५१ ॥

श्रयन्त्येतां योगिन इति श्रीस्तया मोक्षलक्ष्म्या सहितः साम्बो भगवद्वासुदेवसुत इत्येवंरूपां रवेश्चिदर्कस्य स्तुतिं स्वप्रशान्तामात्मविश्रान्तिपरामकरोत्। 'सुप्रतिष्ठाम्' इति वा पाठः। कीदृशीं स्तुतिम्? युक्त्या परस्वरूपविश्रान्त्यात्मना योगेन युक्ताम्। तत्ख्यापयित्रीमित्यर्थः। स इत्यस्य विषयं दर्शयति—यः सवितुर्विश्वकारणस्य चिद्भानोः सर्वात्मत्वं वैश्वरूप्यमेव योगमेकत्वमिच्छति। "वस्तुनोऽन्येन वस्तुना" इत्याम्नायदृशा

योगं परैक्यमित्युक्तदशारोढुमिच्छुः स्वीचिकीर्षुः। न त्वन्यत्किञ्चित्। कीदृशं योगम्? सर्वदोषमूर्धन्ययो रागद्वेषयोरुपशमे सति या समता साम्यं तद्रूपम्। केन? वाङ्मनःकायसहितया बुद्ध्या। वाचा स्तुतिभिः, मनसाऽनुसंधानतः, कायेन कायप्राधान्येन निमज्जनात्मकप्रणामेन, बुद्ध्याऽध्यवसायेन। किमर्थमिमां स्तुतिमकरोदित्याह—धर्माधर्माभ्यां यद्ग्रसनमर्थादबुद्धस्य जगतस्तदेव रशना बन्धनरज्जुस्तस्या मुक्तये। एतत्स्तोत्रपाठावमर्शाभ्यां जना जीवन्मुक्तिमायान्त्वित्याशयादित्यर्थः॥ ५१॥

भक्तिश्रद्धाद्यखिलतरुणीवल्लभेनेदमुक्तं
श्रीसाम्बेन प्रकटगहनं स्तोत्रमध्यात्मगर्भम्।
यः सावित्रं पठति नियतं स्वात्मवत् सर्वलोकान्
पश्यन् सोऽन्ते व्रजति शुकवन्मण्डलं चण्डरश्मेः॥ ५२॥

इदमध्यात्मगर्भं क्रोडीकृतरहस्यम्, प्रकटं बाह्यार्थदृशा, गहनं चाध्यात्मकार्थयोगात्, सावित्रं चिद्भानुसम्बन्धि स्तोत्रं श्रीसाम्बेनोक्तं यः कश्चित् स्वात्मानमिव सर्वलोकान् पश्यंश्चिदभेदात्मविश्वं स्तोत्रार्थं भावयन्नियतं निश्चयेन पठति अनवरतं विमृशति, सोऽन्ते चण्डरश्मेर्द्वैतग्रासिनश्चिदर्कस्य मण्डलं लीढविश्वसमरसीभूतमरीचिचक्रमेति। तन्मयो जायते। शुकवद् भगवद्व्याससुतवत्। कीदृशेन साम्बेन? भक्तिश्रद्धे आदी यासां तत्त्वार्थचिन्तादीनां ता एवाखिलास्तरुण्यो नवनवाः सुन्दर्यस्तासां वल्लभेन क्षणमपि परिहर्तुमशक्येन प्रेयसा। न तु रूपलावण्यातिशयमात्रात् समस्तबाह्यरमणीस्पृहणीयेन। इत्यनेन व्यतिरेकलभ्येनार्थेन भगवद्वासुदेवसुतत्वमात्मनः प्रकटयति॥ ५२॥

उपसंहारभङ्ग्या जनाननुजिघृक्षुराशास्ते—

इति परमरहस्यश्लोकपञ्चाशदेषा
तपननवनपुण्या सागमब्रह्मचर्चा।
हरतु दुरितमस्मद्वर्णिताकर्णिता वो
दिशतु च शुभसिद्धिं मातृवद्भक्तिभाजाम्॥ ५३॥

इत्युक्तक्रमान्महारहस्यार्थयुक्ता "स्थित्वा किञ्चिन्मन इव पिबन्" इत्यन्तश्लोकानां पञ्चाशदेषा तपनस्य विश्वविचित्राखण्डितप्रतापस्य भगवतश्चिदर्कस्य नवनेन स्तुत्या पुण्या पवित्रा। तथा सागमा विश्वोपनिषद्रूपमाहेश्वरशास्त्रार्थसतत्त्वगर्भा ब्रह्मचर्चा पराद्वयविमर्शो यस्यां तादृशी अस्मद्वर्णिता सती आकर्णिता वो युष्माकं सर्वेषां

दुरितं हरतु किल्बिषं दुरध्यवसायं च नाशयतु । भक्तिभाजां च शुभसिद्धिं दिशतु अभीष्टां भोगमोक्षलक्ष्मीं घटयतामिति शिवम् ॥ ५३ ॥

कश्चिच्छैवः परशिवसमावेशगाढानुरागो-
द्रेकस्फूर्जन्नभिनवदशावेशवैवश्यशाली ।
सत्स्तोत्रेऽस्मिन् विवृतिरचनां क्षेमराजो न्ययुङ्क्ते-
त्येतन्नैवं झटिति घटितं दर्शनीयं हि सद्भिः ॥

इति महामाहेश्वराचार्यवर्यश्रीमदभिनवगुप्तपादपद्मोपजीविराजानक-
श्रीक्षेमराजप्रणीतविवृतिसमेता

श्रीसाम्बपञ्चाशिका

समाप्ता ।

समाप्तोऽयं ग्रन्थः ॥



# त्रिपुरामहिमस्तोत्रं

## श्रीदुर्वासोविरचितं

### नित्यानन्दविरचितया व्याख्यया समन्वितम् ।

श्रीश्रीविद्यानन्दनाथाङ्घ्रियुग्मं स्मृत्वा स्वान्तध्वान्तभानुप्रभावम् ।
सर्वोत्कृष्टं क्रोधभट्टारकोक्तं स्तोत्रं श्रीमत्सुन्दरीश्रीमहिम्नः ॥
पूर्वं कैश्चिद् व्याकृतं नेति भीतो गूढार्थत्वादल्पबुद्धिस्तथापि ।
शिष्टैरिष्टैरीरितोऽहं गुरूक्त्या नित्यानन्दः सादरं व्याकरोमि ॥

न शब्दशास्त्रव्युत्पत्तिर्न न्यायनिपुणा मतिः ।
केवलं गुरुपादाब्जस्मृतिरत्र गतिप्रदा ॥

त्रैलोक्यवन्द्यं गिरिजाभिनन्द्यं विज्ञानगम्यं वरदं वरेण्यम् ।
विघ्नौघभङ्गाय च कार्यसिद्ध्यै विश्वेश्वरं विश्वगुरुं नमामि ॥
कुलारविन्दादकुलारविन्दं गत्वाऽमृतौघैरनुषिच्यमानाम् ।
रसारविन्दानि निजारविन्दे पुनः प्रयान्तीं प्रभजे परेशीम् ॥

इह खलु सकलागमाचार्यचक्रवर्ती साक्षाच्छिव एवाऽनसूयागर्भसंभूतः क्रोधभट्टारकाख्यदुर्वासा महामुनिः श्रीमहात्रिपुरसुन्दर्याः सानुभावं महिमस्तोत्रं चिकीर्षुरादौ कूटत्रयदेवताभावनारूपं मङ्गलमाचरति—

**श्रीमातस्त्रिपुरे परात्परतरे देवि त्रिलोकीमहा-**
**सौन्दर्यार्णवमन्थनोद्भवसुधाप्राचुर्यवर्णोज्ज्वलम् ।**
**उद्यद्भानुसहस्रनूतनजपापुष्पप्रभं ते वपुः**
**स्वान्ते मे स्फुरतु त्रिलोकनिलयं ज्योतिर्मयं वाङ्मयम् ॥ १ ॥**

हे श्रीमातः, ते वपुर्मे स्वान्ते स्फुरतु । कथंभूतं वपुः ? उद्यद्भानुसहस्रनूतनजपापुष्पप्रभम् । पुनः कीदृशम् ? त्रिलोकीमहासौन्दर्यार्णवमन्थनोद्भवसुधाप्राचुर्यवर्णोज्ज्वलम्, त्रिलोकनिलयम्, ज्योतिर्मयम्, वाङ्मयं चेत्यन्वयः । हे श्रीमातर्हे श्रीजननि । हे त्रिपुरे त्रितयमात्ररूपे । परात्परतरे सूक्ष्मात्सूक्ष्मे । देवि दिव्यक्रीडारसपरे । त्रिलोकीमहासौन्दर्यार्णवमन्थनोद्भवसुधाप्राचुर्यवर्णोज्ज्वलम्, त्रिलोकी त्रयाणां लोकानां समा-

हारस्तस्या महासौन्दर्यमेवार्णवस्तन्मन्थनोद्भवायाः सुधायाः प्राचुर्यस्य यो वर्णोऽत्युज्ज्वलत्वं तद्वत्, इत्यनेन वाग्भवकूटदेवताभावना प्रतिपादिता। उद्यद्भानुसहस्रनूतनजपापुष्पप्रभम् उद्यद्भानवो बालार्कास्तेषां सहस्राणि नूतनजपापुष्पाणि च अनुदितसूर्यकालीनोजपापुष्पाणि च तेषां प्रभेव प्रभा यस्य, इत्यनेन कामराजकूटदेवताभावना प्रतिपादिता। ते श्रीमहात्रिपुरसुन्दर्याः, वपुः स्वरूपम्। स्वान्ते हृदये। मे उपासकस्य। स्फुरतु भावनागोचरं भवतु। त्रिलोकनिलयं त्रिलोकं नितरां लीयते यस्मिन्, यच्छायायां मग्नं भवति। अथवा त्रिलोकस्य निलयमुत्पत्तिस्थानं कामकलारूपम्। वामकेश्वरतन्त्रादौ कामकलाक्षरादेव सृष्ट्यादेरुक्तत्वात्। एतद्विवरणं कामराजकूटप्रभाववर्णने षष्ठश्लोके वक्ष्यति च। ज्योतिर्मयं ज्योतींषि सूर्याग्निसोमादीनि तन्मयम्। वाङ्मयं परापश्यन्तीमध्यमावैखरीरूपम्। तृतीयकूटस्य सौभाग्यप्रदत्वाज्ज्योतिर्मयत्वं सारस्वतत्वाद्वाङ्मयत्वं च, ज्योतिषः सामयजुःशुक्लभास्वरत्वात्। अनेन तृतीयकूटभावना प्रतिपादिता। एवं महात्रिपुरसुन्दरीरूपस्य त्रिविधभावनयाऽवश्यं सौभाग्यं वाक्प्रदत्वं प्रतिपादितम्। अतः परं विद्योद्धारपक्षे व्याख्यानम्। तत्र श्री श्रीबीजम्, मा मायाबीजम्, अतोऽतः परं त्रिपुरा त्रिबीजवती। बालाद्वयं तु संप्रदायवलात्, अन्तर्मुखैरेव ज्ञेयम्। ई प्रणवः। एतद्विवरणमष्टमश्लोकव्याख्याने स्फुटीभविष्यति। परात् मायाबीजात् परतरा लक्ष्मीः श्रीबीजं देवीति सम्बुद्धिः। त्रिलोकी त्रिकूटा तस्यास्त्रितयमात्ररूपतया कूटत्रयेण लोकत्रयव्यापकता प्रसिद्धैव सौन्दर्यपदेन बालायास्तृतीयं कूटमुट्टङ्कितम्। अर्णवोद्भवसुधाप्राचुर्यवर्णोज्ज्वलमिति पदेन बालाया वाग्भवत्वं सूचितम्, तस्यामृतमयत्वेन वाक्प्रदत्वात्। उद्यदादिपदेन बालायाः कामकूटत्वं सम्भावितम्, तस्य सिन्दूरवर्णत्वेन वश्यप्रदत्वात्। ते वपुरित्यनेन मायाबीजं स्वान्ते स्वस्या विद्याया अन्ते मे इत्यत्र माशब्देन श्रीबीजम्, ईशब्दः कामकलावाचकः। एवंरूपं महाविद्याश्रीषोडशाक्षरीस्वरूपं साधकस्य हृदये स्फुरत्विति। इदं सर्वथैव गोप्यमपि मया सांकेतिकशब्दैः शिष्टानां साधकानां परितोषार्थं प्रकटीकृतम्॥ १॥

इदानीं मूलाधारचक्रस्थितां सकलविद्यामन्त्रचक्रकारणभूतां मूलाधारादिचक्रविभेदेन क्रमेण सहस्रदलकमलकर्णिकान्तर्महामध्यत्रिकोणसिंहासननिविष्टां चिद्रूपिणीं प्रस्तौति—

आदिक्षान्तसमस्तवर्णसुमणिप्रोते वितानप्रभे
ब्रह्मादिप्रतिमाभिकीलितषडाधाराब्जकक्षोन्नते।
ब्रह्माण्डाब्जमहासने जननि ते मूर्तिं भजे चिन्मयीं
सौषुम्णायतपीतपङ्कजमहामध्यत्रिकोणस्थिताम्॥ २॥

हे जननि, सौषुम्णायतपीतपङ्कजमहामध्यत्रिकोणस्थितां ते मूर्तिं ब्रह्माण्डाब्जमहासनेऽहं भजे इत्यन्वयः। आदिक्षान्तसमस्तवर्णसुमणिप्रोते आदयोऽकारादयः,

क्षान्ताः क्षकारान्ताः समस्ताः पञ्चाशद्वर्णाः स्वरव्यञ्जनात्मकास्त एव सुमणयो मुक्ताफलप्रायास्ते प्रोता गुम्फिता यस्मिन्। वितानप्रभे वितानवत्प्रभा शोभा यस्य, अत्युज्ज्वलत्वादतिविस्तृतत्वाच्च। ब्रह्मादिप्रतिमाभिकीलितषडाधाराब्जकक्षोन्नते ब्रह्मादिप्रतिमाभिरभिकीलिता मण्डिताः षडाधाराणां षोडशदलद्विदलान्तचक्राणां कक्षाः कर्णिकारूपमध्यप्रदेशास्तत्रोन्नते। ब्रह्माण्डाब्जमहासने ब्रह्माण्डं ब्रह्मरन्ध्रस्थानं तत्राब्जं नाम सहस्रदलं कमलं तत्र महासनं तदन्तर्गतकर्णिकामध्यवर्ति महात्रिकोणं तदेव महासनं तस्मिन्। मूर्तिं कुण्डलिनीरूपां चिन्मयीं ज्ञानात्मिकां सौषुम्णायतपीतपङ्कजमहामध्यत्रिकोणस्थितां सौषुम्णं सुषुम्णासंबन्धि आयतं विस्तृतं पीतं हरिद्राभं पङ्कजं कमलं तस्मिन् महामध्यं कर्णिकास्थानं तत्र त्रिकोणमकथादिवर्णमयत्रिरेखं तत्र स्थितां तत्रत्यबिन्दुरूपस्वयंभूलिङ्गं परिवेष्ट्य सार्धत्रिवलयेन भुजगीमिव सुप्तामिति। समस्तवर्णसुमणिप्रोत इति। कोऽर्थः? ब्रह्माण्डाब्जमहासनं नाम सहस्रदलं कमलं तस्य नालरूपा सुषुम्णानाडी मूलाधारचतुर्दलकमलान्तर्गतं त्रिकोणं कन्दरूपं षडाधारकमलपत्रेषु ते पञ्चाशद्वर्णाः स्थूलवर्णकारणभूता देहे प्राणप्रवेशावधि प्राणनिर्गमनकालपर्यन्तं सर्वदैव मणिवत्कीलितप्रायास्तिष्ठन्तीत्यर्थः। साम्प्रदायिकैर्यदान्तर्मालया जपः क्रियते तदा सुषुम्णां सूत्रस्थाने परिभाव्यैकपञ्चाशन्मातृकावर्णान् मणीन् विभाव्य मूलाधारादिब्रह्मरन्ध्रपर्यन्तमकारादिक्षकारान्तं मनसा प्रजप्य पुनः क्षकारमारभ्य ब्रह्मरन्ध्रान्मूलाधारपर्यन्तं च प्रजप्य शतसंख्या समाप्यते, [ ते ]न विद्या वीर्यवती भवतीति। इदं परमरहस्यं गुह्याद् गुह्यं शिष्टानां साधकानां परितोषार्थमत्र लिखितं गुरुभिः क्षन्तव्यम्। यथाश्रुतोऽर्थस्तु मुनीनां योगीश्वराणां संभवत्येव। यदा योगाग्निना परिप्लुष्टानना कुण्डलिनी शक्तिर्मूलाधारादधोगतत्रिकोणादुत्थाय षडाधारभेदेन क्रमेण सुषुम्णारन्ध्रद्वारा सहस्रदलकमलं प्राप्य परिभ्रमति, तदा तदन्तर्गतचिच्चन्द्रमण्डलस्राविताममृतबिन्दुरूपमातृकाक्षराणि सुषुम्णाख्यब्रह्मसूत्रद्वारा तत्तदाधारगततत्तद्देवताभिषेकपूर्वकमूलाधारत्रिकोणपर्यन्तं निरन्तरं परिगलन्ती तस्मिन् काले सहस्रदलकमलरूपवितानमध्यगतसुषुम्णाब्रह्मसूत्रे मुक्तामणिप्रोतस्रग्रूपता भातीति। षडाधारवर्णनं तत्तच्चक्रे चित्तनिवेशनफलं चोक्तं नागभट्टैः—"अथाधारपङ्केरुहाण्यत्र वक्ष्ये सुषुम्णान्तरस्थानि संक्षेपतोऽहम्" इत्यादि, "पुनरुत्थापनमप्ययोमृतस्य" इत्यन्तं त्रिपुरासारे पञ्चमपटलस्यादितो द्रष्टव्यमिति॥ २॥

अतः परं सकलशब्दजालप्रकाशार्कसंकेतसारविद्यादिभूतं केवलं द्वादशस्वररूपं वाग्भवमभिनन्दनपूर्वकं प्रस्तौति—

वन्दे वाग्भवमैन्दवात्मसदृशं वेदादिविद्यागिरो
भाषा देशसमुद्भवाः पशुगताश्छन्दांसि सप्त स्वरान्।
तालान् पञ्च महाध्वनीन् प्रकटयत्यात्मप्रसारेण यत्
तद्बीजं पदवाक्यमानजनकं श्रीमातृके ते परम्॥ ३॥

हे श्रीमातृके, ते तद्वाग्भवं बीजमहं वन्दे। कथंभूतम् ? ऐन्दवात्मसदृशम्। पुनः कथंभूतं तत् ? यदात्मप्रसारेणेदं सर्वं शब्दजालं प्रकटयति। पुनः कीदृशम् ? पदवाक्यमानजनकम्। इत्यन्वयः। वन्दे अभिवादयामि। वाग्भवमृग्यजुःसाम्नामाद्यक्षरत्रयसमुदायरूपम्। ऐन्दवात्मसदृशम् इन्दोरिदमैन्दवं चन्द्रमण्डलं तस्यात्मा अमृतं तत्सदृशम्, वाग्भवस्याप्यमृतप्रायाक्षरस्राविवात्। वेदादिविद्यागिरो वेदस्मृतिशास्त्रपुराणागमादीनां शब्दपारावाररूपाः। भाषाः संस्कृतप्राकृतपैशाचिकाः। देशसमुद्भवास्तत्तद्देशगतमनुष्याणां कवित्वव्यवहारक्षमाः। पशुगताः पशुपक्षिव्यवहारयोग्याः। छन्दांसि अनुष्टुबादीनि। सप्तस्वरान् निषादादीन्। तालान् ध्रुवाद्यान्। पञ्च महाध्वनीन् भेर्यादीन्। प्रकटयति व्यक्तीकरोति। आत्मप्रसारेण आत्मनोऽमृतस्य प्रसारः प्रस्रवणं तेन। यत् यस्मात्। सर्वं शब्दजालं प्रसरति। तत् तस्मात् बीजं बीजप्रायम्। पदवाक्यमानजनकं पदमक्षरसमुदायरूपम्, वाक्यं पदसमुदायरूपम्, मानानि प्रत्यक्षानुमानोपमानशब्दादीनि, तेषां जनकं प्रादुर्भावकारकम्। श्रीमातृके सकलशब्दजालमातृभूते पञ्चाशद्वर्णरूपायाः परमुत्कृष्टम् ॥ ३ ॥

पूर्वं संकेतसारविद्यादिमं वाग्भवं प्रणम्येदानीं चतुर्विधपाण्डित्यमहाकाव्यरचनसामर्थ्यप्रदं बालाविद्यादिमं वाग्भवं प्रस्तौति—

त्रैलोक्यस्फुटमन्त्रतन्त्रमहिमां नाप्नोति शश्वद्विना
यद्बीजं व्यवहारजालमखिलं नास्त्येव मातस्तव।
तज्जाप्यस्मरणप्रसक्तिसुमतिः सर्वज्ञतां प्राप्य कः
शब्दब्रह्मनिवासभूतवदनो नेन्द्रादिभिः स्पर्धते ॥ ४ ॥

हे मातः, तव तद्वाग्भवबीजं विना कोऽपि त्रैलोक्यस्फुटमन्त्रतन्त्रमहिमां शश्वन्नाप्नोति। किञ्च, तव तद्बीजं विना लोकेष्वखिलं व्यवहारजालं नास्त्येव। अन्यच्च तज्जाप्यस्मरणप्रसक्तिसुमतिः सन् सर्वज्ञतां प्राप्येन्द्रादिभिः सह को न स्पर्धते। अपि तु स्पर्धत्ये( त ए )वेत्यन्वयः। त्रैलोक्यस्फुटमन्त्रतन्त्रमहिमां त्रैलोक्ये स्वर्गमृत्युपातालेषु स्फुटाः ( टां ) सुरासुरमनुष्यमनोरञ्जनयोग्याः ( योग्यां ) मन्त्राणामुपदिष्टानुपदिष्टानाम्, तन्त्राणां पठितानाम्, महिमां सामर्थ्यम्। मन्त्राणां सामर्थ्यं शापानुग्रहादिकम्। तन्त्रसामर्थ्यं व्याख्यातृत्वम्। नाप्नोति कश्चिदपि नावगच्छतीत्यर्थः। शश्वन्निरन्तरम्। तद्बीजं विना वाग्भवबीजसाधनमन्तरेण। व्यवहारजालं तूत्थानोपवेशनदानोपादानक्रयविक्रयशुद्धाशुद्धाद्यपारम्। अखिलं सांसारिकपारमार्थिकम्। ( तद्बीजं विना )। नास्त्येव न सम्भवत्येव। एवकारोऽत्रान्ययोगव्यवच्छेदार्थकः। मातर्जननि, तव वागीश्वर्याः। तज्जाप्यस्मरणप्रसक्तिसुमतिस्तस्य वाग्भवस्य जाप्यं विध्युक्तप्रकारेण स्मरणं यदा तदा शयनोपवेशनभ्रमणकालेऽपि मानसिकमेव तत्र प्रसक्तिस्तत्परता तया सुमतिः सर्वशास्त्राभिनिविष्टः। सर्वज्ञतां

वागीश्वरताम् । प्राप्य लब्ध्वा । कः यः कश्चित् । शब्दब्रह्मनिवासभूतवदनः शब्दब्रह्म-सकलप्राणिगतचैतन्यभूता चिच्छक्तिः । तस्या निवासभूतं मन्दिरप्रायं वदनं यस्य । नकारोऽत्राप्रसक्तिनिरासकः । इन्द्रादिभिः सुरेशमुख्यैः सह स्पर्धते ईर्ष्यां कर्तुं क्षमते । "अकारो वै सर्ववाक्" इति श्रुतेः ॥ ४ ॥

पूर्वस्मिन् श्लोके सम्पूर्णं वाग्भवं स्तुत्वेदानीं वाग्भवकूटोपरितनमात्रां कुण्डलिनीं प्रस्तौति—

मात्रा याऽत्र विराजतेऽतिविशदा तामष्टधा मातृकां
शक्तिं कुण्डलिनीं चतुर्विधतनुं यस्तत्त्वविन्मन्यते ।
सोऽविद्याखिलजन्मकर्मदुरितारण्यं प्रबोधाग्निना
भस्मीकृत्य विकल्पजालमखिलं मातः पदं तद् व्रजेत् ॥ ५ ॥

हे मातः, अत्र या मात्रा विराजते तां कुण्डलिनीं शक्तिमष्टविधमातृकां च यो मन्यते, स तत्पदं व्रजेदित्यन्वयः । मात्रा या सामवेदाद्यक्षररूपा बीजाङ्कुरप्राया विश्वप्रपञ्चस्य मातृभूता । अत्र वाग्भवे । विराजते विद्योतते । अतिविशदा विस्पष्टा । तां मात्राम् अष्टधा वशिन्यादिवर्गाष्टकरूपेण । मातृकामेकपञ्चाशद्वर्णमयीम् । शक्तिं सृष्टिस्थितिसंहृतिकर्मसमर्थाम् । कुण्डलिनीं सर्वप्राणिमूलाधारवासिनीम् । चतुर्विधतनुमग्निसूर्यसोमसमष्टिरूपेण, अग्निकुण्डलिनी मूलाधारे, सूर्यकुण्डलिनी हृदये, सोमकुण्डलिनी भ्रूमध्ये, समष्टिकुण्डलिनी मूलाधाराधोगतवाग्भवाकारत्रिकोणे । यः सांप्रदायिकः । तत्त्वविद् आराध्यमुखादवगताशेषपरमार्थः । मन्यते जानाति । भावयतीति यावत् । स एव मननपरायणः । अविद्याखिलजन्मकर्मदुरितारण्यम् अविद्या सांसारिकी बुद्धिः, अखिलजन्मानि भावीनि द्विपदचतुष्पदोरगादीनि, अखिलकर्माणि संचितारब्धानि, अखिलदुरितानि ज्ञाताज्ञातकृतानि, तेषामरण्यं भयानकत्वात् । प्रबोधाग्निना विज्ञानानलेन भस्मीकृत्य निर्दग्ध्वा (ह्य) । विकल्पजालं कल्पनानानावासनाः । अखिलं सांसारिकपारमार्थिकम् । मातर्जननि । पदं स्थानम् । तदनिर्वचनीयम् । सर्वसम्मतम् । उक्तं च नागभट्टैः—"एतस्याः परतः परात् परतरं निर्वाणशक्तेः पदं शैवं शाश्वतमप्रमेयमचलं नित्योदितं निर्मलम् । तद्विष्णोः पदमित्युशन्ति सुधियः केचित्पदं ब्रह्मणः केचिद्धंसपदं निरञ्जनपदं केचिन्निरालम्बनम् ॥" इति । व्रजेत् प्राप्नुयात् ॥ ५ ॥

इदानीं संकेतसारविद्याया द्वितीयाक्षरं कामबीजत्वेन प्रस्तौति—

तत्ते मध्यमबीजमम्ब कलयाम्यादित्यवर्णं क्रिया-
ज्ञानेच्छादिमनन्तशक्तिविभवव्यक्तिं व्यनक्ति स्फुटम् ।
उत्पत्तिस्थितिकल्पकल्पिततनु स्वात्मप्रसारेण यत्
काम्यं ब्रह्महरीश्वरादिविबुधैः कामं क्रियायोजितैः ॥ ६ ॥

हे अम्ब, तत्ते मध्यमबीजमादित्यवर्णं क्रियाज्ञानेच्छादिमुत्पत्तिस्थितिकल्पकल्पिततनु ब्रह्महरीश्वरादिविबुधैः काम्यं चाहं कलयामि। कथंभूतं तत्? यत्स्फुटमनन्तशक्तिविभवव्यक्तिं व्यनक्तीत्यन्वयः। तत् तस्मात्। ते संकेतसारायाः। मध्यमबीजं केवलेकाररूपम्। अम्ब जननि, कलयामि जानामि। आदित्यवर्णं बालार्कनिभम्। क्रियाज्ञानेच्छादिम् इच्छाशक्तिज्ञानशक्तिक्रियाशक्तीनां निदानभूतम्। एतासां कामकलाविन्दुत्रयाविर्भूतत्वात्। अनन्तशक्तिविभवव्यक्तिम् अनन्तानां शक्तीनां विभवः सामर्थ्यं तस्य व्यक्तिर्ज्ञानम्। व्यनक्ति प्रकटीकरोति। स्फुटं प्रत्यक्षतया। उत्पत्तिस्थितिकल्पकल्पिततनु उत्पत्तिः सृष्टिः, स्थितिः पालनम्, कल्पः संहारः, तेषु कल्पिताः प्रादुर्भाविता वामाज्येष्ठारौद्रीप्रधानानि ब्रह्मविष्णुरुद्राणां तनवो येन। स्वात्मप्रसारेण स्वस्य कामकलाक्षरस्य, आत्मा धामत्रयरूपं बिन्दुत्रयम्, तस्य प्रसारः स्फुरणम्। इदमुपलक्षणम्—कामकलाक्षरस्य त्रितयमात्रकारणत्वेन इच्छाज्ञानक्रिया वामाज्येष्ठारौद्रीप्रधाना ब्रह्मविष्णुरुद्राः सूर्यसोमाग्नयः अकारोकारमकाराः। लोकत्रयं पीठत्रयं लिङ्गत्रयं कालत्रयं वेदत्रयं वह्नित्रयं स्वरत्रयं च सर्वमुत्पन्नमित्यष्टादशश्लोके वक्ष्यति। यत् यस्मात् कारणात्। काम्यमुपास्यम्। ब्रह्महरीश्वरादिविबुधैः। आदिशब्देन इन्द्रचन्द्रकुबेरसूर्याः। अन्यैश्च। कामं निश्चितम्। क्रियायोजितैः क्रियाः सृष्टिस्थितिसंहृतिरूपाः, तासु योजितैर्नियमितैः। एतद्विवरणं वामकेश्वरतन्त्रे विस्तरेणोक्तम्। मयात्र ग्रन्थगौरवभयान्न लिख्यते। अथवा कलयामि ककारलकारयुक्तं करोमि। तेन बालाया मध्यमबीजं कामराजाख्यं भवति ॥ ६ ॥

अत एव तत्कामराजबीजसामर्थ्यवर्णनपुरःसरं तमेव प्रणमति—

कामान् कारणतां गतानगणितान् कार्यैरनेकैर्मही-
मुख्यैः सर्वमनोगतानधिगतान् मानैरनेकैः स्फुटम्।
कामक्रोधसुलोभमोहमदमात्सर्यारिषट्कं च यद्
बीजं भ्राजयति प्रणौमि तदहं ते साधु कामेश्वरि ॥ ७ ॥

हे कामेश्वरि, तव तद् बीजमहं प्रणौमि। तत् किं भूतम्? यत् कारणतां गतान् कामान् महीमुख्यैः कार्यैः सहाधिगतान् कामान् मानैः सह कामाद्यरिषट्कं च भ्राजयतीत्यन्वयः। कामान् ब्रह्मादिकानां सामर्थ्यरूपान्। कारणतां गतान् तत्तत्कार्यानुकूलान्। अगणितानसंख्यातान्। कार्यैर्मनोगतैः। अनेकैर्नानाविधैः। महीमुख्यैः पृथिव्यादिकैः। सर्वमनोगतान् सर्वप्राणिचित्तस्थान्। अधिगतान् ज्ञातान्। मानैः प्रत्यक्षादिभिः। अनेकैर्वेदशास्त्रपुराणोक्तैः। स्फुटं प्रव्यक्तम्। कामक्रोधसुलोभमोहमदमात्सर्यारिषट्कं ज्ञानिनामावरकत्वादरित्वमेतेषाम्। सांसारिकाणां स्थितिकारित्वम्। चकारः समुच्चये। यत् ककारलकारसहितं बीजं कामकूटम्। भ्राजयति पोषयति। प्रणौमि प्रकर्षेण नमस्करोमि। अहं स्तोत्रकर्ता ते बालाविद्यायाः। साधु सर्वोत्कृष्टम्। कामेश्वरि कामकूटाधिदेवते ॥ ७ ॥

इदानीं सिंहावलोकनन्यायेन पुनरपि संकेतसारविद्यायाः कामकलारूप-मध्यमबीजस्याखिलकामपूरकत्वेन विशिष्टज्ञानप्रकाशकत्वं प्रणवत्वं च प्रतिपादयति—

यद्भक्ताखिलकामपूरणचणस्वात्मप्रभावं महा-
जाड्यध्वान्तनिवारणैकतरणिज्योतिः प्रबोधप्रदम् ।
यद्वेदेषु च गीयते श्रुतिमुखं मात्रात्रयेणोमिति
श्रीविद्ये तव सर्वराजवशकृत् तत्कामराजं भजे ॥ ८ ॥

हे श्रीविद्ये, तव तत्कामराजमहं भजे ।:(तत् तस्मात्) यद्यस्माद् भक्ताखिलकाम-पूरणचणस्वात्मप्रभावम् । कथंभूतम् ? जाड्यध्वान्तनिवारणैकतरणिज्योतिः । पुनः कथंभूतम् ? प्रबोधप्रदम् । यद्वेदेषु मात्रात्रयेण 'ओम्' इति गीयते । अत एव श्रुति-मुखम् । पुनः कथंभूतम् ? सर्वराजवशकृदित्यन्वयः । यत् यस्मात् । कामराजं द्वितीयम् । भक्ताखिलकामपूरणचणस्वात्मप्रभावं भक्तानामुपासकानाम्, अखिलाः सर्वे, कामा मनोरथाः, तेषां पूरणं संपादनम्, तत्र चणो दक्षः, स्वात्मप्रभावः स्वस्य काम-कलाबीजस्य आत्मा बिन्दुत्रयम्, तस्य प्रभावः प्रसारः पूर्वोक्तवामादिब्रह्मादिदेवतात्रयं विद्यते यस्मिन् । महाजाड्यध्वान्तनिवारणैकतरणिज्योतिः महाजाड्यमज्ञानं तदेव ध्वान्तमन्धकारः, तस्य निवारणं विनाशनम्, तत्रैकमद्वितीयम्, तरणिज्योतिरिव तरणिः सूर्यः, तस्य ज्योतिः प्रकाशस्तद्वत् । प्रबोधप्रदं प्रकर्षेण बोधस्तत्त्वज्ञानं प्रददाति प्रकर्षेण निश्चयेनोत्पादयतीति । यत् यस्मात् । तुरीयस्वरूपम् । वेदेषु वेदाध्ययनारम्भसमयेषु । चकारः समुच्चये । गीयते उच्चार्यते । श्रुतिमुखं वेदादिभूतम् । मात्रात्रयेण अकारोकारमकाराक्षरत्रयेण । ओमिति । श्रीविद्ये संकेतसारे । तव त्र्यक्षर्याः । सर्वराजवशकृत् । सर्वे जीवाः राजानश्च, वशं करोति । तत् पूर्वोक्तम् । कामराजं कामराजसंज्ञम् । भजे सेवे । मात्रात्रयेणेति कोऽर्थः ? कामकलाक्षरस्य बिन्दुत्रयात्मकत्वेन बिन्दुत्रयस्य सूर्यसोमाग्नित्वेन सोमासूर्याग्नीनामकारोकार-मकारात्मता सर्वत्रागमेषु दृष्टेत्येतत्सर्वं त्रिकात्मकं कामकलाक्षरे विश्रान्तमिति प्रणवेनापि कामकलाक्षरमेव गीयत इति तात्पर्यम् ॥ ८ ॥

अतः परं संकेतसारविद्यायास्तृतीयबीजस्योद्धारं कामकलासाम्यतां ब्रह्मात्मकतां चिद्रूपतां च प्रतिपादयति—

यत्ते देवि तृतीयबीजमनलज्वालावलीसंनिभं
सर्वाधारतुरीयबीजमपरं ब्रह्माभिधाशब्दितम् ।
मूर्धन्यान्तविसर्गभूषितमहौकारात्मकं तत्परं
संविद्रूपमनन्यतुल्यमहिम स्वान्ते मम द्योतताम् ॥ ९ ॥

हे देवि ! तत्ते तृतीयं बीजं मम स्वान्ते द्योततामित्यन्वयः। यद् वक्ष्यमाण-रूपम्। ते तव देवि प्राग्वत्। तृतीयं तार्तीयम्। बीजं बीजाक्षरम्। अनलज्वालावली-संनिभम् अनलस्य वह्नेः, ज्वालाः शिखाः, तासामावली श्रेणी, तस्या निभेव प्रभा विद्यते यस्मिन्। सर्वाधारतुरीयबीजं सर्वस्य विश्वस्याधारभूतं त्रिकोणरूपं तेनैकाराक्षरं तस्य तुरीयमौकारः कारणम्। अपरं द्वितीयम्। ब्रह्माभिधाशब्दितं ब्रह्मेतिनाम्ना संकेतितम्। मूर्धन्यान्तविसर्गभूषितमहौकारात्मकं मूर्धन्यं बिन्दुरन्ते मस्तके यस्य विसर्गभूषितं विसर्गेण बिन्दुभ्यां भूषितं युक्तम् अत एव महौकारात्मकं महत्त्वं तस्य बिन्दुत्रयसहितत्वात्। तत् पूर्वोक्तम्। परमुत्कृष्टम्। पराख्यमिति यावत्। संविद्रूपं ज्ञानात्मकम्। अनन्यतुल्यमहिम अतुलप्रभावम्। स्वान्ते हृदये। मम तवाराधकस्य। द्योततां भासताम् ॥ ९ ॥

इदानीं बालायास्तृतीयं बीजं पराशक्तिरूपेण नमस्करोति—

सर्वं सर्वत एव सर्गसमये कार्येन्द्रियाण्यन्तरा
तत्तद्दिव्यहृषीककर्मभिरियं संव्यश्नुवाना परा।
वागर्थव्यवहारकारणतनुः शक्तिर्जगद्व्यापिनी
यद्बीजात्मकतां गता तव शिवे तन्नौमि बीजं परम् ॥ १० ॥

हे शिवे, इयं परा शक्तिस्तव यद्बीजात्मकतां गता तत्परं बीजमहं नौमि। किं कुर्वाणा ? सर्गसमये सर्वतः सर्वं संव्यश्नुवाना। अन्तरा अनन्तरं तत्तद्दिव्यहृषीक-कर्मभिः सह कार्येन्द्रियाणि च संव्यश्नुवाना इत्यन्वयः। सर्वं वस्तुजातम्। सर्वतः सर्वस्मात्। एवकारोऽत्रान्योन्याश्रयव्यवच्छेदकः। सर्गसमये सर्गादौ। कार्येन्द्रियाणि कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि च। अन्तरा तदनन्तरम्। तत्तद्दिव्यहृषीककर्मभिः। सह इति शेषः। तत्तत् तेषां तेषां दिव्यहृषीककर्मभिः शब्दादिभिर्वचनादिभिश्च सह संव्यश्नुवाना संसृज्यमाना। परा परमोत्कृष्टा। वागर्थव्यवहारकारणतनुः वाचामर्थानां च यो व्यवहारः प्रवृत्तिः, तत्र कारणं तनुर्यस्याः। शक्तिः प्राग्वत्। जगद्व्यापिनी कार्यकारणकर्तृत्वज्ञेयज्ञानज्ञातृत्ववाच्यवचनवक्तृत्वादित्रितयमात्ररूपेण। यद्बीजा-त्मकतां सकारौकारबिन्दुत्रयसमुदायरूपेण। गता प्राप्ता। तव बालात्रिपुरविद्यायाः। शिवे कल्याणरूपे तत् पराबीजम्। नौमि नमस्करोमि। बीजं प्राग्वत्। परं परासंज्ञम्। एतदुक्तं भवति—इयं परा शक्तिः सर्गसमये बिन्दुत्रयरूपकामकलाक्षरादाविर्भूय सर्वप्राणिसर्ववस्तुजीवजातकदम्बात् सर्वं यथा यथा समुत्पाद्य पश्चात्तत्तद्देवताधिष्ठित-ज्ञानकर्मेन्द्रियाण्युपस्थाप्य शब्दशब्दार्थसृष्टिनिदानरूपा सा पराबीजरूपतां प्राप्नोति तत्पराबीजं सर्वोत्कृष्टमिति ॥ १० ॥

पुनरपि पराबीजस्मरणेन परदेवतासाक्षात्कारो भवतीति दर्शयति—

**अग्नीन्दुद्युमणिप्रभञ्जनधरानीरान्तरस्थायिनी**
**शक्तिर्ब्रह्महरीशवासवमुखामर्त्यासुरात्मस्थिता ।**
**सृष्टस्थावरजङ्गमस्थितमहाचैतन्यरूपा च या**
**यद्बीजस्मरणेन सैव भवती प्रादुर्भवत्यम्बिके ॥ ११ ॥**

हे अम्बिके, सैव भवती यद्बीजस्मरणेन प्रादुर्भवति तत्परं बीजं नौमीति पूर्वश्लोकस्थेनान्वयः । सैव का ? याग्नीन्दुद्युमणिप्रभञ्जनधरानीरान्तरस्थायिनी अग्निर्हुताशनः, इन्दुश्चन्द्रः, द्युमणिः सूर्यः, प्रभञ्जनो वायुः, धरा पृथ्वी, नीरं जलम्, आन्तरमाकाशम्, एतेषु स्थितिशीला । उक्तं चाभियुक्तैः—"त्वं चन्द्रिका शशिनि तिग्मरुचौ रुचिस्त्वं त्वं चेतनासि पुरुषे पवने बलं त्वम् । त्वं स्वादुतासि सलिले शुचिनि त्वमूष्मा निःसारमेतदखिलं त्वदृते यदि स्यात् ॥" इति । शक्तिः पूर्वोक्ता । ब्रह्महरीशवासवमुखामर्त्यासुरात्मस्थिता ब्रह्मा स्रष्टा, हरिर्विष्णुः, ईशः शिवः, वासव इन्द्रः, तन्मुखास्तदाद्या अमर्त्या देवाः, असुरा दैत्याः, तेषामात्मस्थिता आत्मनि सामर्थ्यरूपेण वर्तमाना । सृष्टस्थावरजङ्गमस्थितमहाचैतन्यरूपा सृष्टेषु स्थावरेषु जङ्गमेषु स्थितं वर्तमानं महाचैतन्यं जीवनमूलं तदेव रूपं यस्याः । च समुच्चये । या परा शक्तिः । यद्बीजस्मरणेन पराबीजचिन्तनेन । सैव या पराबीजतां प्राप्ता । भवती त्वमेव । प्रादुर्भवति प्रत्यक्षा भवति । अम्बिके प्रतिपालिके इति ॥ ११ ॥

पुनरपि तदेव त्रिकात्मकं पराबीजं श्रीप्रदं वाक्सिद्धिप्रदं मोक्षप्रदं चेति प्रतिपादयति—

**स्वात्मश्रीविजिताजविष्णुमघवश्रीपूरणैकव्रतं**
**यद्विद्याकविताविताललहरीकल्लोलिनीदीपकम् ।**
**बीजं यत्त्रिगुणप्रवृत्तिजनकं ब्रह्मेति यद्योगिनः**
**शान्ताः सत्यमुपासते तदिह ते चित्ते दधे श्रीपरे ॥ १२ ॥**

हे श्रीपरे, ते तद्बीजमहमिह चित्ते दधे । तत्कथंभूतम् । उक्तरूपम्...... । स्वान्तश्रीविजिताजविष्णुमघवश्रीपूरणैकव्रतं स्वात्मश्रीः स्वस्यात्मा सकारौकारबिन्दुत्रयं तस्य श्रीर्विभूतिः । सामर्थ्यमिति यावत् । तया विजितानामजविष्णुमघोनां श्रीपूरणे संपत्तिसंपादने एकं व्रतं यस्य । यत् पराबीजमेव । विद्याकविताविताललहरीकल्लोलिनीदीपकम्, विद्याश्च कविताश्च विद्याकविताः, विद्याकविता एव वितानं तत्र लहर्य इव लहर्यः, तासु कल्लोलिनीव कल्लोलिनी तां दीपयति प्रकाशयतीति । बीजं पराबीजम् । यदुक्तरूपम् । त्रिगुणप्रवृत्तिजनकं त्रिगुणानां सत्त्वरजस्तमोगुणानां प्रवृत्तिं

प्रसारं जनयत्युत्पादयतीति। ब्रह्मेति। मोक्षप्रदमिति। यद्बीजम्। योगिनो योगनिरताः। सत्यं शाश्वतम्। शान्ताः साधवः। उपासते निदिध्यासनयोगेन। तद्बीजम्। इह जन्मनि। ते परायाः। चित्ते हृदये। दधे भावयामि। श्रीपरे श्रिया वैभवेन परा सर्वोत्कृष्टेति॥ १२॥

पूर्वं "वन्दे वाग्भवम्" इत्यादि "स्वात्मश्री" इत्येतैर्दशभिः श्लोकैः संकेतसारबालाविद्याबीजत्रयस्य क्रमेण सामर्थ्यं प्रतिपाद्येदानीं विद्याद्वयस्यान्यतरसंयुक्तबीजाराधनेन यथेष्टफलप्राप्तिं प्रतिपादयति—

एकैकं तव मातृके परतरं संयोगि वायोगि वा
विद्यादिप्रकटप्रभावजनकं जाड्यान्धकारापहम्।
यन्निष्ठाश्च महोत्पलासनमहाविष्णुप्रहर्त्रादयो
देवाः स्वेषु विधिष्वनन्यमहिमस्फूर्तिं दधत्येव तत्॥ १३॥

हे मातृके, एकैकं तव बीजं संयोगि वायोगि वा विद्यादिप्रकटप्रभावजनकं जाड्यान्धकारापहं च भवति। परतरं यन्निष्ठा महोत्पलासनमहाविष्णुप्रहर्त्रादयो देवाः स्वेषु विधिषु अनन्यमहिमस्फूर्तिं दधत्येवेत्यन्वयः। एकैकमन्यतमविद्यायाः। तव त्र्यक्षर्याः। मातृके स्वरव्यञ्जनरूपे। परतरमुत्कृष्टादुत्कृष्टम्। संयोगि व्यञ्जनयुतम्। वा विकल्पे। अयोगि वा व्यञ्जनरहितं वा। विद्यादिप्रकटप्रभावजनकं विद्याश्चतुर्दशविद्याः, आदिशब्देन यस्य यदिष्टम्, तेषां प्रकटप्रभावः अलौकिको विस्तारः, तस्य जनकमुत्पादकम्। जाड्यान्धकारापहं जाड्यमज्ञानम्, त(देवान्धकारम्, त)दपहन्ति नाशयति तत्। यन्निष्ठा यदक्षरस्मरणतत्पराः। च समुच्चये। महोत्पलासनो ब्रह्मा। महाविष्णुर्विश्वपालकः, प्रहर्ता ईश्वरः, आदिशब्देनेन्द्रादयः, देवाः दिवि क्रीडातत्पराः। स्वेषु स्वस्वकर्तव्येषु विधिषु साङ्गोपाङ्गेषु अनन्यमहिमस्फूर्तिम् अनन्यत्वं इतरानपेक्षत्वम्, महिमत्वं लोकोत्तरत्वम्, स्फूर्तिस्तत्तत्कार्यातिशायिनी तां प्राप्नुवन्त्येव। एवकारोऽत्र निश्चयाधायकः। तत् तस्मात्॥ १३॥

अतः परं पूर्वोक्तविद्याद्वयगतबीजत्रयं महाविद्याकूटत्रयं च यो जानाति, तस्य सामर्थ्यं प्रतिपादयति—

इत्थं त्रीण्यपि मूलवाग्भवमहाश्रीकामराजस्फुर-
च्छक्त्याख्यानि चतुःश्रुतिप्रकटितान्युत्कृष्टकूटानि ते।
भूततुर्श्रुतिसंख्यवर्णविदितान्यारक्तकान्ते शिवे
यो जानाति स एव सर्वजगतां सृष्टिस्थितिध्वंसकृत्॥ १४॥

हे आरक्तकान्ते, हे शिवे, इत्थं त्रीणि बीजानि मूलवाग्भवमहाश्रीकामराजस्फुरच्छक्त्याख्यानि त्रीण्यप्युत्कृष्टकूटानि यो जानाति स एव सर्वजगतां सृष्टिस्थिति-

ध्वंसकृद्भवति। कथं भूतानि ? भूततुंश्रुतिसंख्यवर्णविदितानीत्यन्वयः। इत्थं पूर्वोक्तप्रकारेण। त्रीणि संकेतसारबालाविद्यायाः। अपिः समुच्चये। मूलवाग्भवमहाश्रीकामराजस्फुरच्छक्त्याख्यानि मूलस्य महाविद्याया वाग्भवं प्रथमकूटं महाश्रीकामराजं महाविद्यायाः श्रीपदं सौन्दर्यप्रदं कामराजकूटम्। महत्त्वमेतस्य पूर्वोक्तसंकेतसंकेतसारबालाविद्याकामकूटापेक्षया। स्फुरच्छक्त्याख्यं स्फुरन्ती चमत्कारकारिणी शक्तिर्यस्य। एतदभिधेयानि च तानि। चतुःश्रुतिप्रकटितानि चतुर्वेदेषु प्रोक्तानि अथर्ववेदे सौभाग्यकाण्डे—"कामो योनिः कमला वज्रपाणिर्गुहा हसा मातरिश्वाभ्रमिन्द्रः। पुनर्गुहा सकला मायया च पुरूच्येषा विश्वमातादिविद्या॥" इति। ऋग्वेदे—"इन्द्रो मायाभिः पुरुरूप ईयते" इत्यादिभिः प्रकाशितानि। उत्कृष्टकूटानि उत्कृष्टानि अतुलसामर्थ्यवन्तीति, कूटानि वर्णसमुदायरूपाणि। भूततुंश्रुतिसंख्यवर्णविदितानि पञ्चषट्चतुरक्षरैर्ज्ञातानि। आरक्ता बालार्कतुल्या कान्तिर्यस्याः। शिवे कल्याणरूपे। य उपासकः। जानाति सत्संप्रदायाचार्यमुखादवगच्छति। स एव साभिषेकलब्धविद्य एव। सर्वजगतां स्थावरजङ्गमानाम्। सृष्टिस्थितिध्वंसकृत् सृष्टिरुत्पत्तिः, स्थितिः पालनम्, ध्वंसो नाशः, एतत्कार्यं कर्तुं समर्थः स्यादिति॥ १४॥

ननु श्रीविद्याकूटत्रयज्ञानमात्रेण यदि प्रोक्तसिद्धिः स्यात्, तदा सदाशिवोक्तनित्योपासनोपदेशो व्यर्थ एव स्यादित्याशङ्क्योपासकानां साङ्गोपाङ्गनित्योपास्तिकर्तृत्वं प्रतिपादयति—

नित्यं यस्तव मातृकाक्षरसखीं सौभाग्यविद्यां जपेत्
संपूज्याखिलचक्रराजनिलयां सायंतनाग्निप्रभाम्।
कामाख्यं शिवनामतत्त्वमुभयं व्याप्यात्मना सर्वतो
दीव्यन्तीमिह तस्य सिद्धिरचिरात् स्यात् त्वत्स्वरूपैकता॥ १५॥

हे सौभाग्यविद्येश्वरि, यस्तव सौभाग्यविद्यां मातृकाक्षरसखीं संपाद्य जपेत् तस्य इहाचिरात् सिद्धिः स्यात्। परत्र त्वत्स्वरूपैकता स्यात्। किं कृत्वा ? अखिलचक्रराजनिलयां संपूज्य। कथंभूताम् ? सायंतनाग्निप्रभाम्। पुनः कीदृशीम् ? आत्मना कामाख्यं शिवनामतत्त्वं चोभयं व्याप्य सर्वतो दिव्यन्तीमित्यन्वयः। नित्यं प्रतिदिनम्। यः साधकः। तव त्रिपुरसुन्दर्याः मातृकाक्षरसखीं मातृकाक्षरसहायिनीम्, द्वितीयश्लोकव्याख्याने प्रोक्ताक्षमालाविधानसहिताम्। सौभाग्यविद्यां श्रीविद्याम्। जपेत् वाचिकोपांशुमानसेष्वन्यतमप्रकारेण। अक्षरमालया जपस्तु मानसः। एतदुक्तं वायवीयसंहितायाम्—"धिया मन्त्राक्षरश्रेणीं वर्णस्वरपदात्मिकाम्। उच्चरेदर्थसंस्मृत्या स उक्तो मानसो जपः॥" इति। संपूज्य समाराध्य। अखिलचक्रराजनिलयाम् अखिलं संपूर्णं चक्रराजः श्रीचक्रं निलयः स्थानं यस्याः। एतावता सर्वावरणसहितां संपूज्येत्यर्थः। सायंतनाग्निप्रभां सायंसंध्योत्थप्रज्वलितवैश्वानरदीप्तिमतीम्। कामाख्यं कामेश्वरा-

भिधम् । शिवनामतत्त्वं शिवानां ब्रह्मविष्णुरुद्रेश्वरसदाशिवाख्यानां समुदायरूपं सिंहासनम् । उभयं द्वयमपि आत्मना व्याप्य स्वदेहावयवैराच्छाद्य । सर्वतश्चतुर्दिक्षु । दीव्यन्तीं प्रकाशमानाम् । इह भूतले तस्य साधकस्य । सिद्धिर्मनोवाञ्छिता । अचिरात् स्वल्पकालेन । स्यात् भवति । त्वत्स्वरूपैकता तव मूर्तिसायुज्यम् ॥ १५ ॥

नन्वितराः सर्वाः सिद्धयो मदाराधनेनैव संभवन्ति, परन्तु केवलं महाकवित्वेप्सूनामल्पविद्यानां मूर्खाणां काव्यव्याकरणाभिधानाभ्यासं विना कथं सिद्धिः स्यादित्याशङ्कायामाह—

काव्यैः पापठितैः किमल्पविदुषां जोघुष्यमाणैः पुनः
किं तैर्व्याकरणैर्विबोधिततया किं वाभिधानश्रिया ।
एतैरम्ब न बोभवीति सुकविस्तावत्तव श्रीमतो
यावन्नानुसरीसरीति सरणिं पादाब्जयोः पावनीम् ॥ १६ ॥

हे अम्ब, यावत्ते पादाब्जयोः सरणीं नानुसरीसरीति तावदल्पविदुषां पापठितैः काव्यैः किम् । जोघुष्यमाणैर्व्याकरणैः पुनः किम् । विबोधिततया वाभिधानश्रिया किम् । ( किम् ) एतैः सुकविर्न भवति । कथंभूतयोः पादाब्जयोः । श्रीमतोः । कथंभूतां सरणिम् ? पावनीमित्यन्वयः । काव्यैर्महाकविकृतैर्व्युत्पत्तिकारकैः । पापठितैर्वारंवारं पठितैः । किम् । न किमपीत्यर्थः । अल्पविदुषामीषद्व्युत्पन्नानाम् । निर्बुद्धीनामिति यावत् । जोघुष्यमाणैर्बहुधा घोषितैः । पुनः किं प्राग्वत् । तैरभ्यस्तैः । व्याकरणैः शब्दशास्त्रैः । विबोधिततया विज्ञाततया । किं प्राग्वत् । वा अथवा । अभिधानश्रिया अभिधानसंपत्त्या । एतैः काव्यव्याकरणाभिधानैः । अम्ब मातः । न बोभवीति अतिशयेन न संभवति । सुकविर्विद्वत्परितोषकः । तावत्तदवधि । तव श्रीमहात्रिपुरसुन्दर्याः । श्रीमतोः परमशोभनयोः । यावत् यदवधि । नानुसरीसरीति अत्यन्तं नानुसरति । सरणिं पद्धतिम् । पादाब्जयोश्चरणकमलयोः । पावनीं पवित्राम् ॥ १६ ॥

अतः परं देव्युपासकानामनिष्टसंपादकमपीष्टं संपादयतीति प्रतिपादयति—

गेहं नाकति गर्वितः प्रवणति स्त्रीसङ्गमो मोक्षति
द्वेषी मित्रति पातकं सुकृतति क्ष्मावल्लभो दासति ।
मृत्युर्वैद्यति दूषणं सुगुणति त्वत्पादसंसेवनात्
त्वां वन्दे भवभीतिभञ्जनकरीं गौरीं गिरीशप्रियाम् ॥ १७ ॥

श्लोकार्थः स्पष्ट एव ॥ १७ ॥

अतः परं साधकस्य कृतकृत्यतासंपादकं त्रिपुरानामनिरुक्तिमूलं श्रीमहात्रिपुरसुन्दर्याः कामकलाक्षरगतबिन्दुत्रयप्रसूतमन्तर्गतं बहिर्गतं च त्रिकमात्रं प्रकटयति—

आद्यैरग्निरवीन्दुबिम्बनिलयैरम्ब त्रिलिङ्गात्मभि-
मिश्रा रक्तसितप्रभैरनुपमैर्युष्मत्पदैस्तैस्त्रिभिः ।
स्वात्मोत्पादितकाललोकनिगमावस्थामरादित्रयै-
रुद्भूतं त्रिपुरेति नाम कलयेद्यस्ते स धन्यो बुधः ॥ १८ ॥

हे अम्ब, तैस्त्रिभिरपरं स्वात्मोत्पादितकाललोकनिगमावस्थामरादित्रयैश्चोत्पन्नं ते त्रिपुरेति नाम यः कलयेत् स बुधो धन्य इत्यन्वयः। आद्यैरकथाद्यैः अग्निरवीन्दु-बिम्बनिलयैः। अग्निरवीन्दूनां बिम्बानां मण्डलानां निलयानि निवासस्थानानि तैः। अम्ब जननि त्रिलिङ्गात्मभिर्मूलाधारहृदयभ्रूमध्यस्थैः स्वयंभूबाणेतरलिङ्गस्वरूपैः। इदं पदत्रयविशेषणम्। मिश्रा········। रक्तसितप्रभैः श्वेतरक्तपाटलवर्णैः। अनुपमैः उपमारहितैः। युष्मत्पदैस्त्वच्चरणैः तैः पूर्वोक्तविशेषणद्वयसहितैः। त्रिभिस्त्रिस्थानगैः। स्वस्या महात्रिपुरसुन्दर्याः। आत्मा कामकलाक्षरं तस्मादुत्पादितानि, कालत्रयं प्रात-र्मध्याह्नसायंसंध्यारूपम्, लोकत्रयं स्वर्गमृत्युपातालरूपम्, निगमत्रयं वेदत्रयम्। अवस्थात्रयं जाग्रत्स्वप्नसुषुप्तिरूपम्, अमरत्रयं ब्रह्मविष्णुरुद्ररूपम्। आदिशब्देन पीठ-त्रयम्, वह्नित्रयम्, इच्छादिशक्तित्रयमित्यादीनि तैः। उद्भूतमुत्पन्नं प्रथामागतम्। त्रिपुरात्रिपुराप्रकारमात्रकारणरूपा। इति एवंविधम्। नाम नाममन्त्रः, तम्। कलयेत् जानीयात्। य उपासकः। ते महात्रिपुरसुन्दर्याः। स गुरुमुखादवगततद्रहस्यः। धन्यः कृतकृत्यः। बुधो ज्ञानी ॥ १८ ॥

अतः परं त्रितयमात्रकारणभूतायाः श्रीकामकलात्मकमहात्रिपुरसुन्दर्या वाच्य-वाचकवक्तृत्वेन प्रणवाक्षरत्रयस्य मूलाधारहृदयभ्रूमध्यवर्तित्वेन कूटत्रयस्य प्रणवत्वं प्रतिपादयति—

आद्यो जाप्यतमार्थवाचकतया रूढः स्वरः पञ्चमः
सर्वोत्कृष्टतमार्थवाचकतया वर्णः पवर्गान्तकः ।
वक्तृत्वेन महाविभूतिसरणिस्त्वाधारगो हृद्गतो
भ्रूमध्यस्थित इत्यतः प्रणवता ते गीयते चागमैः ॥ १९ ॥

हे अम्ब, अतः कारणाद् आगमैः प्रणव इति गीयते। कुतः अकारोकारमकारै-र्वाच्यवाचकवक्तृरूपैः आधारहृदयभ्रूमध्यगैः कूटत्रयसाम्यता वेदैर्गीयत इत्यन्वयः। आद्योऽकारः। जाप्यतमार्थवाचकतया अतिशयेन जाप्या इति जाप्यतमा मूलविद्या तस्या अर्थः स्वरूपं तस्य वाचकः "अ-उ-म्' इति ब्रह्म" इति श्रुतिः। इति पर-ब्रह्मात्मिकां श्रीमहात्रिपुरसुन्दरीमेव वदति। "अकारो विष्णुरुच्यते" इत्यागमाभिधानेन व्यापकतेति विश्वव्यापिकां तामेव वदति। "कदाचिदाद्या ललिता पुंरूपा कृष्णविग्रहा।

अन्यत्रापि—

शरीरजो वा शाब्दो वा मानसो वा समुद्गतः।
व्यवहारोऽप्यसौ नास्ति यत्र त्वं नाथ नाग्रगः॥ इति।

उपपन्नमेतत्। तं स्तुम इत्युक्तम्। तं कम्? यदुन्मेषादौन्मुख्याज्जगतो विश्वस्योदयः प्रभवः सन्ततिरिति यावत्। निमेषाद्विश्रामात् प्रलयोऽप्ययः। न ह्येतद्व्यतिरिक्तस्य जगतोऽस्त्युदयोऽप्ययो वा।

किन्त्वीशशक्तिप्रसरविरामौ प्रभवाऽप्ययौ।

इति सिद्धम्। उक्तं च—

समुदेति जगदशेषं तवोदयविमलसंविदाकारे।
अस्तं याति समस्तं पुनरपि निजरूपरूढायाः॥ इति।

ग्रन्थकृताप्युक्तं तत्त्वविचारे—

शक्तिप्रसरसङ्कोचनिबद्धावुदयव्ययौ।
यस्यात्मा स शिवो ज्ञेयः सर्वभावप्रवर्तकः॥ इति।

कक्ष्यास्तोत्रेऽपि—

त्वदाशयोन्मेषनिमेषमात्रमयौ जगत्सर्गलयावितीदृक्।
स्फुटे स्फुटं त्वन्महिमाऽवभाति विचित्रनिर्माणनिदर्शनेन॥

ज्ञानक्रियादिगर्भेच्छाशक्तिर्यः प्रसरात्मकः।
सङ्कल्पोक्तः स उन्मेषः प्रोक्तं ह्येतत् स्वतन्त्रके॥

यत्र यत्र भवेदिच्छा ज्ञानं तत्र प्रवर्तते।
क्रियाकरणसंयोगात् पदार्थस्योदयो भवेत्॥ इति।

तद्विरतिश्च निमेषः। उदयप्रलयाविति वक्तव्ये प्रलयोदयाविति यदुक्तं तद्वृत्तभङ्गभयात्। विपर्ययेण चोन्मेषशब्दस्य मङ्गलार्थत्वादादिप्रयोगः। सृष्टेश्चाद्यत्वात्।

यस्माद्वस्त्वभिधेयं नातः शब्दक्रमेऽत्र भवबन्धः।
तत्पक्षो नीचः स्याद्ये तु ब्रुवते यथासंख्यम्॥ इति।

आभ्यामस्य जगत्सृष्टिसंहारयोः कारणभावः प्रोक्तो भुक्तिमुक्ती च। तत्रोन्मेषाद्भोगो नानाविधः। निमेषान्मोक्षो निस्तरङ्गरूपता। अन्यच्च। तं किंभूतम्? शक्तिचक्रविभवप्रभवमिति।

इच्छाख्यैका विभोः शक्तिः प्राग्द्विधा ज्ञ-क्रियाभिदा। इति।

तन्नानात्वं चक्रशब्देनोक्तम्। तदुक्तं मालिनीविजये—

या सा शक्तिर्जगद्धातुः कथिता समवायिनी।
इच्छात्वं तस्य सा देवी सिसृक्षोः प्रतिपद्यते॥
सैकाऽपि सत्यनेकत्वं यथा गच्छति तच्छृणु।
एवमेतदिति ज्ञेयं नान्यथेति सुनिश्चितम्॥
ज्ञापयन्ती जगत्यत्र ज्ञानशक्तिर्निगद्यते।
एवं भवत्विदं सर्वमिति कार्योन्मुखी यदा॥
जाता तदैव सा तद्वत् कुर्वन्त्यपि क्रियोच्यते।
एवमेषा द्विरूपाऽपि पुनर्भेदैरनेकताम्॥
अर्थोपाधिवशाद्याति चिन्तामणिरिवेश्वरी।
तत्र मातृत्वमापन्ना पञ्चाशद्वर्णमालिनी॥ इति।

शक्तीनां चक्रं शक्तिचक्रं मातृवर्गः। तच्च मुख्यं चतुर्विधम्। उक्तं च—

खेचरी गोचरी चाऽथ दिक्चरी भूचरीभिदा।
परादिभारतीसंस्थं शक्तिचक्रं चतुर्विधम्॥ इति।

तथा—

आनन्देच्छाः ज्ञ-क्रियाख्यं खेचर्याद्यं चतुष्टयम्। इति।

तस्य यो विभवो विभूतिर्विस्तरो वा तस्याऽपि प्रभवम्। प्रभवत्यस्मादिति प्रभव उत्पत्तिस्थानम्। यतः सर्वासां शक्तीनां सस्फारचिच्छक्त्यवगमनाच्छक्तित्वम्। सा च तदभिन्नैव। प्रोक्तं हि श्रीजयायाम्—

तत्त्वनिर्मुक्तदेहस्य केवलस्य चिदात्मनः।
य उदेति महानन्दः सा शक्तिर्वैष्णवी परा॥ इति।

विष्णुयामले च—

पाहि पाहीति वचनात्तत्त्राणात्तत्त्वविग्रहाः।
परापरबलस्पर्शात् स्वस्वरूपसमाश्रयात्॥
निहता दानववराः परं वीर्यं प्रकाशितम्।
तेन ता मातरः प्रोक्ता विश्वसम्भवकारणात्॥ इति।

अत एव ग्रन्थकारेणासां विज्ञानदेहात्मकत्वमुक्तम्। अथवा अलमत्र। किमनेनासां रहस्यस्वरूपातिप्रकाशनेन योगिनीनां मुखगतेन। शक्तयश्च खेचर्याद्या वेच्छाद्या वा पराद्या वा अघोराद्या वा वामाद्या वा ब्राह्मयाद्या वा अन्या वैष्णव-शैव-सौर-बौद्धाद्युक्ता वा। अथवा 'शब्दराशिसमुत्थस्य' ( स्पन्दप्रदी. श्लो. सं. ४५. ) इत्यादिना वक्ष्यमाणा अकाराद्यक्षररूपाः करणरूपा वा भवन्तु। एतावत् प्रयोजनमत्र

आभिर्यदासां सर्वासां स्पन्दरूपो भगवानेव प्रभव इति प्रतिपादनम्। तथा च माया-वामनसंहितायाम्—विष्णु-शिव-सूर्य-बुद्धादिरूपतया तत्तच्छक्तिचक्रपरिवारयुतस्तत्कारणं भगवानेक एव ध्यानभेदेनोपास्यत्वेनाभिहितः। उक्तं च कुलयुक्तौ—

वेदान्ते वैष्णवे शैवे सौरे बौद्धेऽन्यतोऽपि च।
एक एव परः स्वात्मा ज्ञाता ज्ञेयं महेश्वरि ॥ इति।

अन्यच्च—

'यस्योन्मेषनिमेषाभ्यां जगतः प्रलयोदयौ। तं स्तुमः'

इत्येतावता सर्वमुक्तं स्यात्। अत्यन्तस्फुरणाच्छक्तिचक्रस्य। उक्तं हि रहस्यशास्त्रेषु—

शक्तिश्च शक्तिमांश्चैव पदार्थद्वयमुच्यते।
शक्तयश्च जगत् सर्वं शक्तिमांस्तु महेश्वरः ॥ इति।

यत्तु 'शक्तिचक्रविभवप्रभवम्' इति पदमुपन्यस्तं तदुद्देशार्थम्। साभिप्रायत्वान्महाकवेः। उक्तं च ध्वनौ—

प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।
यत्तत् प्रसिद्धावयवातिरिक्तमाभाति लावण्यमिवाङ्गनासु ॥
तेनैतदेव शक्तीनां यतोऽन्तः प्रसरोदयौ।
तद्बलालम्भनात्तासां प्रभुत्वं प्राप्यतेऽचिरात् ॥ इति।

उक्तं चेह—

अपि त्वात्मबलस्पर्शात् पुरुषस्तत्समो भवेत्। इति।

यदिदं पदमग्रेऽस्ति परीक्ष्यं तत्त्वमादरात्।
इतः प्रभृति सर्वत्रेहानुयोज्यं तु तद्बुधैः ॥

इति ॥ १ ॥

ननु संसरावस्थायां कथं तस्करताऽऽत्मनि।
इत्याशङ्कोत्थदुर्दोषपरिहाराय तूच्यते ॥—

**यत्र स्थितमिदं सर्वं कार्यं यस्माच्च निर्गतम्।**
**तस्यानावृतरूपत्वान्न निरोधोऽस्ति कुत्रचित् ॥ २ ॥**

यत्र यस्मिन् स्पन्दतत्त्वे इदं सर्वं जगल्लक्षणं ज्ञानरूपतया शक्त्यात्मना स्थितं निमेषावस्थायां तस्यानावृतरूपत्वाद् बोधरूपतयाऽनाच्छादितस्वरूपत्वाद्धेतोर्न

कुत्रचिन्निरोधोऽस्ति। यतो बोधस्य स्वयं सत्तैव नास्ति। अबोधरूपमनावृतमेवावस्थाद्वयेऽपि। उक्तं च—

यथा हेम्नो रूपकेषु वैचित्र्यं स्वान्न रिच्यते।
अथ नित्यस्वरूपस्य तथा ते विश्वरूपता॥
यथा गलितरूपस्य हेम्नः पिण्डात्मना स्थितिः।
तथा गलितवेद्यस्य तव शुद्धचिदात्मता॥ इति।

ज्ञानसम्बोधेऽपि—

विश्वस्याश्रय आकाशं न विश्वं नभसो भवेत्।
ज्ञानं नभ इवानन्तं ज्ञेयं विश्ववदल्पकम्॥
आकाशस्येव वाऽन्येन प्रतिबन्धो न केनचित्।
व्यापित्वात् तद्वदस्याऽपि ज्ञानस्याऽप्रतिबन्धता॥

इति॥ २॥

सर्ववृत्त्युपसंहारो निरोधो मास्तु तस्य तु।
जाग्रदाद्यास्ववस्थासु कुतः स्यादनिरुद्धता॥—

**जाग्रदादिविभेदेऽपि तदभिन्ने प्रसर्पति।**
**निवर्तते निजान्नैव स्वभावादुपलब्धृतः॥ ३॥**

जाग्रदादिविभेदे प्रसर्पति प्रसरत्यपि सति तत् स्पन्दतत्त्वं निजादात्मीयात् स्वभावादुपलब्धृरूपात् स्वसंवित्स्वरूपान्नैव निवर्तते। कुतः? उपलब्धृतो हेतोर्वा। यस्मादुपलब्धृरूपत्वं तिसृष्वप्यवस्थासु साधारणम्। उक्तं च—

अवस्थास्वेव भेदोऽयं नावस्थातुः कदाचन।
यथा विषस्याङ्कुरादौ तच्छक्तेर्न तु भिन्नता॥ इति।

जाग्रत्स्वप्नयोस्तावत्संवेदनं सर्वेषां प्रसिद्धमेव सुषुप्तेरुत्तरकालं 'सुखमहमस्वाप्सम्' इत्याद्यज्ञस्याऽपि संवेदनात् संवेत्ता निर्दिष्ट एव भवति। उक्तं च—

वेल्लत्सु प्रतिबिम्बेषु जलस्पन्दानुवर्तिषु।
यथेन्दोर्न क्रियावेशस्तथाऽत्र परमात्मनः॥ इति।

अन्यच्च, विभेदे विशेषेण भेदो विभेदः तस्मिन्। किंभूते? तदभिन्ने। तस्यैव ताद्रूप्येणावस्थानात्। तथा च—

अक्षैर्योऽर्थग्रहो द्रष्टुस्तज्जाग्रदिति कथ्यते।
यत्तैर्विनार्थस्मरणं मनसा स्वप्नसंज्ञितम्॥
न ज्ञस्मात् यत्रार्थस्मरणे नस्तत् सौषुप्तमुदाहृतम्।
शुद्धबोधैकरूपो योऽवस्थाता सैव तुर्यता॥ तु।

इति॥ ३॥

अवस्था एव विश्रान्तर्नावस्थातेति ये जगुः ।
प्रत्यभिज्ञादियुक्त्येयं तन्निरासाय कारिका ॥—

अहं सुखी च दुःखी च रक्तश्चेत्यादिसंविदः ।
सुखाद्यवस्थानुस्यूते वर्तन्तेऽन्यत्र ताः स्फुटम् ॥ ४ ॥

अहं सुखीत्याद्याः याः संविदः संवेदनानि अवस्थाः । ताः संविद्भ्यो-ऽन्यत्र संवेत्तर्यवस्थातरि सुखाद्युपलब्धरि उपरागतया स्फुटं कृत्वा वर्तन्तेऽवतिष्ठन्ते । संवेत्तारं विना संवेदनस्याऽभावात् ।

नद्योऽब्धाविव तादात्म्यं तत्प्रविष्टाः प्रयान्ति वा ।
क्षणिकज्ञानिनां ह्येव न तु ता एव केवलाः ॥ इति ।

यस्मात्—

कार्यकारणभावो हि बाध्यबाधकताऽपि च ।
पूर्वापरैकमातारमन्तरेण प्रसिद्ध्यतः ॥ इति ।

तत्र हि—

प्रामाण्यं क्षणिकत्वेन प्रत्यक्षेणोपपद्यते ।
प्रागभावादुत्तरज्ञानदार्ढ्यात् प्रामाण्यसिद्धितः ॥
प्रतिक्षणमथान्यत्वात् सामान्यस्याग्रहे सति ।
विलक्षणाः क्षणाः सर्वे प्रामाण्ये किं निबन्धनम् ॥
सम्बन्धस्याग्रहश्चापि तेन मानस्य का गतिः ।
मिथ्याज्ञानस्य मिथ्यात्वं ब्रूहि वा किंनिबन्धनम् ॥
क्षणान्तरे शुक्तिकायां रजतं केन वार्यते ।
भिन्नज्ञानस्य कर्तृत्वे सर्वं प्रामाण्यमाप्नुयात् ॥
अन्यस्वरूपसंसिद्धावन्यसिद्धिर्भवेद्यदि ।
घटस्वरूपसंसिद्धौ पटस्यावगमो भवेत् ॥
योऽयं स एवाऽयमिति प्रत्ययः स्थिरकालजः ।
कर्तुं शक्यो न तद्वादिप्रामाण्यात् क्षणिकैस्ततः ॥
प्राग्विज्ञानस्मृतिं प्रत्यभिज्ञा नित्यं प्रतिष्ठिता ।
अतो नित्यस्वभावस्यैवात्मनः कर्तृतोदिता ॥ इति ।

किं वा बहूक्त्या—

एकप्रमात्रभावात् स्यात् क्षणिकत्वादनिश्चयात् ।
प्रमाणमप्यप्रमाणं स्याद् बौद्धानां हि निराश्रयम् ॥ इति ।

उक्तं च बौद्धायनसंहितायाम्—

कार्यकारणभावस्तु नास्ति ज्ञाने क्षणक्षयः ।
क्षणं द्वितीयं नास्ते चेत् स्मृतिबीजं कथं भवेत् ॥

जनकं तत् कथं नष्टमनष्टं वाप्यनष्टकम्।
नष्टस्य जनकत्वं चेद्भावाद्भावसन्ततिः॥
जनकत्वे त्वनष्टस्य क्षणभङ्गः प्रहीयते।
द्वितीयं यत्क्षणं तिष्ठेत्तदास्ते शतमप्यथ॥
जनकत्वेऽर्थनिष्ठस्य अर्थे नाऽभावमेति तत्।
तस्माद्भावाः स्थिराः सर्वे न च्यवन्ते स्वरूपतः॥
आत्मावबोधविषये स्वस्थिराः क्षणिका न ते।
बाध्यबाधकभावोऽपि न स्यान्निश्चायकं विना॥
शुक्तौ हि रजतज्ञानभ्रान्तिभङ्गोऽस्ति नान्यथा।
तस्माज्ज्ञानं नित्यमेकं क्षणिकानि बहूनि नो॥ इति।

सत्कार्यसिद्धौ च—

न हि स्वनिष्ठे विज्ञाने इतरेतरवेदनम्।
तस्मात् पूर्वापरावस्था( प्रमाण )परिपिण्डितः॥
एकः प्रमाता चित्राभिर्वृत्तिभिर्व्यवहारभाक्। इति।

प्रत्यभिज्ञायां च—

एवमन्योन्यभिन्नानामपरस्परवेदिनाम् ।
ज्ञानानामनुसन्धानजन्मा नश्येज्जनस्थितिः॥
न चेदन्तःकृतानन्तविश्वरूपो महेश्वरः।
स्यादेकश्चिद्वपुर्ज्ञानस्मृत्यपोहनशक्तिमान् ॥ इति।

गीतास्वपि—

"मत्तः स्मृतिर्ज्ञानमपोहनं च"
( भ. गी. १५-१५ )

इत्यलं कुतर्काश्मनां चर्वणेन। अन्यच्च, किंभूते संवेत्तरि ? सुखाद्यवस्थासु बोद्धृरूपतयाऽनुस्यूतेऽनुविद्धे। मणिषु सूत्रमिव सदानुस्यूते एव सर्वास्ववस्थासु। यस्माद्य एवाहं प्राक्सुखी स एवाद्य दुःखी। आदिग्रहणाद्रक्तोऽहं विरक्तोऽहं मूढोऽहं प्रबुद्धोऽहं धनादिमानहमिति स्मृतिप्रत्यभिज्ञानुसन्धानात्। नन्वेवमसौ सावरणः। नैतत्सत्यम्। विकल्परूपतया तासामनित्यत्वात्। तद्व्यतिरिक्तत्वाच्च संवेत्तुः तास्वविद्यावरणादुपरागमात्रस्य। उक्तं च भर्तृहरिणा—

नाच्छादितस्य तमसा रज्जुखण्डस्य विक्रिया।
नाशो वा क्रियते यद्वत्तद्वन्नाविद्ययाऽऽत्मनः॥ इति।

संवित्प्रकाशे च—

अत्यन्ताच्छस्वभावत्वात् स्फटिकस्य यथा स्वकम्।
रूपं परोपरक्तस्य नित्यमेवोपलभ्यते॥

तथा भावसमासक्तं भगवँस्तावकं वपुः ।
अत्यन्तनिर्मलतया पृथक् तैर्नोपलभ्यते ॥
नैतावताऽसौ स्फटिकः पृथङ्नास्त्येव रञ्जकात् ।
भावरूपपरित्यक्ता तव वा निर्मला तनुः ॥ इति ।

तथा—

उपरागेऽपि शुद्धत्वं न त्यक्तमनया प्रभो ।
परित्यज्य निजं रूपं संविदाख्या कुतश्च यत् ॥
अथाऽप्राप्यैव तद्रूपं भवेद्रूपान्तरानुगा ।
तद्रूपापि हि दृश्येत कारणेऽस्याऽपि सम्भवात् ॥

तथाऽत्रैव—

सदैव शुद्धोऽनुभवो यं प्रत्याकारकर्बुरः ।
आकारान्तरसञ्चारकाले तस्यापि निर्मलः ॥
यथा जात्या सितं वस्त्रं रक्तं रागेण केनचित् ।
तत्पदप्राप्तशुक्लत्वं पुना रागान्तरं श्रयेत् ॥
एवं शुद्धा चितिर्जात्या यदाकारोपरागिणी ।
तत्त्यागापरसञ्चारमध्ये शुद्धैव तिष्ठति ॥ इति ।

तथा—

नीले पीते सुखे दुःखे चित्स्वरूपमखण्डितम् ।
विशिनष्टि विकल्पस्तच्चित्रयोपाधिसम्पदा ॥

इति ॥ ४ ॥

तद्व्यतिरिक्तस्य च रूपमाह—

**न दुःखं न सुखं यत्र न ग्राह्यं ग्राहकं न च ।**
**न चास्ति मूढभावोऽपि तदस्ति परमार्थतः ॥ ५ ॥**

तत् स्पन्दतत्त्वं परमार्थतोऽस्ति नित्यत्त्वात्तस्य । यत्र न दुःखमाध्यात्मिकादि । न सुखं वैषयिकम् । न ग्राह्यं घटपटादि न ग्राहकमहमिदं गृह्णामीति प्राकृतं सविकल्पाहङ्काररूपत्वमविद्यात्मकत्वादहङ्कारस्य । न त्वनेनाधिष्ठातृरूपस्य ग्राहकस्याभाव उक्तः । उपेयत्वात्तस्य । उक्तं च तत्त्वगर्भे—

परमार्थेन न ग्राह्यं ग्राहकं वा न किञ्चन ।
यस्मादृते तत् स्वाभासमस्वाभासमिवेक्ष्यते ॥ इति ।

एवं तर्हि तत् पाषाणप्रख्यं मूढत्वमेव शून्यं वा? अत्रोच्यते—'न चास्ति मूढभावोऽपि' इति। कुतः चिद्रूपत्वात्। उक्तं च मुनिना—

यथा शीतोष्णयोर्मध्ये काले नोष्णो न शीतलः।
एवं हि सुखदुःखाभ्यां हीनमस्ति पदं विभोः॥ इति।

स्तुतौ च—

समुदेति यथा भावर्धिना भानुर्नभस्तले।
वेद्यं विनैव भगवन् भवान् केन स्वतोदयः॥ इति।

तथा—

यथोद्धृतविशेषस्य सामान्यस्य निजा स्थितिः।
पृथङ् न शक्या निर्देष्टुं न च तत्रास्ति तावता॥
एवं नित्या निजा शुद्धा सुखदुःखाविशेषिता।
स्वसंवेदनसंवेद्या तव संविन्मयी स्थितिः॥ इति।

नागार्जुनेनाऽप्युक्तम्—

सर्वालम्बनधर्मैश्च सर्वतत्त्वैरशेषतः।
सर्वक्लेशाशयैः शून्यं न शून्यं परमार्थतः॥ इति।

आलोकमालायां च—

विरुद्धत्वात्तमोवृत्तेर्नावकाशं ददाति या।
साऽवस्था काऽप्यविज्ञेया मादृशैः शून्यतोच्यते॥
न पुनर्लोकरूढ्यैव नास्तिक्यार्थानुपातिनी।

इति॥ ५॥

अत्रास्याऽमूढत्वाऽस्तित्वयोः सन्दानितकेनोपपत्तिमाह—

**यतः करणवर्गोऽयं विमूढो मूढवत् स्वयम्।**
**सहान्तरेण चक्रेण प्रवृत्तिस्थितिसंहृतीः॥ ६॥**
**लभते तत् प्रयत्नेन परीक्ष्यं तत्त्वमादरात्।**
**यतः स्वतन्त्रता तस्य सर्वत्रेयमकृत्रिमा॥ ७॥**

यतो यस्मात् स्पन्दतत्त्वादयं बाह्यः करणवर्गो बुद्धिकर्मेन्द्रियाख्योऽन्तःकरणचक्रेण सह विशेषेण मूढचेतनो विचेतनवत् स्वयं प्रवृत्तिस्थितिसंहृतीर्लभते।

एषोपपत्तिहेतुस्तु दृष्टान्तो भ्रामको मणिः।
यथा वाताग्निसंपर्कादयःपिण्डोऽग्निवद्भवेत्॥
दाहपाकप्रकाशादौ शक्तस्तद्वदयं गणः। इति।

एवं योऽन्येषां चैतन्यापादने समर्थः स कथं निःस्वभावः? उक्तं षाड्गुण्यविवेके—

स्वदेहसाक्षिकं चैतत् सर्वस्य ज्ञानचेष्टितम् ।
ज्ञानानधिष्ठितः कायो लुठत्येव यतो धृतः ॥
अत एव जडानामप्यधिष्ठातृकृता धृतिः ।
गम्यते गगने ग्रावा न धार्येताऽन्यथा कथम् ॥ इति ।

तस्मात्तत् तत्त्वं प्रयत्नेनादरात्परीक्ष्यम् । प्रयत्न उद्योगरूप उत्साहः । आदरः श्रद्धा । अत्र च परीक्षणमुद्योगबलानुप्रवेशेन स्वीकरणम् । उक्तं चेह—

"अतः सततमुद्युक्तः" इत्यादिना ।

सिद्धोक्तं च—

अदृश्यं नेत्रवद् ब्रह्म द्रष्टृत्वं चास्ति नेत्रवत् ।
स्वात्मन्येवोपलम्भोऽस्य दर्शनं घटवन्न तु ॥ इति ।

यतो यस्मात्तस्येयमकृत्रिमा निजैव स्वतन्त्रता सर्वत्र । तेनैतदुक्तम्—यथास्य करणादिषु चैतन्यापादने स्वातन्त्र्यं तथा परपुरादिष्वपि सम्भाव्यतेऽभ्यासात् ॥ ७ ॥

तदिच्छयास्तु सामर्थ्यं करणानां स्वतन्त्रता ।
सर्वत्रोक्ताऽस्य या सा तु भक्तियुक्तिरतस्त्वियम् ॥—

**नहीच्छानोदनस्यायं प्रेरकत्वेन वर्तते ।**
**अपि त्वात्मबलस्पर्शात् पुरुषस्तत्समो भवेत् ॥ ८ ॥**

अयं पुरुषो जीवात्मा नेच्छानोदनस्य नेच्छाप्रेषणस्य करणचक्रचोदकस्यैव केवलं प्रेरकभावेन वर्तते । हिशब्द एवशब्दार्थे केवलशब्दार्थे वा । अपित्विति निपातः प्रतिषेधनिवृत्तौ स्वरूपद्योतकः । आत्मनो बलमात्मबलं निरावरणचिद्रूपं ज्ञत्वकर्तृत्वलक्षणम् । तत्स्पर्शात्तदवष्टम्भात् तत्समो भवेत् । सर्वज्ञः सर्वकर्ता स्यादित्यर्थः ॥ ८ ॥

अनेन सर्वं स्वातन्त्र्यमुक्तमस्य च तद्भवेत् ।
अभिमानात्मकक्षोभक्षयेन त्वन्यमाह च ॥—

**निजाशुद्ध्यासमर्थस्य कर्तव्येष्वभिलाषिणः ।**
**यदा क्षोभः प्रलीयेत तदा स्यात्परमं पदम् ॥ ९ ॥**

निजा सहजा । अनादिर्याऽशुद्धिरविद्याऽविवेकमूला भोगाभिलाषमलरूपतयाऽसमर्थस्य सङ्कुचितशक्तेः । अत एव च कर्तव्येषु कार्येष्वभिलाषिणः साभिलाषस्य सतो न कार्यमिच्छतोऽपि भवति । तथा च श्रीसात्वता—

अज्ञता व्यापकत्वं च सुखदुःखादिवेदनम् ।
सर्वज्ञस्यात्मतत्त्वस्य कर्मचक्रावलम्बनात् ॥
गतीस्त्वेषा प्रकृत्याख्या शुद्धिः प्राक्कर्मवासना ।
मायाऽविद्या भ्रमो मोहो ज्ञानं मलमिति क्वचित् ॥ इति ।

गीतं च—

प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान्॥ इति।
(भ. गी. १३। १९)

अनादित्वे समानेऽस्या विशेषोऽयं विचारतः। इति।

लयो यन्मायारूपत्वात्। तदुक्तं संवित्प्रकाशे—

मायात्वमेतदेव स्यान्नाशस्तत्त्वप्रदर्शनात्।
नहि विज्ञातरज्ज्वात्मा सर्पादीन्मन्यते पुनः॥ इति।

अन्यत्र च—

त्वत्तो द्वितीयमिह वस्तु यदस्ति किञ्चित्तत्तद्विचारपदवीमवतारितं चेत्।
गन्धर्वपत्तनमिवोपलयं प्रयाति त्वं शिष्यसे ध्रुवमतस्तव शेषसंज्ञा॥ इति।

विद्याधिपतेश्च—

भक्षणप्रकृतिना समाधिना युक्तितो विषयधाम्नि भक्षिते।
सर्वभक्षपदवीमुपेयुषः शिष्यते परमभक्षितो भवान्॥

सा चेन्द्रजालिनो मायेवाऽऽस्थिता बाधकात्मनि।
यथाऽग्निर्धूमलेखेव मलवद्दर्पणस्य वा॥
बुद्बुदाः सलिलस्येव तच्छान्तौ निर्विकारिता। इति।

यदा तु क्षोभो विकारोऽशुद्धिजनितो देहाहम्प्रत्ययरूपो विवेकेनात्मबलस्पर्शात् प्रलीयते प्रलयं याति तदा स्यात् परमं पदं स्वस्वरूपे स्थितिर्भवेदित्यर्थः। उक्तं षड्धातुसमीक्षायाम्—

कर्माणि मोहमूलानि संसृतेः कारणं यतः।
तत्क्षयात् कर्मनिर्मुक्तः स्वस्थः शान्ततमस्ततः॥ इति।

नारदसंग्रहेऽपि—

यथा सुभर्जितं बीजं नेह भूयः प्ररोहति।
विकल्पक्षीणचित्तस्य तथा भूयो न संसृतिः॥ इति।

स च क्षोभक्षयः शनैः शनैरभ्यासाद्भवेत्। उक्तं स्वात्मसंबोधे—

यथाग्निपोत्रं ज्वलनोद्धृतं सच्छैत्यं प्रयायाच्छनकैर्न सद्यः।
अज्ञानपङ्केऽपि तथा निरस्ते कालेन कैवल्यमुपैति देही॥

षाड्गुण्यविवेकेऽप्यात्मपरमात्मनोरेतावान् भेदोऽभिहितः—

अविद्याकृतसङ्कोचगृहीताहंयुतास्य या।
तयाऽभिन्नोऽपि भिन्नोऽयं तत्त्वतः स्वप्नभीतवत्॥
अभीत एव यः स्वप्ने बिभ्यदभ्येति सम्भ्रमम्।
तस्य स्वप्नादभिन्नस्य को भेदः पारमार्थिकः॥

तथा हि मिथ्यैव भयं ममेति यदि बुद्ध्यते।
स्वप्नतत्त्वं परामृश्य भीतिभिन्नैर्न बाध्यते॥
एवं त्वन्मय एवाऽहमिति भावनया त्वयि।
प्रलीनाऽहङ्कृतिग्रन्थिः पश्यत्येव त्वदात्मताम्॥ इति।

संवित्प्रकाशे च—

कर्मेदं त्वत्कृतमपि त्वन्मयं येन माधव।
विहीनाऽहङ्कृति ततस्त्वमेव परिशिष्यसे॥
एतावतैव भेदोऽस्य यदहम्मानिताऽऽत्मनि।
सा चेद्विलीना त्वद्भक्त्या नष्टो भेदः स्थितैकता॥

इति॥ ९॥

स्वरूपस्थस्य गुणानाह—

**तदाऽस्याऽकृत्रिमो धर्मो ज्ञत्व-कर्तृत्वलक्षणः।**
**यतस्तदीप्सितं सर्वं जानाति च करोति च॥ १०॥**

तदा तस्मिन् प्रलीनक्षोभात्मके कालेऽस्य आत्मनः स्वरूपस्थत्वात् अकृत्रिमः सहजो धर्मः स्वभावो भवतीति वाक्यशेषः। किंभूतः? जानातीति ज्ञः। तस्य भावो ज्ञत्वम्। करोतीति कर्ता। कर्तुर्भावः कर्तृत्वम्। आभ्यां यो लक्ष्यते, एते वा लक्षणं रूपचिह्नं यस्य धर्मस्य स ज्ञत्व-कर्तृत्वलक्षणः। यतो यस्माद्धर्माद्धेतोर्वा यज्ज्ञातुमीप्सितमभिमतं तज्ज्ञानाय यत् कर्तुमिष्टं तत् करोति स्वात्मनो वा परस्य वा। पञ्चरात्रे चैष एव धर्मो विवेकजज्ञानशब्देनोक्तः—

"तस्य च प्रादुर्भवतः किं पूर्वरूपम्? यत् सर्वज्ञो भवति सर्वदर्शी सर्वेश्वरः सर्वशक्तिः" इति।

स चास्य करणैर्विनाऽपि स्यात्। तत्रैवोक्तं हि—"तद्यथा अग्निर्नाम कस्मिंश्चिद्दाह्ये नान्यत्किञ्चिदुपादत्ते तेन धक्ष्यामीति स्वयमेव दहति। एवमयमात्माऽनुपादाय ज्ञाताऽनुपादायकारी स्वात्मनैव सर्वकरः" इति।

कुतः? बोधरूपत्वात्। षाड्गुण्यविवेके उक्तम्—

नहि बोधो विचित्रार्थनिर्माणेऽन्यमपेक्षते।
सङ्कल्पादेव यो रूपसहस्राणि सृजत्यजः॥ इति।

ये त्वस्य ज्ञत्व-कर्तृत्वादीन्यन्यतो वदन्ति तेषामनीशतैव स्यात्। उक्तं ह्यागमरहस्ये—

✓ येऽपीश्वरं व्यपदिशन्ति निमित्तहेतुं तैरर्पितः स्थलजलाञ्जलिरीशितायै।
अन्याङ्गनोपगमनेन वशीकृतस्य कामीश्वरस्थितिममी बत सङ्गिरन्ते॥ इति।
तस्माद्युक्तमुक्तम्॥ १०॥

अस्याऽकृत्रिमधर्मस्य स्थैर्यायोपाय उच्यते—

तमधिष्ठातृभावेन स्वभावमवलोकयन् ।
स्मयमान इवास्ते यस्तस्येयं कुसृतिः कुतः ॥ ११ ॥

तं शुद्धमात्मस्वभावमधिष्ठातृभावेन चिद्रूपतया सर्वव्यापकत्वेनावलोकयन् पश्यन् प्रतिजानन् स्मयमान इव विस्मयाविष्ट इव विकसन्निव यस्तिष्ठति। तस्य अविद्याविलयादियं कुतः कुसृतिः ? कुत्सितसंसरणं न कुतश्चिद् भवतीति वाक्य-शेषः। उक्तं च शिवसूत्रेषु—

विस्मयो योगभूमिका ।

अस्य चैतदवलोकनं यद् द्रष्टृरूपतयाऽनुभवनम्। उक्तं हीष्टोपदेशे—

यदिदं दृश्यते दृष्टया ग्रहं पुत्राऽत्र सन्त्यज ।
येन पश्यति तं पश्य यं दृष्ट्वा पश्यसेऽखिलम् ॥ इति ।

कर्त्रा चोक्तम्—

यो जगु पश्चि एपु किंतु वीक्षोमाइत्थ करो ।
विषयालविलुद्दि एसे पत्तापत्त रावीक्षो अपलइयद अस्त्युवुद्दि ॥ इति ।

तथाऽस्यान्यतः कुतः साभिलाषतया विकल्पशिल्पादिकुमार्गानुसरणम् ? अपि त्वेवं सदैव स्वस्वरूपे स्थितिर्भवेत्। तत्स्थत्वाच्चेश्वरवत् सत्यसङ्कल्पः स्यादित्यतोऽस्मिन्नेवासती। यतोऽभ्यासं विना ज्ञातमपि स्वीकर्तुं न शक्यते। तदनन्तरेण च कुतः सिद्धिः ?। उक्तं मुनिना—

यदि वाचनिकाज्ज्ञानान्मुक्तिः स्याद्भावनां विना ।
शारीरमानसैर्दुःखैर्मुच्येरन् सर्वजन्तवः ॥ इति ।

तथा च युक्तौ—

रसायनं विनास्वादात् सूचितं ह्यपि सिद्धिदम्। इति ।

अन्यच्चोक्तम्—

आगोपबालवनितं भगवंस्त्वमित्थं ज्ञातोऽप्युपायविरहान्न तु मोक्षदोऽसि ।
नान्तः स्थितं भवति धेनुषु तृड्विहर्तृ क्षीरं तदेव पुनरभ्यवहारतः स्यात् ॥

इति ॥११॥

तान् ध्वंसयितुमाहेदं ये त्वाहुः शून्यवादिनः ।
अभावं भावयेत्तावद्यावत्तन्मयतां व्रजेत् ॥—

नाऽभावो भाव्यतामेति न च तत्रास्त्यमूढता ।
यतोऽभियोगसंस्पर्शात् तदासीदिति निश्चयः ॥ १२ ॥

अतस्तत्कृत्रिमं ज्ञेयं सौषुप्तपदवत् सदा ।
न त्वेवं स्मर्यमाणत्वं तत्तत्त्वं प्रतिपद्यते ॥ १३ ॥

नाऽभावः शशविषाणसदृशो भाव्यतामनुभवविषयत्वमेति प्राप्नोति, अवस्तुत्वात् । न च तत्राऽभावे अमूढतास्ति, अपि तु मूढावस्थैव सा । यतोऽभियोगसंस्पर्शाद्भिलाषसंयोगात्तद्भावभावनमासीद्भूत् । अतीतमिति निश्चयः । यस्मात् स मम शून्यावस्थातीतेति स्मर्यते । तदुक्तम्—

अभावो येन भावेन बाध्यतेऽस्ति न नास्ति सः ।
तस्य भावस्य सद्भावो वद केन निवार्यते ॥
सोऽस्त्यतश्चिन्मयो भावो येन सर्वं विभाव्यते । इति ।

अतो हेतोस्तद्भावभावनं कृत्रिममनित्यं सदा ज्ञेयम् । किमिव ? सौषुप्तपदवत् सुषुप्तावस्थेव । न त्वेवं मूढावस्थावत् । तदा आत्मतत्त्वं स्मर्यमाणत्वं स्मर्तव्यतां प्रतिपद्यते गच्छति, स्मर्तृत्वाच्चिद्रूपस्य; नित्योदितत्वाच्च । तस्मात्तत्त्वं गुरूपदेशेनादरात् परीक्ष्यमिति ॥ १२-१३ ॥

एवम्—

अवस्थाद्वयमात्राऽस्ति स्मर्तृ-स्मर्तव्यभेदतः ।
यत्तस्य नित्यनित्यत्वविचारायेदमुच्यते ॥—

अवस्थायुगलं चाऽत्र कार्य-कर्तृत्वशब्दितम् ।
कार्यता क्षयिणी तत्र कर्तृत्वं पुनरक्षयम् ॥ १४ ॥

अत्रास्मिन् पूर्वोक्ते स्पन्दतत्त्वेऽवस्थायुगलं दशाद्वयं यदस्ति कार्य-कर्तृत्वशब्दितं कार्यकारणसंज्ञितं भोग्य-भोक्तृभेदभिन्नदृश्यद्रष्टृभिदा वेद्यवेदकरूपम् । तत्र तयोरध्यासाद्या कार्यता सा क्षयिणी उत्पत्तिविनाशयुक्ता । यत्पुनः कर्तृत्वं तदक्षयम्, निरवधि चित्स्वरूपत्वात् ॥ १४ ॥

अत एव—

कार्योन्मुखः प्रयत्नो यः केवलं सोऽत्र लुप्यते ।
तस्मिल्लुँप्ते विलुप्तोऽस्मीत्यबुधः प्रतिपद्यते ॥ १५ ॥

अत्रास्मिन् कार्ये बाह्येऽर्थे क्षयिणि सति कार्योन्मुखः कार्यसम्पादनाभिमुखो यः प्रयत्नो बाह्यकरणव्यापाररूपः स केवलं लुप्यते न लक्ष्यते न्यग्भूयेव स्वात्मन्यास्ते, स्थगितेन्द्रियस्य वा व्यापारासामर्थ्यात् । तस्मिन् प्रयत्ने लुप्ते सति अस्मि अहं विलुप्तो नष्ट इत्यबुधोऽज्ञः प्रतिपद्यते जानाति । न तु चिद्रूपस्य विनाशोऽस्ति । उक्तं च—

विज्ञप्तेर्न विनाशोऽस्ति विनष्टेऽपि शरीरके।
अभावे सूर्यकान्तस्य नैवास्ति सवितुः क्षतिः॥

इति॥ १५॥

कस्माच्चेत्याह—

न तु योऽन्तर्मुखो भावः सार्वज्ञादिगुणास्पदम्।
तस्य लोपः कदाचित् स्यादन्यस्यानुपलम्भनात्॥ १६॥

देशकालादिविच्छिन्नस्य कार्यस्यैव लोपो निवृत्तिर्न तु योऽन्तर्मुखो भावो बहिरप्रसूतेः स्वस्वरूपस्थः स्वस्वभावः सर्वज्ञतादीनां गुणानामास्पदमाश्रयस्तस्य भावस्य लोपः कदाचित्स्याद्भवेद् उपपद्यते। कुतो न स्यात्? चिद्रूपं मुक्त्वाऽन्यस्य द्वितीयस्यानुपलम्भनाद् अनुपलब्धेः। तस्यैव हि सर्वत्र सर्वदोपलब्धिः। एतदुक्तम्—

देशकालक्रियाकारैरवच्छिन्नेषु वस्तुषु।
अनवच्छिन्नरूपस्त्वं भासि तस्य बहिःस्थितेः॥ इति।

अत्र च—

भेदः सर्वज्ञतादीनां ज्ञानादीनां च नास्त्यमी।
ज्ञानस्यैव धर्मतया चिद्रूपस्य स्थितिर्यतः॥ इति।

उक्तं च षाड्गुण्यविवेके—

गुणेषु ज्ञानमाद्यन्ते तेन तत्त्वेऽवधारिते।
धर्मत्वेनेषिता शक्तिर्बलवीर्यौजसां स्थितेः॥ इति।

कक्ष्यास्तोत्रे च—

ज्ञानं प्रशान्तं तव बोधवृत्तिरैश्वर्यमुद्यत्प्रसरा परेषाम्।
प्रकाशनं प्रत्यपि योग्यरूपा शक्तिर्बहिःस्थैर्यवती बलं सा॥
उत्पन्नबाह्यप्रसरां तु वीर्यं तेजश्च बाह्यानवभासयन्ति।
षोढेत्थमेकैव तव स्वशक्तिर्बाह्यावमर्शात्तु भवेदविद्या॥
तत्र सर्वज्ञता ज्ञानं सर्वं हि जायते ततः। इति।

तृप्तिर्बलम्। तथाहि—

बलस्य तृप्तिमूलत्वात् क्षमस्य तदभावतः।
अनादिबोधस्तेजोऽत्र बोधमूलं हि तत्सदा॥ इति।

तदुक्तम्—

प्रभावलक्षणं यच्च तेजः प्रह्वयते परान्।
बोधत्वादेव तद्वेद्यं बोधं प्रह्वयते जगत्॥
स्वतन्त्रताऽत्र चैश्वर्यं स्वातन्त्र्यादीश्वरस्य तु। इति।

तदुक्तम्—

स्वतन्त्रः सर्वकृत्येषु न नियोज्यो न विघ्नवान् ।
प्रवृत्तोऽस्यप्रवृत्तो वा यतस्तेन त्वमीश्वरः ॥
वीर्यं सदाऽलुप्तशक्तिः नाशाभावश्च तद्वतः । इति ।

तदुक्तम्—

आत्मसत्त्वापरिभ्रंशलक्षणाद्वैर्यमासत ।
वीर्यादेतच्च ते कार्येऽनन्वयः स्वर्णवच्च यः ।
अनन्तशक्तिः शक्तिः सा सामर्थ्यात् सर्वतः सदा ॥

इति ॥ १६ ॥

तस्य तु कोपलब्धिरित्याह—

**तस्योपलब्धिः सततं त्रिपदाव्यभिचारिणी ।**
**नित्यं स्यात् सुप्रबुद्धस्य तदाद्यन्तेऽपरस्य तु ॥ १७ ॥**

तस्य चिद्रूपस्यात्मनो योगिनः सततमुपलब्धिरनुभवो भवेत् । कीदृशस्य योगिनः ? नित्यं सदैव सुप्रबुद्धस्य । कीदृश्युपलब्धिः ? त्रिपदाव्यभिचारिणी त्रिष्वपि जाग्रदादिषु पदेषु अवस्थासु न या व्यभिचरति न निवर्तते सा तथोक्ता । कार्ये तु निर्भ्रान्तैव । उक्तं च—

काप्यवस्था न ते साऽस्ति यस्यां संविन्न वर्तते ।
तेन चिद्घनमेव त्वां योगिनः पर्युपासते ॥ इति ।

अपरस्य पुनरीषत्प्रबुद्धस्य प्रबुद्धस्य च । तदाद्यन्ते तदिति पदत्रयस्य परामर्शः ।

एतदुक्तम्—

तदादौ प्रागवस्थायां (तदन्तेऽपि) च तन्मये ।
पदं प्रत्ययवाद्यन्ते जाग्रत्तुर्येष्ववागमात् ॥ इति ।

अथवा तदादौ तदन्ते च तन्मध्ये जाग्रत्स्वप्नयोरित्यर्थः । यतः प्रबुद्धस्यैतयोरेव स्फुटोपलब्धिः संवेदनम् ॥ १७ ॥

स च तस्य क्व कथमिति स्फुटीकर्तुमाह—

**ज्ञानज्ञेयस्वरूपिण्या शक्त्या परमया युतः ।**
**पदद्वये विभुर्भाति तदन्यत्र तु चिन्मयः ॥ १८ ॥**

विभुर्व्यापकः चिन्मयश्चिद्रूपः परमात्मा परमया शक्त्याऽत्युत्कृष्टेन सामर्थ्येन युक्तः । पदद्वये जाग्रत्स्वप्नात्मके भाति दीप्यते प्रकाशते । कीदृश्या शक्त्या ? ज्ञानज्ञेयभेदेन द्विरूपया । द्वैरूप्यादस्याः पारम्यम् । अत एवास्मिन्नवस्थाद्वये द्विविधोप-

लब्धिः । तदन्यत्र पुनस्तस्मात्पदद्वयादन्यस्मिन् पदद्वये सुषुप्ततुर्याख्ये चिन्मयश्चिन्मात्र एव । ज्ञेयाभावाज्ज्ञानस्वरूप एवेत्यर्थः ॥ १८ ॥

तस्यापलब्धिर्योक्ता सा गुणस्पन्दादिभिः स्थितैः ।
कुतस्त्या चेति सा शङ्का ये तान् प्रत्युच्यते त्विदम् ॥—

**गुणादिस्पन्दनिष्यन्दाः सामान्यस्पन्दसंश्रयात् ।**
**लब्धात्मलाभाः सततं स्युर्ज्ञस्यापरिपन्थिनः ॥ १९ ॥**

गुणाः सत्त्वरजस्तमांसि । आदिग्रहणान्महदहङ्कारतन्मात्रेन्द्रियभूतानि च । गुणादिश्चासौ स्पन्दः गुणादिस्पन्दः । तस्य ते निष्यन्दाः प्रवाहाः सुखदुःखमोहोर्मिज्ञानविशेषाः । तस्य प्रागुक्तलक्षणस्य सामान्यस्पन्दस्यान्तर्लीनाऽनन्तविशेषस्य संश्रयादालम्बनाद्धेतोर्लब्धात्मलाभाः प्राप्तसत्ताकाः । अत एव ज्ञस्य विदितवेद्यस्य योगिनः स्वरूपाव्यवधानादसम्पर्कात् सततं नित्यमपरिपन्थिनः स्युः । स्वभावाच्छादका न भवन्तीत्यर्थः । सिद्धोक्तं च—

यद्वत्प्रकाशभवने प्रकाश्यविषयो न दृश्यते मातः ।
सम्पर्कात्तव तद्वत् संविद्वेद्ये न भाव्यते जातु ॥ इति ।

ते चास्यैव स्पन्द इति प्रागेवोक्तम् । मतङ्गपारमेश्वरेऽपि—

शिवाद्यवनिपर्यन्तो योऽयमध्वाऽतिविस्तरः ।
स समस्तश्चिता ज्ञेयस्तया संवेद्यते यतः ॥ इति ।

गीतासु च—

दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥
(भ० गी० ७ । १४)

इति ॥ १९ ॥

अज्ञस्य तु—

**अप्रबुद्धधियस्त्वेते स्वस्थितिस्थगनोद्यताः ।**
**पातयन्ति दुरुत्तारे घोरे संसारवर्त्मनि ॥ २० ॥**

अप्रबुद्धा सम्मूढा धीर्बुद्धिर्यस्य पुंसस्तस्य पुनरेते गुणादिस्पन्दनिष्यन्दाः स्वस्थितेश्चिद्रूपाया अवस्थायाः स्थगनेऽवच्छादने प्रोद्यताः । यतोऽसौ तदात्मकमेव नित्यमात्मानं पश्यति, न शुद्धबुद्धरूपतया । उक्तं च—

यथादर्शं शिशुः स्वच्छं निश्वासैः स्वैर्मलीमसम् ।
करोति तद्वद्विज्ञानं स्वविकल्पैर्जडाशयः ॥ इति ।

अत एव संसारवर्त्मनि पातयन्ति जननमरणप्रवाहमार्गे प्रेरयन्ति। कीदृशे ? दुरुत्तारे दुःखेनोत्तरणं निस्तारो यत्र। अत एव घोरे क्लेशप्रदे। तदुक्तं ज्ञानसम्बोधे—

यद्यपि स्वात्मशक्त्यैव गतिः साक्ष्यन्ययोर्द्वयोः।
तथाप्येकः स्वयं याति द्वितीयोऽन्येन नीयते॥
साक्षिवत् स्फीतबोधानां स्वातन्त्र्यं विषमेष्वपि।
अन्धवन्मन्दबुद्धीनां पारतन्त्र्यं समेष्वपि॥

इति॥ २०॥

अथात्राऽज्ञस्याप्युत्तरणोपायमाह—

अतः सततमुद्युक्तः स्पन्दतत्त्वविविक्तये।
जाग्रदेव निजं भावमचिरेणाधिगच्छति॥ २१॥

यतस्ते पातनशीलाः। अतोऽस्मात् कारणाद्यः सततं सर्वकालमुद्युक्तो विकस्वरस्वभावतया कृतोद्योगः। किमर्थम् ? स्पन्दतत्त्वस्य विविक्तये विवेचनाय स्वरूपाभिव्यक्त्यर्थम्। यत उद्योक्तृरूपं तत्। उक्तञ्च शिवसूत्रेषु—

"उद्योगः शिवः" इति।

अतः प्रजाग्रदेव जाग्रदवस्थायामेव व्युत्थानेऽपि निजमात्मीयं स्वभावमचिरेण शीघ्रमधिगच्छति प्राप्नोति। अस्य चैतद्विवेचनम्। यदहं शुद्धबोधैकरूपो जगच्चेदं मत्स्फार एव। उक्तं च—

सर्वो ममायं विभव इत्येवं परिजानतः।
विश्वात्मनो विकल्पानां प्रसरेऽपि महेशता॥ इति।

पञ्चरात्रेऽपि—

"यदात्मनि सर्वभूतानि पश्यत्यात्मानं च तेषु पृथक्च तेभ्यस्तदा मृत्योर्मुच्यते जन्मनश्च" इति।

अन्यत्र च—

निर्मलानन्त्यबोधैकरूपस्त्वं भव्यबुद्धिभिः।
वेद्याद्वा वेदकाद्वापि लभ्यसेऽवहितात्मभिः॥ इति।

तत्त्वार्थचिन्तामणौ च—

इत्थं तत्तदनल्पमोहदलनप्राप्तस्वरूपोदयो
योगी नित्यमनात्मभावविरहात् स्वात्मस्थितो निर्वृतः।
दृश्यद्रष्टृविवेकविद्रवपदव्यापी विमुक्तामयो
व्युत्थानेऽपि समाधिभाग्भवति सन्मोक्षश्रियः कारणम्॥

इति॥ २१॥

जाग्रदेव स्वभावोक्तिर्योक्ता साऽज्ञैर्न लक्ष्यते।
अतः स्पन्दोदयपदान्युच्यन्ते येषु लक्ष्यते॥—

अतिक्रुद्धः प्रहृष्टो वा किं करोमीति वा मृशन्।
धावन् वा यत्पदं गच्छेत् तत्र स्पन्दः प्रतिष्ठितः॥ २२॥

द्विषोद्दीपितामर्षोऽतिक्रुद्धः सन् प्राग् यत्पदं गच्छेत् यं ह स्फारमालम्बते यामौन्मुख्यवृत्तिं स्पृशेत्। अथवा सुचिरागतप्रियदर्शनादिना प्रहृष्टः प्रहर्षितो यत्पदं गच्छेत् परानन्दरूपं गृह्णीयात्। तथा अनेककार्यकल्लोलाकुलतया किं करोमि? इदं करोमि, अथवेदं करोमीति मृशन् परामृशंश्चिन्ताविष्टो यत्पदं गच्छेन्निश्चयकारिणीं दशामाश्रयेत्, तथा कान्ताहृतचित्ततया सम्भ्रमाद्वा धावन् धावमानो वा यत्पदं गच्छेद्यामवस्थामारोहति, तत्र तस्मिन् पदे स्पन्दः प्रागुक्त आत्मस्वभावः प्रतिष्ठितः स्फुटोपलभ्यतया स्थितः। एतदुक्तं भवति—

यत्र यत्र यदा येन सर्वशक्तिलयो भवेत्।
स्फुटः स्यात् स्पन्दतत्त्वस्य तत्र तत्र तदोदयः॥ इति।

यतः—

क्रोधाद् दुःखभुवः सर्वा हर्षात् सुखभुवः स्मृताः।
किं करोमीति मोहोत्था धावन्तीन्द्रियवृत्तयः॥ इति।

उक्तं च विज्ञानभैरवे—

क्रोधाद्यन्ते भये शोके गह्वरे वारणे रणे।
कुतूहले क्षुधाद्यन्ते ब्रह्मसत्ता समीपगा॥ इति।

रहस्यस्तोत्रे च—

क्रोधहर्षविवशः परां दशामाश्रितोऽथ विमृशंश्च यः क्रियाम्।
यत्स्पृशत्यनियतक्रियास्पदं स्पन्दमात्मबलदं वदन्ति ते॥
एषोऽन्यत्र त्रुटेः पातः प्रोक्तः सर्वज्ञतादिभाक्। इति।

त्रुटिपाते सर्वज्ञत्व-सर्वकर्तृत्व-सर्वेशतादयः। एष च गुरूपदेशेनादरात् परीक्ष्यः॥ २२॥

अस्यैवोदयायोपायान्तरं विशेषकेणाह—

यामवस्थां समालम्ब्य यदयं मम वक्ष्यति।
तदवश्यं करिष्येऽहमिति सङ्कल्प्य तिष्ठति॥ २३॥
तामाश्रित्योर्ध्वमार्गेण सोमसूर्यावुभावपि।
सौषुम्णेऽध्वन्यस्तमितो हित्वा ब्रह्माण्डगोचरम्॥ २४॥

तदा तस्मिन् महाव्योम्नि प्रलीनशशिभास्करे ।
सौषुप्तपदवन्मूढः प्रबुद्धः स्यादनावृतः ॥ २५ ॥

अयमेष देवदत्तो ज्ञाता अद्भुतसद्वस्त्वभिधाय्यनुल्लङ्घ्याज्ञो यत्किञ्चिन्मम वक्ष्यति वदिष्यति तदवश्यमहं करिष्येऽनुष्ठास्यामि करिष्यामीति सङ्कल्प्य यामवस्थामौन्मुख्यरूपां वृत्तिं समालम्ब्य गृहीत्वा यस्तिष्ठति तस्य पुंसस्तामवस्थामाश्रित्योर्ध्वमार्गेण विषुवत्प्रवाहेण सोमसूर्यावुभावपि द्वावप्यपानप्राणौ मनःप्राणौ वा । सौषुम्णेऽध्वनि मध्यमनाड्यां परशक्तिमार्गे स्वयमस्तमितो लयं गच्छतः । किमस्य हृद्गतं स्यादिति कुतूहलात् । किं कृत्वा भवतः ? ब्रह्माण्डगोचरं हित्वा शरीरविषयं विहाय, देहाहंभावं त्यक्त्वेत्यर्थः । उक्तं च—

जाते देहप्रत्ययद्वीपभङ्गे प्राप्तैकत्वे निर्मले बोधसिन्धौ ।
अध्यावर्त्यैवेन्द्रियग्राममन्तर्विश्वात्मा त्वं नित्यमेकोऽवभासि ॥ इति ।

तदा तस्मिन् काले तस्मिन् महाव्योम्नि च परचिदाकाशे प्रत्यस्तमितशशिभास्करे प्रशान्तज्ञानक्रिये गूढोऽनभिव्यक्तस्वभावः स्वप्नादिनाऽमुह्यमानः प्रबुद्धोऽनिरुद्धः स्यात् सौषुप्तपदवत् । यथा सुषुप्तपदे तथा प्रबुद्धस्त्वनावृत एव भवेत् । उक्तं च रहस्यस्तोत्रे—

स्वात्मनि स्तिमितसोमभास्करं व्योममार्गमतिवर्त्य तस्थुषः ।
भावनाञ्जितदृशोऽपि खेचराः केचिदेव तव धामदर्शिनः ॥ इति ।

प्राणापानप्रशान्तिरेव चान्यत्र निरञ्जनतत्त्वोदये युक्तिः प्रोक्ता । मयाप्युक्तं भोगमोक्षप्रदीपिकायाम्—

कामाख्ये विषतत्त्वे निरञ्जनाह्वे क्रमाच्च सिद्धिः स्यात् ।
सूर्ये सोमे हृदयात्तयोः शमाच्चेति शास्त्रसर्वस्वम् ॥ इति ।

एवं स्पन्दतत्त्वस्योदयः प्रोक्तः । तदाऽस्मादेव च सहजो मन्त्रोदयः । उक्तं च बौद्धायनसंहितायाम्—

शान्ते चन्द्रे त्वमात्राख्ये यावन्नोच्चरते रविः ।
उदयः सर्वमन्त्राणां विलयश्च दिवौकसाम् ॥ इति ।

मालिनीविजयेऽपि—

यत्राधारविनिर्मुक्तो जीवो लयमवाप्स्यति ।
तत् स्थानं सर्वमन्त्राणामुत्पत्तिक्षेत्रमिष्यते ॥ इति ।

तथा—

धर्माधर्मान्तरे चित्तं निरुद्धं यत्तदा तु सः ।
यद्वक्ति स भवेन्मन्त्रः किं पुनर्मातृकोत्थितः ॥

इति ॥ २३–२४–२५ ॥

अत एव—

तदाक्रम्य बलं मन्त्राः सर्वज्ञबलशालिनः ।
प्रवर्तन्तेऽधिकाराय करणानीव देहिनः ॥ २६ ॥

तद्बलं निरावरणचिदुल्लासरूपं परशक्त्याख्यमाक्रम्याधिष्ठाय मन्त्राः बीज-पिण्ड-पद-नामरूपा मननत्राणधर्मिणः सहजनादशक्त्युद्बोधदीप्तत्वात् सर्वज्ञत्वादिना बलेन श्लाघायुक्ता मन्त्रिप्रयुक्ता अधिकारायानुग्रहादौ प्रवर्तन्ते । किमिव यथा शरीरिणः करचरणादीनि करणानि । अनेन मन्त्रिणः परत्वावबोधान्मन्त्रिष्विच्छामात्रेण यथेष्टविनियोज्यत्वमुक्तम् । तदुक्तं त्रिकसारे—

विदिते तु परे तत्त्वे वर्णातीते ह्यविग्रहे ।
किङ्करत्वं तु गच्छन्ति मन्त्रा मन्त्राधिपैः सह ॥ इति ।

अन्यथा तु प्रयत्नप्रयुक्ता अपि ये पूर्वोक्तसङ्कल्पत्वाद्यास्पदचिच्छक्तिबलास्पर्शात् केवलवर्णरूप-मात्रारूपत्वान्मन्त्रपुत्रिकाकरणनिष्फलचेष्टा भवन्ति । उक्तं च हंसपारमेश्वरे—

पशुभावे स्थिता मन्त्राः केवला वर्णरूपिणः ।
सौषुम्णेऽध्वन्युच्चरिताः पतित्वं प्राप्नुवन्ति ते ॥ इति ।

य उ एष शाक्तो मार्गोऽत्र च मन्त्राणां साफल्यम् । तदुक्तं तत्त्वरक्षाविधाने—

अशक्तत्वान्निष्क्रियत्वान्न पुंसि न परे पदे ।
शक्तौ नियोजयेन्मन्त्रं जपस्तु सफलो भवेत् ॥ इति ।

श्रीवैहायस्यां च—

विषुवत्कं जपं कुर्यान्नादोर्ध्वध्वनिबोधितम् ।
मन्त्राक्षराणि मणिवच्छक्तौ प्रोतानि भावयेत् ॥
तामेव च परे व्योम्नि परमामृतबृंहिताम् ।
दर्शयत्यात्मसद्भावमेवं मन्त्रो हुतिं विना ॥ इति ।

श्रीकालपरायाम्—

शब्दो नादात्मकस्तस्मात् प्रत्ययेनोपबृंहितः ।
मन्त्रबोधस्वरूपस्थमभिन्नो बोधयत्यपि ॥ इति ।

अन्यच्च सङ्कर्षणसूत्रेषु—

स्वात्मैकनिष्ठं चिद्रूपं भावाभावपरिष्कृतम् ।
स्वसंवेदनसंवेद्यं प्रकृत्यातीतगोचरम् ॥

इयं योनिः स्मृता विप्र मन्त्राणां प्रत्ययात्मिका ।
ते मन्त्रा वर्णरूपेण सबाह्याभ्यन्तरोदिताः ॥
नैष्कालिकपदावस्थाः करणानीव देहिनाम् ।
प्रयुक्ताः सर्वकालेषु सिद्ध्यन्ते वीर्ययोगतः ॥ इति ।

एवं शुद्धबोधात्मकत्वेनान्तर्बाह्योदयादेकोऽपि जपो लक्षसङ्ख्याकः । तदुक्तं जयायाम्—

एकस्य मन्त्रनाथस्याप्यन्तर्बाह्योदितस्य च ।
यदैक्यं तं जपं विद्धि लक्षसंख्याधिकं मुने ॥ इति ॥ २६ ॥

अनेन युक्त्या मन्त्रवीर्यमुक्तम्, प्राक्चोदयोऽधुनाक्रमयमाह—

तत्रैव सम्प्रलीयन्ते शान्तरूपा निरञ्जनाः ।
सह साधकचित्तेन तेनैते शिवधर्मिणः ॥ २७ ॥

तत्रैव स्वस्वभावे शक्तिमति । एते मन्त्राः साधकचित्तेन तत्प्रवृत्ति-निमित्तेन तदाधारभूतयेच्छया सह सम्यक् प्रलीयन्ते अस्तं गच्छन्ति । यतस्ते तदनुगा-स्तच्छक्तिरूपाश्च । उक्तं च कालपरायाम्—

पराक्षरतरोर्धातुर्नानाशक्तेर्विवर्तगाः ।
शक्तयो वर्णदेहेषु वक्त्राद्वर्णत्वमागताः ॥ इति ।

किंभूताः कृतकृत्यत्वाच्छान्तरूपाः । अत एव निरञ्जनाः महाकालुष्य-रहिताः । निरञ्जनतत्त्वानुप्राणनाद्वा । अनेनैव च हेतुना शिवधर्मिणः शिवस्येव धर्मा गुणा येषाम् । सर्वज्ञाः सर्वकर्तार इत्यर्थः ॥ २७ ॥

सह साधकचित्तेन लीयन्ते तत्र यत् स्मृतम् ।
शिवतात्मनि सर्वात्म्यात् चाद्वैतत्सोपपत्तिकम् ॥—

यस्मात् सर्वमयो जीवः सर्वभावसमुद्भवः ।
तत्संवेदनरूपेण तादात्म्यप्रतिपत्तितः ॥ २८ ॥
तेन शब्दार्थचिन्तासु न साऽवस्था न यः शिवः ।
भोक्तैव भोग्यभावेन सदा सर्वत्र संस्थितः ॥ २९ ॥

यस्माज्जीव आत्मैव सर्वमयः सर्वात्मको विश्वरूपः, बोद्धृरूपत्वात् । उक्तं च—

यदैव विदितं विश्वं तदानीमेव चिन्मयम् ।
यन्नास्ति भागो वेद्योऽसौ नाथ यो वेदकाद्बहिः ॥
वेद्यो वेदकतामाप्तो वेदकः संविदात्मताम् ।
संवित् त्वदात्मा चेत् सत्यं तदिदं त्वन्मयं जगत् ॥ इति ।

श्रुतिश्च—

"आत्मैवेदं जगत् सर्वं नेह नानास्ति किञ्चन" इति ।
( छा. उ. ३. ९. १२ )

अन्यच्च । सर्वभावसमुद्भव इति विशेषणं हेतुगर्भम् । हेतुर्वाऽयं समुद्भवादिति सर्वेषां भावानां समुद्भवो यस्मात् । परादिवाग्रूपतया संविदुपारोहेण हि तेषामुदयः सत्ता च । तदुक्तम्—

त्वत्कारणत्वं सर्वस्मिन्नपि ज्ञातं त्वदन्वयात् ।
संवित्समन्विते विश्वे नाऽसंवित् कारणं भवेत् ॥
संविदायतनं ज्ञातं तत् सदाख्यां प्रपद्यते ।
तावतैव न लभ्या स्यादनुपासितसंविदा ॥ इति ।

अन्यच्च—

त्वदात्मकत्वं भावानां विवदन्ते न केचन ।
यत्प्रकाश्यदशां याता नाऽप्रकाशः प्रकाशते ॥ इति ।

तथा—

सृजन् वदन् ज्ञापयंश्च त्रिधैकस्त्वं प्रकाशकः ।
व्यतिरिक्तः प्रकाशेभ्यो न यथाऽन्ये प्रकाशकाः ॥
न प्रकाशाः प्रकाशन्ते त्वत्प्रकाशोदयं विना । इति ।

पञ्चरात्रेऽपि—

"न तत्रादित्यो भाति" इत्यादि ।

यावत्—

"तस्य भासा सर्वमिदं विभाति" इति ।

सर्वमयत्वेऽस्य हेत्वन्तरमाह—तत्संवेदन इत्यादि। तदिति भावानां संवेद्यानां परामर्शः, तेषां संवेदनरूपेणानुभवद्वारेण यतस्तादात्म्यप्रतिपत्तिर्भावरूपतासम्प्राप्तिस्तदभेदसंवित्तिस्ततो हेतोः। उक्तं हि स्वात्मसप्ततौ—

यद्यद् वस्तु स्वभावेन ज्ञानेन विषयीकृतम्।
तद्वत्तादात्म्यमायाति जीवः सर्वमयो ह्यतः॥ इति।

अन्यत् संवित्प्रकरणे—

यथाऽग्निना समाविष्टं सर्वं तद्रूपमीक्ष्यते।
तथा ज्ञानसमाविष्टं सर्वं तद्रूपमीक्ष्यताम्॥ इति।

तथाऽऽगमरहस्ये—

आकारवर्ग उपरि प्रतिभासतेऽस्य
ज्ञानस्य सापि तव विश्वमयी विभूतिः।
विश्वात्मकस्त्वमिति नाऽऽगमसिद्धमेतत्
किन्तु स्वसंविदितरूपतयापि सिद्धम्॥ इति।

एवं संविदेव प्राणद्वारेण वाग्रूपतां धत्ते। तदुक्तम्—

स्थानेषु विवृते वायौ कृतवर्णपरिग्रहा।
वैखरी वाक् प्रयोक्तॄणां प्राणवृत्तिनिबन्धना॥
केवलं बुद्ध्युपादानात् क्रमरूपानुपातिनी।
प्राणवृत्तिमतिक्रम्य मध्यमा वाक् प्रवर्तते॥
अविभागात्तु पश्यन्ती सर्वतः संहृतक्रमा।
स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी॥ इति।

तथा—

स्वयं रौति य एषोऽन्तर्निर्विशेषनवात्मकः।
स परः परमः स्थायी नित्योदितनिजाकृतिः॥
चिदिच्छाशक्तिसम्बुद्धः स्पन्द आत्मबलेरितः।
सवितेव स तेजांसि विचिन्वन् हृदि राजते॥ इति।

प्रत्यभिज्ञायां च—

चितिः प्रत्यवमर्शात्मा परावाक् स्वरसोदिता।
स्वातन्त्र्यमेतन्मुख्यं तदैश्वर्यं परमात्मनः॥
सा स्फुरत्ता महासत्ता देशकालाविशेषिणी।
सैषाऽऽधारतया प्रोक्ता हृदयं परमेष्ठिनः॥ इति।

तस्यां चान्तःसंजल्परूपायां द्वावपि शब्दार्थौ समं स्फुरतः। अत एव तयोरभेद एव विख्यातः। उक्तं चेह—

"यतः शब्दानुवेधेन न विना प्रत्ययोद्भवः" इति।

वाक् च संविन्मूलेति प्रागेवोक्तम्—संविन्मूलादित्यादि। तथाजातीयैः श्लोकैरन्यच्चोक्तम्—

यथा तथा जगद्विद्धं सर्वमेव निजात्मना।
तथा तयाऽनुविद्धेयं सर्वतो भाति भारती॥ इति।

योगिनाथेन चोक्तम्—

तस्मात् सर्वस्य सिद्ध्यर्थं भारती कारणं परे।
परेष्ट्या तदा रूपान्वेषणेनार्थनिश्चयात्॥
तस्या औन्मुख्यवृत्त्यैव सद्भावपरिकल्पनात्।
नहि तामन्तरेणैषा लभेताऽऽत्मानमम्बिके॥
सा च तस्यामवस्थायां स्वरूपज्योतिरिष्यते।
निर्विभागक्रमापेक्षा योगिगम्यानुरूपिणी॥
तत औन्मुख्यतश्चिन्तामयी भवति वाक् शिवे।
विशिष्टशब्दविषयविवक्षास्फुरणात्मिका॥
ततः शब्दात्मकत्वेन विवृत्तार्थमयी भवेत्।
तदात्मतामन्तरेण यस्मान्नार्थावधारणम्॥ इति।

एवं संवित्स्वरूपस्य सर्वप्रकाशकस्य प्रभेव प्रकाशनशक्तिर्या वागन्तःसञ्जल्परूपा वर्ण-पद-वाक्याजीवभूता सैव पदार्थरूपतया बहिर्भवतीति स्वानुभवप्रसिद्धमेव प्रबुद्धानाम्। उक्तं च—

चिदात्मैव हि देवोऽन्तःस्थितमिच्छावशाद् बहिः।
योगीव निरुपादानमर्थजातं प्रकाशयेत्॥
स्वामिनश्चात्मसंस्थस्य भावजातस्य भासनम्।
अस्त्येव न विना तस्मादिच्छामर्शः प्रवर्तते॥ इति।

अन्यच्चोक्तम्—

यत्किञ्चिदाभाति बहिस्तदीश नूनं तवास्त्येव समस्तमन्तः।
निमीलिताक्षा हृदि लक्षयेयुस्तथैव सर्वं कथमन्यथा तत्॥ इति।

इत्थं स्वभाव एव यतः सर्वात्मस्थेन तथाविधेन सर्वात्मकेन स्वभावेन हेतुना शब्दार्थयोश्चिन्तासु मध्याविषये वा न सा काचिदवस्थास्ति या न शिवस्वभावमभिव्यञ्जयति, या न चित्स्वरूपेत्यर्थः। संवित्स्वीकरणैक्यात्। यतः सर्वस्यास्तित्वम्। तदुक्तम्—

येन येन विभिद्यन्ते हेतुना भावनिम्नगाः ।
तेन तेनैक्यमायान्ति बोधोदधिसमागताः ॥ इति ।

प्रागुक्तं च—

शरीरजो वा शाब्दो वा मानसो वा समुद्गतः ।
व्यवहारोऽप्यसौ नास्ति यत्र त्वं नाथ नाग्रगः ॥ इति ।

अतश्च भोक्तैवानुभवितैव भोग्यभावेनानुभाव्यतया सदा सर्वत्र संस्थितो न त्वन्यद्भोग्यमस्ति । तथा च श्रुतिः—

अहमन्नमहमन्नमहमन्नम् ।
अहमन्नादोऽहमन्नादोऽहमन्नादः ॥ इति ।
( तै. उ. ३ । ७० )

ग्रन्थकृता तत्त्वविचारेऽप्युक्तम्—

स्वस्वभावस्थिता भावाः संबध्यन्ते परस्परम् ।
भोग्यभोक्तृत्वभावेन न कदाचित् स्वभावतः ॥
द्रष्टाऽनुभविता स्मर्ता ग्राहको भोक्तृवेदकः ।
कर्तोपलब्धा संवेत्ता ज्ञातेति ज्ञानसंज्ञकाः ॥ इति ।

तेन ज्ञानमेव ज्ञेयरूपतया प्रथत इत्यर्थः । उक्तं च—

भोक्तुर्विभोर्ये भवतो विभिन्नः स दृश्यते मुग्धतया स्व आत्मा ।
ते भोग्यभूताः पशुवत् परेषां भोगाय भूयोऽत्र भवे भ्रमन्ति ॥
भवं भवद्वै भवभूतमेव विभावयन्तो भगवन् भवेयुः ।
भवद्वदेव प्रभुभावभाजो विश्वं वशे वर्तयितुं समर्थाः ॥ इति ।

ज्ञानसम्बोधेऽपि—

ज्ञाता ज्ञेयं ज्ञानमिति ज्ञानस्यैव त्रिधा स्थितिः ।
ब्रह्मार्पणं ब्रह्महविरित्यत्रोक्तं तदेव यत् ॥ इति ।

मयैव चोक्तं क्वाऽपि—

द्रष्टैवाऽस्ति न दृश्यमेतदबुधैरध्यात्मना ज्ञायते
आदर्शप्रतिबिम्बवज्जगदिदं भिन्नं द्विधा भाति यत् ।
सत्तां यान्ति घटादयो बहिरमी बोधानुवेधात् सदा
ज्ञानाद्वैतमतः स्वतोऽस्ति न पुनर्ज्ञेयस्य सत्ता क्वचित् ॥ इति ।

तथात्मसप्ततौ—

यदिदं दृश्यते किञ्चिद्दर्शनात्तन्न भिद्यते ।
दर्शनं द्रष्टृतो नान्यद् द्रष्टैव हि ततो जगत् ॥ इति ।

सङ्कर्षणसूत्रेष्वपि—

येनेदं दृश्यते विश्वं द्रष्टा सर्वस्य यः सदा।
दृश्यश्चराचरत्वे यः स विष्णुरिति गीयते॥ इति।

जाबालिसूत्रेष्वपि—

"द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धाऽपरिलुप्तचैतन्यस्वभावो जगदुत्पत्ति-स्थिति-लयैकहेतुर्भगवान् वासुदेव आत्मेति" इति।

पञ्चरात्रोपनिषदि च—

"ज्ञाता च ज्ञेयं च वक्ता च वाच्यं च भोक्ता च भोग्यं च" इत्यादि। तथाऽत्रैव—"सर्वान्तरं सर्वबाह्यं स्वयंज्योतिः स्वयंसम्बोध्यं स्वयम्भूरिति च" इति।

श्रुतिरपि—

"स एव ज्ञाता तज्ज्ञानमिति" इति।

एवमेष एव मन्त्रात्मा। तेषां चात एव शिवधर्मित्वं सिद्धमिति॥ २८-२९॥

अत्रैव प्रशंसाद्वारेण स्वीकरणोपायं प्राह—

इति वा यस्य संवित्तिः क्रीडात्वेनाखिलं जगत्।
स पश्यन् सततं युक्तो जीवन्मुक्तो न संशयः॥ ३०॥

वाशब्दः स्वार्थेऽत्र। किं बहुना, इत्येवं चोक्तप्रकाररूपा यस्य संवित्तिः संवेदनं ज्ञानम्। यथा मन्मयमेव सर्वम्। सोऽखिलं समग्रं जगत् क्रीडारामतया पश्यन् विभावयन्नित्ययुक्तत्वाच्च बन्धकारणस्याज्ञानस्य क्षयात् प्रबोधाप्तौ जीवन्नेवेश्वरवन्मुक्तो नाऽत्र संशयः।

उपपत्त्युपलब्धिभ्यां सिद्धत्वाद् भ्रान्तिरत्र नो। इति।

उक्तं च—

सम्यक् स्वबोधविश्रान्तौ योऽलुप्तानुभवः स्थितः।
विषयानपि सोऽश्नन् स्याज्जीवन्मुक्तस्तु तत्त्ववित्॥ इति।

ये त्वाहुः—विनोत्क्रान्तिं कुतो मोक्ष इति। तन्निरासाय आह—

विना स्वभावानुभवेन पुंसः कैवल्यमुत्क्रान्तिबलाद्यदि स्यात्।
अत्राऽपि पक्षे ननु मोक्ष भाक्त उद्बन्धनं यः कुरुते प्रमूढः॥ इति।

तथा—

विदेहा अपि बुद्ध्यन्ते प्रलये गुणवासिताः ।
शरीरिणोऽपि मुच्यन्ते विशुद्धज्ञानसंश्रयात् ॥ इति ।

ज्ञानगर्भेऽपि—

मयि स्थितमिदं जगत् सकलमेव सर्वत्र वा
स्थितोऽहमिति धारणाद्वितयभावनावेशतः ।
जगत्त्रितयनाथ तानतिचिरेण सम्प्राप्यते
नृभिस्तव सपर्यया दलितकिल्बिषोपप्लवैः ॥ इति ।

गीतास्वपि—

यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याऽहं न प्रणश्यामि स च मे न प्रणश्यति ॥ इति ।
( भ० गी० ६ । ३० )

पञ्चरात्रेऽपि—

प्रज्ञाप्रासादमारुह्य अशोच्यः शोचतो जनान् ।
भूमिष्ठानिव शैलस्थः सर्वान् प्राज्ञोऽनुपश्यति ॥ इति ।

अत्र च नित्योद्युक्तरूपत्वमेवोपायो युक्त्या ध्वनितः । प्राक् चोक्तं हि—"अतः सततमुद्युक्तः" इत्यादि ॥ ३० ॥

अथ प्रागुक्तस्य मन्त्रात्मनो युक्त्यन्तरोदयवर्णनद्वारेण निगमनं करोति—

**अयमेवोदयस्तस्य ध्येयस्य ध्यायिचेतसि ।**
**तदात्मतासमापत्तिमिच्छतः साधकस्य वा ॥ ३१ ॥**

अयमेव तस्य पूर्वोक्तस्य ध्येयस्य मन्त्रात्मनो ध्यायिचेतस्युदयः । समापत्तिमेकीभावं मन्त्रात्मतापत्तिमिच्छतो गृह्णतः साधकस्य ध्यायिनो वा तदात्मतया ध्येयस्वरूपापत्तिरित्यर्थः । उक्तं हि विश्वसंहितायाम्—

ध्येये चित्तं यदा लीनं तदा ध्यानमुदाहृतम् ।
ध्येयः प्रत्यक्षतां याति ध्याता तन्मयतां व्रजेत् ॥
ऋच्छतस्त्विवति पाठाद्वा ध्येयं चिन्तयतोऽत्र या ।
तदात्मतासमापत्तिरैक्यं तस्योदयः स तु ॥

ग्रन्थकृतस्तु द्वयमप्याशयः सहते । यतो मन्त्रोच्चारणेच्छया मन्त्रदेवतया सह यत्तादात्म्यं योऽन्तःसंवेदनद्वारेण तदात्मग्रहो मन्त्रन्यासात्मकः स एवास्योदय आविर्भाव इति ॥ ३१ ॥

अस्यैव व्याप्तिफलमाह—

इयमेवाऽमृतप्राप्तिरयमेवाऽऽत्मनो ग्रहः ।
इयं निर्वाणदीक्षा च शिवसद्भावदायिनी ॥ ३२ ॥

उक्तं च—

येयं स्वरूपसंवित्तिः साऽमृताप्तिरिहात्मनः ।
जरामरणविच्छेदादपुनर्भवता न तु ॥
दुग्धाब्ध्युद्गतस्यायमेव चात्मनोऽनुग्रहः स्वतः ।
निर्वाणदीक्षा तच्चेयं परमात्मनियोजिका ॥ इति ।

उक्तं च मोक्षधर्मेषु—

हित्वा तु सर्वसङ्कल्पान् सत्त्वे चित्तं निवेशयेत् ।
सत्त्वे चित्तं यदा लीनं ततः कालञ्जयो भवेत् ॥ इति ।

आत्मसम्बोधे च—

भवेद्भवानामभवाय नूनं स्वभावसंविद्धिदितैव पुंसाम् ।
अमर्त्यतां मर्त्यजने करोति सकृत्सुधाप्राशनमात्रमेव ॥ इति ।

दीक्षार्थोऽयम्—

ददाति ज्ञानसद्भावं क्षपयत्यखिलं मलम् ।
बोधानुवेधाद्दीक्षोक्ता दानक्षपणधर्मिणी ॥

इति ॥ ३२ ॥

स्पन्दतत्त्वोदयं प्रोच्याकृत्रिमं तत एव च ।
मन्त्रोदयं च तद्वीर्यं तद्विभूतीरथाऽऽह तु ॥—

यथोक्तस्य जाग्रत्येव निजभावाप्त्या स्वातन्त्र्यं तथा स्वप्नेऽप्यस्तीति वक्तुमाह—

यथेच्छाभ्यर्थितो धाता जाग्रत्यर्थान् हृदि स्थितान् ।
सोमसूर्योदयं कृत्वा सम्पादयति देहिनः ॥ ३३ ॥
तथा स्वप्नेऽप्यभीष्टार्थात् प्रणयस्यानतिक्रमात् ।
नित्यं स्फुटतरं मध्ये स्थितवद् यं प्रकाशयेत् ॥ ३४ ॥

यथा जाग्रति जाग्रदवस्थायां धाता स्रष्टाऽऽत्मस्वभाव इच्छया दिदृक्षात्मिकयाऽभ्यर्थितो याचितः सन् देहिनः पुंसो हृदि स्थितानभिमतानर्थात् पदार्थान् सम्पादयति प्रकाशयति । स्वबलावष्टम्भात् । किं कृत्वा ? सोमसूर्ययोरपानप्राणयोश्चक्षुषोश्चोदयं

कृत्वा चक्षुरादिष्ववधानेनेत्यर्थः। एतदुक्तं भवति—अनेकार्थसन्निधानेऽपि गणिका-नटमल्लप्रेक्षकादिषु मध्याद्यदेव वस्त्वभिमतं तदेव यथा पश्यति। स्वरूपानुप्रवेशात्। तथा स्वप्नेऽप्यभीष्टानेवार्थान् मध्ये हृदि स्वस्वभावे स्थितः सन् स्फुटतरं कृत्वा नित्यं सदैव प्रकाशयेद्दर्शयति। कुतः? प्रणयस्येच्छाभ्यर्थनाया अनतिक्रमात् अत्यागात्।

"मुक्त्वा दृढामभीष्टेच्छां नाऽन्यवृत्तिर्यदा भवेत्" इति।

एतदुक्तम्—यदीच्छा तदनुगैव भवेन्न स्वातन्त्र्येण प्रभवति तदैतत्स्यात्। तां चासौ नाप्यतिक्रामति। उक्तं च रहस्यस्तोत्रे—

विस्मृतार्थमभियुज्यधीर्यथा त्वामशेषविदमाशु शंसति।
यद्यदित्थमनयाऽर्थ्यते रसात् स्वप्नगोऽपि न विलङ्घयिष्यति॥ इति।

सिद्धोक्तं च—

"चिद्व्योम्निस्थोऽनुसन्धत्ते यत्तत्पश्यत्यखण्डितम्" इति।

ज्योतिःशास्त्रेऽपि—

येन येनेन्द्रियार्थेन विद्धः स्वपिति मानवः।
तस्य तस्येन्द्रियार्थस्य सुप्तः कर्माणि पश्यति॥

इति॥ ३३-३४॥

एवं स्वप्नस्वातन्त्र्यवर्णनद्वारेण युक्त्या सौषुप्ततमोवरणनिर्भेद उक्तः। अथ स्वरूपस्थस्यैव जाग्रत्स्वप्नादौ स्वातन्त्र्यं न त्वन्यथेत्यभिधातुमाह—

**अन्यथा तु स्वतन्त्रा स्यात् सृष्टिस्तद्धर्मकत्वतः।**
**सततं लौकिकस्येव जाग्रत्स्वप्नपदद्वये॥ ३५॥**

अन्यथा पुनः स्वरूपस्थित्यभावे चित्तस्य चञ्चलत्वात् स्वप्नादौ सृष्टि-रिच्छारूपा स्वतन्त्रा स्यात्। स्वप्नादिप्रसरोऽसमञ्जसरूपो भवेदित्यर्थः। कुतः? तद्ध-र्मकत्वात् सृष्टिस्वभावत्वात्। यतस्तत्तत्त्वमिच्छाख्यप्रसवधर्मि नित्यम्। कस्येव? यथा लौकिकस्याप्रबुद्धमतेर्जाग्रत्स्वप्नपदद्वये सततं सर्वकालं सृष्टिरिच्छैव स्वतन्त्रा। न त्वसौ ह्यप्रबुद्धतया। साऽस्य सहस्रशः सम्बद्धाऽसम्बद्धविकल्परूपैव भवेदवस्था-द्वितयेऽपीति यावत्॥ ३५॥

एवमात्मनो विभूतिषु स्वातन्त्र्याख्यां युक्तिमुक्त्वा अथेदानीं ज्ञत्वकार्यसाम-र्थ्याख्या या तां कथयति। तत्र सूक्ष्मव्यवहितादौ ज्ञत्वोपायं तावत्कारिकाद्वयेन प्राह—

**यथा ह्यर्थोऽस्फुटो दृष्टः सावधानेऽपि चेतसि।**
**भूयः स्फुटतरो भाति स्वबलोद्योगभावितः॥ ३६॥**

तथा यत् परमार्थेन येन यत्र यदा स्थितम् ।
तत्तथा बलमाक्रम्य नचिरात् सम्प्रवर्तते ॥ ३७ ॥

यथा दूरस्थितः कश्चिदर्थः पदार्थो घटपटादिवस्तुविशेषोऽस्फुटः संदिग्धो दृष्टः सावधानेऽप्यन्यव्यावृत्तेऽप्येकाग्रेऽपि चेतसि सति हि यस्मात् स एवार्थो भूयः पुनः स्वबलोद्योगेनात्मबलप्रयत्नविशेषेण भावितो विचारितः स स्फुटतरो भाति निःसन्दिग्धः प्रकाशतेऽवभासते ।

तस्मात्तथा यद्वस्तु येन रूपेण यत्र यस्मिन् देशे यदा यस्मिन् काले स्थितं तद्वस्तु तथा तेनैव प्रकारेण प्रयत्नविशेषेण स्वबलं स्वस्वरूपं विकस्वरमाक्रम्याऽऽश्रित्याऽवष्टभ्य अभ्यासान्नचिरात् त्वरितं सम्प्रवर्तते सम्यक् प्रतिभाति निरावरणस्वरूपत्वात् । प्रागुक्तं हि—

अपि त्वात्मबलस्पर्शात् पुरुषस्तत्समो भवेत् । इति ।

तत्त्वयुक्तौ च—

विषयाधिपतिर्यो हि येन जानाति पार्वति ।
तस्य यो वेत्ति तत्त्वेन तेन ज्ञातं चराचरम् ॥ इति ।

तेनाऽतीताऽनागतज्ञानं परिमितविषयं न किञ्चिदाश्चर्यम् ॥ ३६-३७ ॥
एवं ज्ञत्वमुक्त्वाऽधुना कार्यकर्तृत्वसामर्थ्ये क्षुज्जयाय चोपायान्तरमाह—

दुर्बलोऽपि तदाक्रम्य यतः कार्ये प्रवर्तते ।
आच्छादयेद् बुभुक्षां च तथा योऽतिबुभुक्षितः ॥ ३८ ॥

दुर्बलः क्षीणधातुः अशक्तः कृशोऽपि तद्बलमुत्साहलक्षणमुद्योगरूपमाक्रम्याऽधिष्ठाय स्वीकृत्य यतः कार्ये प्रवर्तते यस्माद् व्यापारं सम्पादयति । अतिकृशस्याप्युद्योगबलावलम्बनात् समरादौ शक्तिदर्शनात् । एतदुक्तं भवति—यथा कश्चिद्समर्थोऽपि व्यायामाभ्यासान्महतीं शक्तिं प्राप्नोति उद्योगबलेन, तथा योऽतिबुभुक्षितः क्षुधार्तः सोऽपि तेनैव स्वस्वभावानुशीलनेन बुभुक्षां भोक्तुमिच्छामप्याच्छादयेत् क्षुधं शमयति । प्रोक्तं च पतञ्जलिना—

"कण्ठकूपे क्षुत्पिपासानिवृत्तिः" इति । तथा—
"बलेषु हस्तिबलादीनि" ।

बुभुक्षाशब्दोऽत्रोपलक्षणार्थम् । तेन क्षुत्तृषौ शोकमोहौ जरामृत्यू चेति षडूर्मयोऽपि नश्यन्तीत्यर्थः ॥ ३८ ॥

एवं न केवलमस्मिन्नेव शरीरे तस्य सर्वज्ञतादयः सन्ति, यावत्सर्वत्रापीत्युपायद्वारेणाऽऽह—

अनेनाधिष्ठिते देहे यथा सर्वज्ञतादयः ।
तथा स्वात्मन्यधिष्ठानात् सर्वत्रैवं भविष्यति ॥ ३९ ॥

अनेन प्रागुक्तेनात्मस्वभावेनाऽस्मिन् देहेऽधिष्ठिते प्राप्तेऽन्वीक्षिते सति यथा सर्वज्ञतादयो गुणा विद्यन्ते । यस्मादत्र स्वल्पयूकादिभक्षणादपि क्षिप्रमेव जानाति । उक्तं च ज्ञानसम्बोधे—

सर्वः स एव व्यापित्वाद् ज्ञः स एव स्वभावतः ।
सर्वज्ञश्चेति सर्वज्ञः पुमानेव निरुद्धयते ॥ इति ।

अन्यच्च—

सर्वज्ञः सर्वदैव त्वं सर्वस्य हृदये न चेत् ।
केनाऽन्यथाऽस्य सम्भाव्या नष्टार्थविषया स्मृतिः ॥
तदहर्जातबालैश्च स्तनपानं क्व शिक्षितम् ? ।
प्राणिभिर्वाप्सु तरणमेतत् सर्वज्ञचेष्टितम् ॥ इति ।

अन्यच्च—

भक्ष्यं स्यात्किमभक्ष्यं वा स्वाद्वस्वाद्विति निश्चये ।
मक्षिकाणां कुतः संवित् क्षौद्रसंचितिकर्मणि ॥
सर्वज्ञस्याप्यधिष्ठातुस्तद्विजृम्भितमन्यथा ।
कृमिमात्राल्पकायानां सम्भृतिर्विस्मयास्पदम् ॥
कतकस्य फलं वारिप्रसाधनविधित्सया ।
द्विपः क्षिपति तस्यैषा प्रज्ञा ह्यज्ञस्य किं पशोः ॥
गीताकर्णनवैदग्ध्यं मुग्धबुद्धेर्मृगस्य किम् ।
सम्भाव्यते हि येनाऽस्य रोमन्थविरता स्थितिः ॥
भक्षयिष्यति मामित्थमाखोर्विवरवर्तिनः ।
मार्जारं प्रति का शङ्का सर्वज्ञज्ञापनं विना ॥
भयात् कूर्मः स वार्यन्तः सर्वाण्यङ्गानि गूहते ।
दुर्भेदबुद्धिस्तत्रास्य विवेकविकलस्य किम् ॥
वीक्ष्यान्यक्षीणपक्षाणां वैलक्षण्यमचेतनः ।
नृत्तमारभते बर्ही स्फुरितं तज्जगद्गुरोः ।
अगाधजलमध्यस्थमत्स्यभक्षणलक्षणम् ।
केनोपदिष्टं तन्मद्गोरनुमानं विना कृतम् ॥
अशक्यशक्तिः कस्येयं सलिलात् पिबतः पयः ।
हंसस्य न पुनस्तस्य हृदयान्तरवर्तिनः ॥
कृकवाकोर्गिरः कस्मात् क्षेत्रज्ञव्यापिनं विना ।

यासामाकलनोद्युक्ता कालवित्कलना ततः।
प्रवर्तते दिनारम्भे निर्भ्रान्तकृतसंविधिः॥
शृङ्गदन्तनखादीनि प्राणिनामायुधानि यत्।
परप्रहरणोद्रेके केनाऽऽख्यातान्यसंविदाम्॥
बलं तेजः करी सिंहो जानाति निजमूर्जितम्।
को हेतुर्यावदन्तस्थप्रतिपत्तिर्न सस्फुरा॥
अतिवृष्टेरनावृष्टेर्व्यञ्जकं चिह्नमिङ्गितैः।
सूचयन्ति न तच्चित्रं पशवः पक्षिणोऽपि यत्॥
कृतान्तकल्पैः सिंहाद्यैः प्रीतिः प्राणभृतां कुतः।
विनैकस्य हृदिस्थस्य संवित्संवादसुस्थितम्॥ इति।

तेषां च प्रागुक्तयुक्त्या विशेषाभिव्यक्तिः। तथा स्वात्मन्यधिष्ठानात् स्वरूपाच्यवनात्। एवं सर्वत्र सर्वज्ञसर्वतादयो भविष्यन्ति अभिव्यक्तिं यान्तीत्यर्थः। उक्तं च--

एको भावः सर्वभावस्वभावः सर्वे भावा ह्येकभावस्वभावाः।
एको भावस्तत्त्वतो येन दृष्टः सर्वे भावास्तत्त्वतस्तेन दृष्टाः॥
रहस्ययुक्तिरत्रेयं शरीरे यत्र यत्र च।
संविदो दार्ढ्यलाभः स्यात्तत्र तत्र गुणोदयः॥ इति॥ ३९॥

अथैषां गुणानामाच्छादकं मूलविच्छेदार्थमाह—

**ग्लानिर्विलुण्ठिका देहे तस्याश्चाऽज्ञानतः सृतिः।**
**तदुन्मेषविलुप्तं चेत् कुतः सा स्यादहेतुका॥ ४०॥**

ग्लानिर्हर्षक्षतिः अनुत्साहरूपा देहे किल विलुम्पिका विनाशिनी। तस्याश्च ग्लानेरज्ञानतः सृतिः सरणमुत्पत्तिः। तच्चाऽज्ञानमुन्मेषेण वक्ष्यमाणलक्षणेनाऽऽत्मस्वभावेन यदा विलुप्तं निर्णोदितं नाशितं तदा कुतः सा ग्लानिरेव का स्यात्कारणरहिता भवेदित्यर्थः। अत एव च योगिनां जरारोगाद्यभावः शरीरदार्ढ्यं च भवेत्॥ ४०॥

अथोन्मेषस्य स्वरूपमाह—

**एकचिन्ताप्रसक्तस्य यतः स्यादपरोदयः।**
**उन्मेषः स तु विज्ञेयः स्वयं तमुपलक्षयेत्॥ ४१॥**

एकस्यां चिन्तायां प्रसक्तस्यैकत्र विषये क्वचिद् व्यापृतचित्तस्य सतो यतो यस्मात् स्वस्वभावादपरस्याश्चिन्ताया उदयोऽभिव्यक्तिर्भवेत्। झटिति यतोऽन्या चिन्तोत्पद्यते विस्मृतस्मरणादिका स चिन्तायाः कारणमुन्मेषो विज्ञेयः। तं च

पुनरुन्मेषं स्वयमात्मनोपलक्षयेद्विजानीयात्। चिन्ताद्वयमध्ये व्यापकत्वेनाऽनुभूयमानतया स्वसंवेद्यत्वाद् वृद्धकुमारीसुखवदनुपदेश्य इत्यर्थः ॥ ४१ ॥

अस्य चानुशील्यमानस्य प्रत्ययानाह—

अतो बिन्दुरतो नादो रूपमस्मादतो रसः।
प्रवर्ततेऽचिरेणैव क्षोभकत्वेन देहिनः ॥ ४२ ॥

अतोऽस्मादुन्मेषादनुशील्यमानादचिरेणैव कालेन देहिनः पुंसि बिन्द्वादयः प्रवर्तन्ते उत्पद्यन्ते। बिन्दुस्तेजोरूपो भ्रूमध्यादौ। नादोऽकृत्रिमोऽनाहतात्मकः शब्दब्रह्माख्यो दूराच्छ्रवणं च। रूपमन्धकारे दर्शनं देवतानां च सूक्ष्मादिप्रदर्शनं च। रसो मुखेऽमृताऽऽस्वादः षड्रसानां च। कथमेते प्रवर्तन्ते उत्पद्यन्ते? क्षोभकत्वेन उत्कृष्टसिद्धिविघ्नकारित्वेन। तथा च पतञ्जलिः—

"ततः प्रातिभश्रावणवेदनाऽदर्शनाऽऽस्वादवार्ता जायन्ते। ते समाधावुपसर्गा व्युत्थाने सिद्धयः" इति।

अन्यच्च अनेन युक्त्या सृष्ट्यादिक्रमो ध्वनितः। यतः प्रागुन्मेषात् सृष्टिरुक्ता। सा च कथम्? अतोऽस्मदादौ बिन्दुरिच्छादृक्शक्तिप्रसररूपः। ततो नादः शब्दात्मको वागाख्यः क्रियाशक्तिरूपः। ततो रूपं पदार्थदर्शनविचारस्वरूपम्। ततस्तत्रैव रसोऽभिलाष उपभोगरूपश्चेति। एष एवातिरहस्यक्रमार्थविदामुद्योगावभासचर्वणविलापनरूपः क्रमचतुष्कोऽक्रमोऽत्रैव युक्त्यैवोक्तः—

"न बाधते विशेषो हि प्रकृतं परिभाषया" इति।

तद्यदुक्तं स्वयं तमुपलक्षयेदिति ॥ ४२ ॥

तत्कथमित्यत्रोपायमाह—

दिदृक्षयेव सर्वार्थान् यदा व्याप्यावतिष्ठते।
तदा किं बहुनोक्तेन स्वयमेवावभोत्स्यते ॥ ४३ ॥

द्रष्टुमिच्छा दिदृक्षा तया तदवस्थास्थ इव सर्वार्थान् सर्वभावान् व्याप्याधिष्ठाय यदाऽवतिष्ठते वर्तते तदा किं बहुनोक्तेनाधिककथनेन? स्वयमेवात्मनैव तत्तत्स्वभावमवभोत्स्यतेऽवगम्यते ज्ञास्यतीत्यर्थः। अयमत्रोपदेशाशयः—यथा कुतूहलदिदृक्षुर्विकासवृत्त्यास्ते, एवं यः सर्वभावौन्मुख्यरूपोद्यन्त्रितः स्वरूपे तिष्ठति स स्वभावं सर्वज्ञतादिगुणास्पदं स्वयमाप्नोति। यतः प्रागुक्तम्—"अतः सततमुद्युक्तः" इत्यादि। या चैषा स्थितिः सैव तत्त्वार्थचिन्तामणौ रहस्यमुद्रेत्युक्ता। मयोक्तं भोगमोक्षप्रदीपिकायाम्—

उद्यन्तृताबलेन तु विकासवृत्त्या स्वरूपगस्तिष्ठेत् ।
स्वयमुपसृतेन्द्रियार्थानश्नन्नानन्दभूमिगो योगी ॥
एषोच्छृङ्खलरूपा विकस्वरतरा प्रबुद्धबुद्धीनाम् ।
सिद्धाः स्थिता सदाऽस्यां ह्यानन्दरताः परा च मुद्रैषा ॥ इति ।

अन्यत्रोक्तं च—

सर्वाः शक्तीश्चेतसा दर्शनाद्याः स्वे स्वे वेद्ये यौगपद्येन विष्वक् ।
क्षिप्त्वा मध्ये हाटकस्तम्भभूतस्तिष्ठन्विश्वाधार एकोऽवभासि ॥ इति ।

तथा—

स्वच्छन्दं वा यत्र तत्र व्रजन्तीर्वैशक्तीश्चञ्चला या दृगाद्याः ।
शक्तीः पश्यन् केवलं नानुगच्छेद्विश्वं विभ्रद्भासि तस्य त्वमन्यः ॥

इति ॥ ४३ ॥

अस्यामेव स्थितौ युक्तिमाह—

प्रबुद्धः सर्वदा तिष्ठेज्ज्ञानेनालोक्य गोचरम् ।
एकत्राऽऽरोपयेत् सर्वं ततोऽन्येन न पीड्यते ॥ ४४ ॥

प्रबुद्धोऽसंकुचितशक्तिर्निर्विकल्प उद्योक्तृरूपतया सर्वकालं तिष्ठेद् वर्तेत । ज्ञानगोचरं विषयमालोक्य परिच्छिद्य संविदीप्त्या ज्ञेयं विलाप्याऽविभागं नीत्वेत्यर्थः । मयैव चोक्तं भोगमोक्षप्रदीपिकायाम्—

अथवा विभागबोधज्वलनेन विलाप्य वेद्यपीयूषम् ।
पीत्वा तृप्तो विचरन्नीरोगो योऽचिरात् सदैकाकी ॥
एतत्क्रमार्थसारं परधाराभूमिका च शक्तीनाम् ।
तदनुज्ञयाऽत्र कथितं सच्छिष्यविबोधनाय यथा ॥ इति ।

यतः सा निर्विभागा । उक्तं हि—

देशकालक्रियाकाराः प्रसिद्धा भागहेतवः ।
तेन सन्ति पुनर्यस्य विभागस्तस्य किंकृतः ॥ इति ।

अन्यच्च—

मनः सविषयं दाह्यं ज्ञानाग्निर्दर्शनैर्दहेत् ।
अन्तर्बहिर्मुखश्चैवं समाधिरुपपद्यते ॥ इति ।

तथा—

विज्ञानवाडवो दीप्तः स्वशक्त्या ज्ञेयतोयधीन् ।
अजस्रं ग्रसते नान्यस्तद्ग्रासे शक्तिमान् भवेत् ॥
नाऽप्राप्त्या पयसां तृष्णा प्राप्त्या वा भूयसामपि ।
यस्यास्ति कृतकृत्यत्वं कोऽप्यसौ वडवामुखम् ॥ इति ।

प्राक्चैतत्सोपपत्तिकं वितत्योक्तम् । यस्मात् सर्वमयो जीव इत्यादि । एवमेकत्र तत्त्वस्वभावे विद्यात्मके ज्ञानरूपे सर्वमारोपयेदैक्यं नयेत् । अत एव ततोऽन्येन वक्ष्यमाणेन कलासमूहेन शक्त्यात्मकेन विकल्परूपेण न पीड्यते बाध्यते न स्वरूपात् प्रच्याव्यत इत्यर्थः । उक्तं च—

एकं व्याप्ति व्योमकुड्यादियोगात्तस्मिन् बाह्याऽभ्यन्तरत्वं समाधिः ।
पश्यत्येकं ग्राहकग्राह्यरूपं व्याक्षिप्ताक्षेप्यतस्त्वत्समाधिः ॥
इति ॥ ४४ ॥

एवं यः प्रबुद्धः पतिः सोऽन्येन न पीड्यते । अर्थाद्योऽप्रबुद्धः पशुः स हन्यते । स च कथं किंलक्षणश्चेत्युच्यते—

**शब्दराशिसमुत्थस्य शक्तिवर्गस्य भोग्यताम् ।**
**कलाविलुप्तविभवो गतः सन् स पशुः स्मृतः ॥ ४५ ॥**

शब्दानां राशिः शब्दराशिः वर्णसमूहो मातृका अकारादिक्षकारान्ता शब्दजननी । वर्णात्मकत्वाच्छक्तीनाम् । तत्समुत्थस्य कादिवर्गात्मकस्य । ब्राह्म्यादिशक्तिचक्रस्य कलाभिः ककाराद्यक्षरैर्विलुप्तविभवो हृतमहाव्याप्तिः स्वभावात् प्रच्यावितोऽत एवास्य भोग्यतां गतः सन् पुरुषः पशुरुच्यते, अज्ञत्वात् । उक्तं च ईश्वरप्रत्यभिज्ञायाम्—

स्वाङ्गरूपेषु भावेषु प्रमाता कथ्यते पतिः ।
मायातो भेदिषु क्लेशं कर्मादिकलुषः पशुः ॥ इति ।

क्वापि च—

भेदग्रन्थिविभेदे हि कर्मात्मैक्यं प्रपद्यते ।
सोऽविज्ञातः पशुः प्रोक्तो विज्ञातः पतिरेव सः ॥
इति ॥ ४५ ॥

अतश्च—

**परामृतरसापायस्तस्य यः प्रत्ययोद्भवः ।**
**तेनाऽस्वतन्त्रतामेति स च तन्मात्रगोचरः ॥ ४६ ॥**

तस्य च पशोर्यः प्रत्ययोद्भवः श्रोत्रादिद्वारेण विषयदर्शनेन स्मरणादिज्ञानोत्पत्तिः स एव परामृतरसात् स्वरूपोदयादपायः प्रच्युतिः। यतस्तेन स पुमानस्वतन्त्रतां पारतन्त्र्यमसर्वगतत्वाद्यमेति प्राप्नोति। स च प्रत्ययोद्भवस्तन्मात्रगोचरः शब्दादिविषयविषयस्तदभिलाषात्मक इत्यर्थः ॥ ४६ ॥

अत एव च—

स्वरूपावरणे चास्य शक्तयः सततोद्यताः।
यतः शब्दानुवेधेन न विना प्रत्ययोद्भवः ॥ ४७ ॥

अस्य च पुंसः स्वरूपावरणे स्वभावाच्छादने शक्तयः पूर्वोक्ता ब्राह्मयाद्या शब्दरूपाः क्रियाशक्तिद्वारेण सततमुद्यताः सदा सन्निहिताः पुंरूपग्लपनाय। यतः शब्दानुवेधेन वर्णानुगमेन विना न प्रत्ययोद्भवो ज्ञानसंवेदनमस्ति। शब्दायत्तत्वात्पदार्थस्य वाच्यवाचकयोरन्योन्यद्योतकत्वाच्च। तथा चोक्तं वाक्यपदीये—

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव, ज्ञानं सर्वं शब्देन दृश्यते ॥ इति।

प्राक्चोक्तं हि—

"वागेवास्याः कारणं विश्ववृत्तेः" इत्यादि।

अन्यच्च—

वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी ॥ इति ॥ ४७ ॥

अथास्या एव क्रियाशक्तेर्बन्धमोक्षहेतुतामाह—

सेयं क्रियात्मिका शक्तिः शिवस्य पशुवर्तिनी।
बन्धयित्री स्वमार्गस्था ज्ञाता सिद्ध्युपपादिका ॥ ४८ ॥

यैषा अज्ञानां बन्धयित्री बन्धजननी भवेत्। अक्रियात्मिका क्रियास्वभावाऽशक्ता सैवेयं शिवस्य सुप्रबुद्धस्य पशुवर्तिनी पशुवद्यथेष्टविनियोज्यतया या वर्तते सा तथोक्ता। सा च स्वमार्गस्था मदीयेति ज्ञाता सिद्ध्युपपादिका परापरसिद्धिप्रदा भोगमोक्षावहेत्यर्थः। अर्थाच्च भिन्ना ज्ञाता बन्धदा भवति। अथवेयं व्याख्या—सेयमित्याद्यन्यस्तुल्यार्थः। स्वमार्गस्था स्वतन्त्रा अज्ञाता बन्धयित्री। ज्ञाता तु सिद्ध्युपपादिकेति। उक्तं चैतत्प्राक्—"प्राणिनां पतनं येन" इत्यादिना ॥ ४८ ॥

कथं त्वेषा बन्धहेतुतामापद्यते तत्स्फुटीकर्तुमाह—

तन्मात्रोदयरूपेण मनोऽहम्बुद्धिवर्तिना।
पुर्यष्टकेन संरुद्धस्तदुत्थप्रत्ययोद्भवम् ॥ ४९ ॥

भुङ्क्ते परवशो भोगं तद्भावात् संसरेदतः ।
संसृतिप्रलयस्याऽस्य कारणं संप्रचक्ष्महे ॥ ५० ॥

पुर्यष्टकस्य किल द्वे रूपे स्तः—एकं सूक्ष्ममातिवाहिकाख्यं तन्मात्रमभिलापात्मकम्, द्वितीयं स्थूलं भौतिकं भोगाख्यम्। तत्र सूक्ष्मेण पुर्यष्टके संरुद्धो बद्ध आवृतः, अत एव परवशः सन् तदुत्थप्रत्ययोद्भवं सुखदुःखसंवेदनरूपं भोगं भुङ्क्ते अश्नाति। कीदृशम्? तन्मात्राणां शब्दादीनामनुभवद्वारेण य उदयोऽभिव्यक्तिः स एव रूपं यस्य तेन, तथा मनोहङ्कारबुद्धिवर्तिना चान्तःकरणसंयुक्तेन। तस्य च पुर्यष्टकस्य भावात्तद्वशाच्छरीरी संसरेत् संसारं याति। अत एवास्य संसृतिप्रलयस्य जननमरणप्रवाहस्यैतदेव कारणं हेतुं संप्रचक्ष्महे कथयामः ॥ ४९-५० ॥

एवं बन्धनिमित्तमुपवर्ण्यास्योच्छेदोपायमाह—

यदा त्वेकत्र संरूढस्तदा तस्य लयोद्भवौ ।
नियच्छन् भोक्तृतामेति ततश्चक्रेश्वरो भवेत् ॥ ५१ ॥

एवम्—

"बन्धमोक्षविचारेण प्रबोधाख्या यदा पुनः" इति।

पुर्यष्टकद्वयमध्यादेकत्रैकस्मिन् पुर्यष्टके स्थूले सूक्ष्मे वा पतित्वेन संरूढो लीनचित्तस्तदा तस्य तदुत्थप्रत्ययोद्भवस्य शब्दार्थौ लयोद्भवौ प्रध्वंसप्रादुर्भावौ नियच्छन् स्वेच्छया कुर्वन् भोक्तृतामेति। प्रभुत्वं प्राप्नोति। भोग्यरूपात् पशुत्वान्मुच्यते इत्यर्थः। तदुक्तम्—

पशूनां तु पतिर्भूत्वा पशूनां तु पतिर्भवेत्।
पशुत्वान्मुच्यते सद्यो भूत्वा पशुपतेः पतिः ॥ इति।

स्वबोधोदयमञ्जर्यां च—

यद्यन्मनोहरं किञ्चिदक्षिगोचरमागतम्।
एकाग्रं भावयेत्तावद्यावल्लीनं निरोधकृत् ॥ इति।

एवं सति स्वातन्त्र्याप्तेस्ततश्चक्रेश्वरः शक्तिचक्रस्वामी सर्वज्ञतादियुतः सर्वाधिपतिर्भवेदित्यर्थः ॥ ५१ ॥

एवमस्याद्यश्लोके शक्तिचक्रैश्वर्ये यदुक्तं तदिहापि—

अथेत्थं ग्रन्थनिष्पत्तेर्ग्रन्थकर्ता गुरोर्गिरम्।
प्रहर्षवशतः स्तौति नीतिं शिष्यांश्च शिक्षयन् ॥

अगाधसंशयाम्भोधिसमुत्तरणतारिणीम् ।
वन्दे विचित्रार्थपदां चित्रां तां गुरुभारतीम् ॥ ५२ ॥

तामहं गुरुभारतीं वन्दे। कीदृशीम्? दुरवगाहसन्देहार्णवपारोत्तारिणीम्। अन्यच्च विचित्रोऽर्थोऽभिधेयो विचित्राणि पदानि शब्दा यस्या सा तथोक्ता। अत एव चित्रामाश्चर्यभूतामाचार्यसरस्वतीं स्तौमि। नहि गुरोर्गरीयानन्योऽस्ति। तदुक्तं जयायाम्—

यस्माद्देवो जगन्नाथः कृत्वा मन्त्रमयीं तनुम्।
मग्नानुद्धरते लोकान् कारुण्याच्छास्त्रपाणिना ॥ इति।

नारदसंग्रहे च—

गुरवे दक्षिणां दद्यात् सर्वस्वं सार्थमेव वा।
सर्वस्वमथवाऽत्यल्पं संसारोच्छेदहेतवे ॥ इति।

मयोक्तं क्वापि—

भगवत्प्राप्तिकामो यस्तेनान्वेष्यो गुरुर्यतः।
भगवान् ज्ञायते शास्त्राच्छास्त्रं च ज्ञायते गुरोः ॥
तद्बोधाद् ज्ञानविलयाज्ज्ञानाप्तौ प्राप्त एव सः।
तस्माच्छास्त्रादीश्वराच्च गरीयान् गुरुरुच्यते ॥ इति।

पञ्चरात्रेऽपि—

"यथा भगवत्येव वक्तरि वृत्तिः" इति ॥ ५२ ॥

अथाम्नायक्रमवर्णनद्वारेण संग्रहकृत्कीर्त्यर्थं श्लोकेनोपबध्नाति—

वसुगुप्तादवाप्येदं गुरोस्तत्त्वार्थदर्शिनः।
रहस्यं श्लोकयामास सम्यक् श्रीभट्टकल्लटः ॥ ५३ ॥

अस्यार्थः प्रारम्भ एवोक्त इति पुनर्नोच्यते। इदं च ब्रह्मविद्याबीजं नाऽपरीक्ष्याऽस्थाने वपेत्। उक्तं ह्यनेनैवाऽन्यत्र—

गुणैरुपेताऽपि तु सिद्धविद्या कन्येव दत्ता गुणवर्जिताय।
सम्भोगहीना विदधात्यकीर्तिं दातुर्यतस्तत्प्रगुणाय दद्यात् ॥
इति ॥ ५३ ॥

इत्यविद्यातमःस्थानां दर्शनाय प्रकाशिता ।
सतां सुपर्णादेशेव शुद्धामलगुणोज्ज्वला ॥
वागलुण्ठनार्थमन्येषां विद्वन्मन्यतयाऽपि तु ।
शुद्धबोधोल्लासवशात् कृता स्पन्दप्रदीपिका ॥
तस्मात् प्रोत्सार्य मात्सर्यमर्थमर्थं विचार्य च ।
आर्यैराश्चर्यभूताया न कार्योऽस्या अनादरः ॥

नारायणस्थानज उत्पलाख्यस्त्रिविक्रमाख्यस्य सुतोऽग्र्यजन्मा ।
यस्तेन सच्छिष्यहिताय दृष्टा व्याख्या मयैषा च तमोनुदे स्यात् ॥
गतिः स्खलन्ती न कचिद्यथा निशि स्याद्दीपहस्तस्य तथा स न कचित् ।
स्खलत्यमार्गेऽपि करेऽस्ति यस्य हि प्रदीपिकेयं प्रगुणप्रकाशिका ॥

किं वा बहूक्तिभिरिमां तु सरस्वतीं मे
बोधद्रुमोत्तमसृतां परतीर्थयुक्ताम् ।
स्वच्छां विगाह्य विबुधत्वमुपैति मर्त्यो-
ऽप्यत्यक्तदेह इह चित्रमतः परं किम् ॥

इत्याचार्यभगवतोत्पलविरचिता स्पन्दप्रदीपिका समाप्ता ॥

॥ शुभं भूयात् ॥

॥ श्रीगणेशाय नमः ॥

# अनुभवसूत्रम्

## प्रथमाधिकरणे पारम्पर्यक्रमः

जयति षडध्वविशुद्धिर्जयति श्रीमत्षडक्षरी विद्या ।
जयति षडङ्गसुभक्तिर्जयति स्वत एव षट्स्थलं ब्रह्म ॥ १ ॥

अवाच्यात्मस्वरूपाय शिवभावप्रदायिने ।
नमः सद्गुरुनाथाय षट्स्थलब्रह्ममूर्तये ॥ २ ॥

नमः शिवाय स्वयमात्तनाम्ने स्वभावसंसिद्धमहामहिम्ने ।
स्वलीनषट्त्रिंशदखण्डधाम्ने स्वमायया कल्पितभूतभूम्ने ॥ ३ ॥

नमः शिवायै शिववल्लभायै शिवानुभूतिप्रतिभाकलायै ।
शिवप्रसादामलविग्रहायै शिवप्रदायै भवतादुमायै ॥ ४ ॥

यस्या मात्रात्रयं नाम व्यत्यस्तप्रणवात्मकम् ।
बभौ ह्रस्वद्वयं दीर्घं द्विमात्रत्वादुमैव सा ॥ ५ ॥

तपोमया सार्धमुपासितत्त्वाच्छिवः सदानन्दचिदात्मसंज्ञः ।
प्रशस्यते सोम इति प्रतीत्या तमैपुराधीश्वरमानतोऽस्मि ॥ ६ ॥

एकाक्षराभिधेयोऽभूदैकारेणेश्वरः स्वयम् ।
यत्पुरं वपुरैश्वर्यं परं धाम तदैपुरम् ॥ ७ ॥

मलप्रहारिणी नाम गङ्गात्रिमलनाशिनी ।
त्रिदीक्षापथगा तीर्थं तत्तीरं क्षेत्रमैपुरी ॥ ८ ॥

तामैपुरीमहं वन्दे भवपाशनिकृन्तनीम् ।
यस्यां सन्निहितः प्रीत्या सोमः सोमार्धशेखरः ॥ ९ ॥

वितत विविधलोकव्यापिना स्वेन भासा
रविशशिशिखिमुख्यान् भासयन् ज्योतिराख्यान् ।
वसति विमलविद्याजन्मवासे निवासे
जयति स खलु योऽसावैपुरीसोमनाथः ॥ १० ॥

तस्य प्रसादेन तपोबलेन
ज्ञानक्रियाचारसमन्वयेन ।
विष्णोः स्वयं देशिक एव जातः
साक्षाच्छिवात्मादिगुरूपमन्युः ॥ ११ ॥

उपमन्युशिवाचार्यनामतः श्रीमदैपुरे ।
जातः प्राथमिकः श्रीमानुपमन्युर्मुनीश्वरः ॥ १२ ॥

यः स्वेच्छया ह्यैपुरसोमनाथपादारविन्दप्रवणैकचेताः ।
आविर्बभूवादिगुरूपमन्योः श्रीभीमनाथप्रभुरार्यवेद्यः ॥ १३ ॥

तस्य प्रभोरुद्भवत् करुणाबलेन
विद्याविलासविभवाकृतिपात्रगात्रः ।
आचार्यलक्षणपरिस्फुटसच्चरित्रः
श्रीमान् महागुरुकलेश्वरनामधेयः ॥ १४ ॥

आचार्यस्य कलेश्वराह्वयमहादेवस्य सूनुर्महान्
श्रौतस्मार्तसमागमप्रथितनिष्ठैकप्रतिष्ठापरः ।
शैवाद्वैतशिरोव्रताङ्गसमयाचारक्रियादेशिकः
साक्षादैपुरमन्दिरः परगुरुः श्रीबोप्पनाथः प्रभुः ॥ १५ ॥

श्रीमद्देशिकबोप्पनाथपरमेशानात्मजः सद्गुरुः
श्रीसोमेश्वरलिङ्गभक्तियजनध्यानैकनिष्ठापरः ।
श्रीवीरव्रतसत्यधर्मनियमश्रद्धादिरूढक्रियः
श्रीशैवोत्तरतत्त्वयोगरसिकः श्रीनाकराजप्रभुः ॥ १६ ॥

श्रीनाकराजपरमेश्वरदेशिकेन्द्र-
कारुण्यबन्धुरकटाक्षनिरीक्षणेन ।
जातः शिवैकगतमानसचारुचेष्टः
श्रीसङ्गमेश्वरमहाप्रभुरार्यवर्यः ॥ १७ ॥

एतस्य सङ्गमेशार्यवर्यस्यायं तनूभवः ।
नाम्ना कल्याणदः श्रीमान् मायिदेव इति स्थितः ॥ १८ ॥

माहेशानां स्वभक्तानां कल्याणपदकाङ्क्षिणाम् ।
ददाति नित्यकल्याणं तेन कल्याणदः श्रुतः ॥ १९ ॥
मायया कथ्यते मायी मायी विष्णुरिति स्मृतः ।
मायिनो यः परो देवो मायिदेवः स उच्यते ॥ २० ॥

तस्मात् कल्याणदः श्रीमान् मायिदेवः शिवः स्वयम् ।
तस्यास्य परमेशस्य नामाङ्कोऽयं शिवात्मकः ॥ २१ ॥

सत्यशुद्धशिवाद्वैतविद्यातन्त्रस्वतन्त्रधीः ।
कल्याणदाह्वयः श्रीमान् मायिदेवमहाप्रभुः ॥ २२ ॥
जयति परमशैवः स्वात्मविद्याधिदैवः
कुमतमतविभेदी षट्स्थलब्रह्मवादी ।
गुरुपदनिजभक्तः केवलोऽनादिमुक्तः
सुचरितशिववर्त्मा मायिदेवो महात्मा ॥ २३ ॥

अयं शिवाद्वैतपरो महात्मा परम्परापावनसम्प्रदायः ।
शिवेन देव्यै कथितं रहस्यं ततान यत्षट्स्थलनिर्णयं तत् ॥ २४ ॥

कामिकाद्या वातुलान्ताः शिवेनोक्ताः शिवागमाः ।
तेषु वातुलसंज्ञोऽयं सर्वोत्कृष्टो महागमः ॥ २५ ॥

वातुलाख्ये महातन्त्रे पूर्वोत्तरविभेदतः ।
भागद्वयं समाख्यातं तस्मिन्नुत्तरनामनि ॥ २६ ॥
तन्त्रोत्तरं प्रदीपाख्यं शिवसिद्धान्ततन्त्रकम् ।
अस्ति तत्राह देवेशो देव्यै षट्स्थलनिर्णयम् ॥ २७ ॥

श्रुतिस्मृतीतिहासैश्च शिवधर्मादिशास्त्रकैः ।
कथ्यते शिवसिद्धान्ततन्त्रं षट्स्थलनिर्णयम् ॥ २८ ॥
शिवागमैः शिवाद्वैतरहस्यैः पारमार्थिकैः ।
कथ्यते शिवसिद्धान्ततन्त्रं षट्स्थलनिर्णयम् ॥ २९ ॥
सर्वैरुपनिषद्वाक्यैः पुराणैरुत्तरार्धकैः ।
कथ्यते शिवसिद्धान्ततन्त्रं षट्स्थलनिर्णयम् ॥ ३० ॥
गीतासारैः समस्तैश्च पुरातनमहामतैः ।
कथ्यते शिवसिद्धान्ततन्त्रं षट्स्थलनिर्णयम् ॥ ३१ ॥
गुरूक्त्या स्वानुभूत्या च तर्कतश्च प्रमाणतः ।
कथ्यते शिवसिद्धान्ततन्त्रं षट्स्थलनिर्णयम् ॥ ३२ ॥
एतेषामेव सर्वार्थसारमादाय सादरम् ।
शिवोक्तं शिवसिद्धान्ततन्त्रं वक्ष्ये समासतः ॥ ३३ ॥
यैश्च कैश्चिदपि श्लोकैस्तत्प्रारब्धं समाप्यते ।
तद्विवक्षा मया कार्या किमन्यैर्बहुविस्तरैः ॥ ३४ ॥
तत्र तावदिदं पूर्वं पारम्पर्यक्रमाभिधम् ।
स्थलनिर्देशसंज्ञं तु द्वितीयमत उच्यते ॥ ३५ ॥
तृतीयमुच्यते साक्षाल्लिङ्गस्थलनिरूपणम् ।
चतुर्थं कीर्त्यते तद्वदङ्गस्थलनिरूपणम् ॥ ३६ ॥
पञ्चमं चैव लिङ्गाङ्गसंयोगविधिसंज्ञकम् ।
सर्वाङ्गलिङ्गसाहित्यं षष्ठाधिकरणं भवेत् ॥ ३७ ॥
श्रीलिङ्गार्पणसद्भावसंज्ञं सप्तममिष्यते ।
क्रियाविश्रान्तिसंज्ञाधिकरणं चाष्टमं भवेत् ॥ ३८ ॥
एवमष्टाधिकरणं शिवसिद्धान्ततन्त्रकम् ।
एतद्यो वेद सोऽविद्याग्रन्थिं विकिरति प्रभुः ॥ ३९ ॥
शिवसिद्धान्तकं तन्त्रं शिवाद्वैतशिवं पदम् ॥ ४० ॥

इत्यनुभवसूत्रे षट्स्थलनिर्णये पारम्पर्यक्रमो नाम
प्रथमाधिकरणं सम्पूर्णम् ॥

---

## द्वितीयाधिकरणे स्थलनिर्देशः

तदिदानीं प्रवक्ष्यामि स्थलनिर्देशमादितः ।
यदुक्तं देवदेवेन रहस्यार्थं समासतः ॥ १ ॥

एकमेव परं ब्रह्म सच्चिदानन्दलक्षणम् ।
शिवतत्त्वं शिवाचार्याः स्थलमित्याहुरादरात् ॥ २ ॥

सर्वेषां लयभूतत्वाल्लयभूतत्वतस्ततः ।
तत्त्वानां महदादीनां स्थलमित्यभिधीयते ॥ ३ ॥

यत्रादौ स्थीयते विश्वं प्राकृतं पौरुषं यतः ।
लीयते पुनरन्ते च स्थलं तत्प्रोच्यते ततः ॥ ४ ॥

स्थकारः स्थानवाची स्याल्लकारो लयवाचकः ।
तयोः कारणभूतं यत्तदेव स्थलमुच्यते ॥ ५ ॥

अधिष्ठानं समस्तस्य स्थावरस्य चरस्य च ।
जगतो यद्भवेत् तत्त्वं तद्धि वै स्थलमुच्यते ॥ ६ ॥

आधारं सर्वशक्तीनां ज्योतिषामखिलात्मनाम् ।
यत्तत्त्वं भवति प्राज्ञैः स्थलं तत्परिगीयते ॥ ७ ॥

आलयः सर्वभूतानां लोकानां सर्वसम्पदाम् ।
यद्भवेत् परमं ब्रह्म स्थलं तत्प्राहुरक्षरम् ॥ ८ ॥

परनिर्वाणनिष्ठानां यद्भवेत् परमं पदम् ।
तदाहुः स्थलमद्वैतं शिवज्ञानैकतत्पराः ॥ ९ ॥

स्वशक्तिक्षोभमात्रेण स्थलं तद् द्विविधं भवेत् ।
एकं लिङ्गस्थलं प्रोक्तमन्यदङ्गस्थलं स्मृतम् ॥ १० ॥

लिङ्गाङ्गोपाधिभेदेन द्विधा भिन्नं परस्परम् ।
महान् घटप्रभेदेन यथाऽऽकाशः प्रतीयते ॥ ११ ॥

प्रतीयते तथा: चैव स्थलं लिङ्गाङ्गभेदतः ।
स्थलं नाम परं तत्त्वं शिवरुद्रादिसंज्ञकम् ॥ १२ ॥

उपास्योपासकत्वेन स्वयमेव द्विधा भवेत् ।
लिङ्गस्थलमुपास्यं स्यादङ्गस्थलमुपासकम् ॥ १३ ॥

उपास्यत्वं तथोपासकत्वं च परमः शिवः ।
अप्रच्युतात्मभेदेन स्थितः सन्नात्मलीलया ॥ १४ ॥

स्वशक्त्या युगपत् साक्षात् प्राप्त एव स्वयं क्रमात् ।
नाशिवस्य शिवोपास्तिर्घटते जन्मकोटिभिः ॥ १५ ॥

शिवस्यैव शिवोपास्तिरिति नानाश्रुतिस्थितिः ।
चिन्मात्रं परमं साक्षात् स्थलं सत्यादिलक्षणम् ॥ १६ ॥

लिङ्गाङ्गत्वशिवात्मत्वभेदेनैव स्वयं स्थितम् ।
शिवत्वेनात्मरूपेण यथा चिन्मात्रमुच्यते ॥ १७ ॥

लिङ्गत्वेनाङ्गरूपेण स्थलमात्रं तथोच्यते ।
स्थलं चिन्मात्रमेव स्याल्लिङ्गं स्याच्छिव एव हि ॥ १८ ॥

तथाङ्गं जीव एव स्यादिति शैवी परा स्थितिः ।
यथा स्थलं द्विधाभूतं तथा शक्तिर्द्विधा भवेत् ॥ १९ ॥

शक्तिरप्रतिमा साक्षाच्छिवेन सहधर्मिणी ।
साक्षिणी सत्यसम्पूर्णा निर्विकल्पा महेश्वरी ॥ २० ॥

सा शक्तिर्द्विविधा भूता स्वस्वातन्त्र्यबलेन तु ।
समानधर्मिणीत्वेन विभक्ता भक्तवत्सला ॥ २१ ॥

लिङ्गस्थलाश्रया काचित् काचिदङ्गस्थलाश्रया ।
लिङ्गस्थलाश्रया शक्तिः कलारूपा प्रकीर्तिता ॥ २२ ॥

अङ्गस्थलाश्रया शक्तिर्भक्तिरूपा भवापहा ।
यथा महानलज्वाला विभक्ता दीपिकाकृतिः ॥ २३ ॥

तथा माहेश्वरी शक्तिर्विभक्ता भक्तिरूपिणी ।
ज्वाला तमस्विनी यस्माद्दीपिका सुप्रकाशिनी ॥ २४ ॥

तस्मात् सवासना शक्तिर्भक्तिर्निर्वासना मता ।
भक्तिर्महत्तरा शुद्धा सुसूक्ष्मा शोभना परा ॥ २५ ॥

सच्चिदानन्दरूपा स्याद् भुक्तिमुक्तिफलप्रदा ।
शक्तिरेव स्मृता भक्तिर्भक्तिरेव हि सा सदा ॥ २६ ॥

शक्तिभक्त्योर्न भेदोऽस्ति परमार्थनिरूपणे ।
शक्तिः प्रवृत्तिराख्याता निवृत्तिर्भक्तिरीरिता ॥ २७ ॥

शक्त्या प्रपञ्चसृष्टिः स्याद्भक्त्या तद्विलयो मतः ।
शक्तिवैचित्र्यतो रूपं नीरूपमपि याति हि ॥ २८ ॥

भक्तिवैचित्र्यतो रूपमपि नीरूपतामियात् ।
प्रपञ्चवृद्ध्यपेक्षा हि शक्तेः स्वाभाविको गुणः ॥ २९ ॥

प्रपञ्चसंक्षयापेक्षा भक्तेः स्वाभाविको गुणः ।
अधोमुखी भवेच्छक्तिर्भक्तिरूर्ध्वमुखी भवेत् ॥ ३० ॥

समाया शक्तिराख्याता निर्माया भक्तिरीरिता ।
अपि तर्कप्रमाणाभ्यां शक्तेर्भक्तिर्गुणाधिका ॥ ३१ ॥

उपास्यत्वं भवेच्छक्त्या भक्त्योपासकता भवेत् ।
तस्माल्लिङ्गस्थले शक्तिर्भक्तिरङ्गस्थले स्थिता ॥ ३२ ॥

लिङ्गस्थलं शिवः साक्षाज्जीवात्माऽङ्गस्थलं भवेत् ।
लिङ्गाङ्गस्थलयोरैक्यं शिवजीवैक्यमेव हि ॥ ३३ ॥

एतद्यो वेत्ति सोऽविद्याग्रन्थिं विकिरति प्रभुः ।
शिवसिद्धान्तकं तन्त्रं शिवाद्वैतं शिवं पदम् ॥ ३४ ॥

इत्यनुभवसूत्रे शिवसिद्धान्ततन्त्रे षट्स्थलनिर्णये स्थलनिर्णयो नाम
द्वितीयाधिकरणं सम्पूर्णम् ॥ २ ॥

---

## तृतीयाधिकरणे लिङ्गस्थलनिरूपणम्

इदानीमथ वक्ष्यामि लिङ्गस्थलनिरूपणम् ।
संक्षेपाद् विस्तरेणापि यथोक्तं शम्भुना पुरा ॥ १ ॥

शिव एव स्वयं लिङ्गमिति लिङ्गस्य वैभवम् ।
नान्यच्चिह्नादिकं लिङ्गं तत्सर्वं कृतकं च यत् ॥ २ ॥

लीयते गम्यते यत्र येन सर्वं चराचरम् ।
तदेतल्लिङ्गमित्युक्तं लिङ्गतत्त्वपरायणैः ॥ ३ ॥

लयगत्यर्थयोर्हेतुभूतत्वात् सर्वदेहिनाम् ।
लिङ्गमित्युच्यते साक्षाच्छिवः सकलनिष्कलः ॥ ४ ॥

लिङ्गस्थलं त्रिधा ज्ञेयं तद्भेदो वर्ण्यते क्रमात् ।
प्रथमं भावलिङ्गं स्याद् द्वितीयं प्राणलिङ्गकम् ॥ ५ ॥

तृतीयमिष्टलिङ्गं स्यादित्येतत्त्रिविधं स्मृतम् ।
निष्कलं भावलिङ्गं स्याद्भावग्राह्यं परात्परम् ॥ ६ ॥

सन्मात्रं भावलिङ्गं स्यादिति निष्ठा महात्मनाम् ।
प्राणलिङ्गं मनोग्राह्यं भवेत् सकलनिष्कलम् ॥ ७ ॥

तत्प्राणेष्वन्तर्मनसो लिङ्गमाह इति श्रुतिः ।
सकलं दृक्कलाग्राह्यमिष्टलिङ्गस्थलं महत् ॥ ८ ॥

इष्टावाप्तिकरं साक्षादनिष्टपरिहारकम् ।
इष्टिः पूजा तया नित्यमिष्टं पूजितमादरात् ॥ ९ ॥

इष्टलिङ्गमिति प्रोक्तमाचार्यैर्लिङ्गपूजकैः ।
इष्टमर्थं स्वभक्तानामनुयच्छति सर्वदा ॥ १० ॥

तदिष्टलिङ्गमित्याह तस्मादाथर्वणी श्रुतिः ।
सद्रूपं भावलिङ्गं स्याच्चिद्रूपं प्राणलिङ्गकम् ॥ ११ ॥

आनन्दरूपमाचार्यैरिष्टलिङ्गमुदाहृतम् ।
अस्यार्थो भावलिङ्गं स्यात्त्वमर्थः प्राणलिङ्गकम् ॥ १२ ॥

तदर्थस्त्विष्टलिङ्गं स्यात् पदत्रयनिरूपणे ।
भावलिङ्गं परं तत्त्वं प्राणलिङ्गं तु सूक्ष्मकम् ॥ १३ ॥

इष्टलिङ्गं भवेत् स्थूलमेतल्लिङ्गत्रयं स्मृतम् ।
स्थूलं बाह्यमिति प्रोक्तं सूक्ष्ममाभ्यन्तरं स्मृतम् ॥ १४ ॥

सबाह्याभ्यन्तरं यत्तत्परमित्यभिधीयते ।
देहप्राणात्मरूपेण क्रियामन्त्रप्रयोगतः ॥ १५ ॥

बिन्दुनादकलाभेदाल्लिङ्गत्रयमुदाहृतम् ।
एकमेकं स्थलं भूयो द्विविधं द्विविधं भवेत् ॥ १६ ॥

भावलिङ्गस्थलं द्वेधा प्राणलिङ्गस्थलं द्विधा ।
इष्टलिङ्गस्थलं चैव द्विधा प्रोक्तं महात्मभिः ॥ १७ ॥

महालिङ्गं प्रसादाख्यं लिङ्गमित्युभयस्थलम् ।
भावलिङ्गं भवत्येव स्वानुभूतिप्रमाणतः ॥ १८ ॥

तथा च चरलिङ्गं च शिवलिङ्गमिति द्वयम् ।
प्राणलिङ्गं भवत्येव तात्पर्यार्थो न संशयः ॥ १९ ॥

गुरुलिङ्गं तथाऽऽचारलिङ्गमित्युभयस्थलम् ।
इष्टलिङ्गं भवत्येव सत्यमुक्तमिदं मया ॥ २० ॥

महालिङ्गं प्रसादाख्यलिङ्गं च चरलिङ्गकम् ।
शिवलिङ्गं तथा चैव गुरुलिङ्गं ततः परम् ॥ २१ ॥

आचारलिङ्गमित्येव लिङ्गं षड्विधमुच्यते ।
एवं हि षड्विधं भूतं लिङ्गं परमकारणम् ॥ २२ ॥

स्वशक्तिवैभवाच्चैव स्वातन्त्र्याल्लीलयाऽपि च ।
शक्तयः षड्विधा ज्ञेयाः षट्स्थलेषु समा हि ताः ॥ २३ ॥

१८

शक्तीनामधुना तासां सद्भावो वर्ण्यते क्रमात् ।
शान्त्यतीतोत्तरा नाम चिच्छक्तिरिति कीर्तिता ॥ २४ ॥

शान्त्यतीता परा शक्तिः शान्तिरेवादिसंज्ञिता ।
इच्छाशक्तिश्च विद्या स्यात् प्रतिष्ठा ज्ञानरूपिणी ॥ २५ ॥

निवृत्तिः स्यात् क्रियाशक्तिरिति पर्यायसङ्गतिः ।
चिच्छक्तिश्च पराशक्तिरादिशक्तिस्तथैव च ॥ २६ ॥

इच्छाज्ञानक्रियारूपाः शक्तयः षड्विधा मताः ।
स्थलानां शक्तियुक्तानां षण्णामेषां पृथक्पृथक् ।
स्वरूपलक्षणं चैव क्रमशो वर्ण्यतेऽधुना ॥ २७ ॥

आद्यन्तशून्यममलं परिपूर्णमेकं
सूक्ष्मं परात्परमनामयमप्रमेयम् ।
भावैकगम्यमजडं शिवतत्त्वमाहु-
श्चिच्छक्तिसंस्फुरणरूपमहात्मलिङ्गम् ॥ २८ ॥

ज्योतिर्मयं निजमखण्डमतीन्द्रियार्थं
ज्ञानोपलब्धममृतं परिणामबीजम् ।
सादाख्यतत्त्वमुदितं परया स्वशक्त्या
प्राहुः प्रसादघनलिङ्गमुपाधिहीनम् ॥ २९ ॥

साभ्यन्तरञ्च बहिरङ्गममूर्ततत्त्वं
ज्योतिर्मयं पुरुषमक्षरतः पराख्यम् ।
स्वात्मादिशक्तिघटितं मनसैव नित्यं
ध्यातव्यमाप्तमतयश्चरलिङ्गमाहुः ॥ ३० ॥

विद्याकलाकलितरूपसुशोभमानं
दिव्यप्रभापटलमेकमुखं प्रशान्तम् ।
इच्छास्वशक्तिपरिजृम्भितमूर्ततत्त्वं
व्यक्ते ह्यहङ्कृतिपदे शिवलिङ्गमाहुः ॥ ३१ ॥

स्वज्ञानशक्तिविभवोत्थितकर्तृतत्त्वं
सर्वोपदेशविधितन्त्रकृतप्रतिष्ठम् ।
तेजोनिधिं परमपारसुखाम्बुराशिं
बुद्धेः पदे विनिहितं गुरुलिङ्गमाहुः ॥ ३२ ॥

कर्मात्मना सकलतत्त्वनिवासहेतो-
राधारभूतमचलं क्रियया स्वशक्त्या ।
चित्तेन धार्यमधिरूढनिवृत्तिमार्गं
ह्याचारलिङ्गमिति वेदविदो वदन्ति ॥ ३३ ॥

एवमेव स्वरूपं च लक्षणं परिकीर्तितम् ।
महालिङ्गस्थलादीनां षड्विधानां यथाक्रमम् ॥ ३४ ॥

किन्त्वेतेषां स्थलानां तु प्रादुर्भावः प्रदश्यते ।
शिव एव स्वचिच्छक्त्या महालिङ्गस्थलं भवेत् ॥ ३५ ॥

तदुपासकरूपत्वादैक्यस्थलमभून्महत् ।
स्फुरणाद्वै पराशक्तेर्महालिङ्गस्थले परे ॥ ३६ ॥

प्रसादलिङ्गसंज्ञं तु प्रादुरासीन्महास्थलम् ।
तदुपासकरूपत्वाच्छरणस्थलमाबभौ ॥ ३७ ॥

प्रादुर्भूते स्थले तस्मिन्नादिशक्तिप्रभावतः ।
स्थलं च चरलिङ्गाख्यं समुत्पन्नमनुत्तमम् ॥ ३८ ॥

तदुपासकरूपत्वात् प्राणलिङ्गिस्थलं बभौ ।
स्थलात् समुत्थितं ज्योतिर्मयं तस्मात् सुशोभनम् ॥ ३९ ॥

शिवलिङ्गस्थलं साक्षादिच्छाशक्तिप्रभावतः ।
तदुपासकरूपत्वात् प्रसादिस्थलमुद्बभौ ॥ ४० ॥

शिवलिङ्गस्थले ज्ञानशक्तिस्फुरणयोगतः ।
उद्भूत् कारणत्वेन गुरुलिङ्गाभिधं स्थलम् ॥ ४१ ॥

तदुपासकरूपत्वान्माहेश्वरमहास्थलम् ।
गुरुलिङ्गस्थले तस्मिन् क्रियाशक्तिप्रभावतः ॥ ४२ ॥

आचारलिङ्गसंज्ञं तु स्थलं जातं सुशोधनम् ।
तदुपासकरूपत्वाद्भक्तस्थलमजायत ॥ ४३ ॥

महालिङ्गं प्रसादाख्यलिङ्गं च चरलिङ्गकम् ।
शिवलिङ्गं तथा चैव गुरुलिङ्गं ततः परम् ॥ ४४ ॥

आचारलिङ्गमित्येवं प्रवृत्तिसृष्टिमार्गतः ।
एवं लिङ्गस्थलं प्रोक्तं षड्विधं तु समासतः ।
सन्ति भेदोपभेदाश्च प्रत्येकं स्थलमत्र हि ॥ ४५ ॥

एतद्यो वेद सोऽविद्याग्रन्थिं विकिरति प्रभुः ।
शिवसिद्धान्तकं तन्त्रं शिवाद्वैतं शिवं पदम् ॥ ४६ ॥

इत्यनुभवसूत्रे षट्स्थलनिर्णये लिङ्गस्थलनिरूपणं नाम
तृतीयाधिकरणं सम्पूर्णम् ॥ ३ ॥

———

# चतुर्थाधिकरणे अङ्गस्थलनिरूपणम्

वक्ष्ये संक्षेपमात्रेण पुरा शम्भुप्रचोदितः ।
रहस्यं सारभूतार्थमङ्गस्थलनिरूपणम् ॥ १ ॥

अनाद्यन्तमजं लिङ्गं तत्परं परमं प्रति ।
यद्गच्छति महाभक्त्या तदङ्गमिति निश्चितम् ॥ २ ॥

अं भवेत् परमं ब्रह्म तद्गतं तत्परायणम् ।
अङ्गस्थलमिति प्राहुरङ्गतत्त्वविशारदाः ॥ ३ ॥

अमिति ब्रह्म सन्मात्रं गच्छतीति गमुच्यते ।
रूप्यतेऽङ्गमिति प्राज्ञैरङ्गतत्त्वविचिन्तकैः ॥ ४ ॥

अङ्गस्थलं त्रिधा ज्ञेयमाचार्यैः सूक्ष्मदर्शिभिः ।
योगाङ्गं प्रथमं प्रोक्तं भोगाङ्गं तु द्वितीयकम् ॥ ५ ॥

त्यागाङ्गं तु तृतीयं स्यादेवमेव त्रिधा भवेत् ।
शिवयोगसुखावाप्त्या योगाङ्गमिति गीयते ॥ ६ ॥

शिवेन सह भोगेन भोगाङ्गमिति कथ्यते ।
संसारभ्रान्तिसंत्यागात्त्यागाङ्गमिति पठ्यते ॥ ७ ॥

योगाङ्गं कारणं प्रोक्तं भोगाङ्गं सूक्ष्ममुच्यते ।
त्यागाङ्गं स्थूलमित्युक्तमेवं भेदोपभेदतः ॥ ८ ॥

सुषुप्त्यवस्था योगाङ्गं भोगाङ्गं स्वापनाभिधा ।
जाग्रदित्युदितावस्था त्यागाङ्गमिति लक्ष्यते ॥ ९ ॥

योगाङ्गं प्राज्ञ एव स्याद्भोगाङ्गं तैजसो भवेत् ।
त्यागाङ्गं विश्व एव स्यात् परमार्थनिरूपणे ॥ १० ॥

इत्येवं त्रिप्रकारैस्तत्प्रोक्तमङ्गस्थलं क्रमात् ।
प्रत्येकं पृथगर्थत्वात् साम्प्रतं प्रोच्यते द्विधा ॥ ११ ॥

योगाङ्गमैक्यं शरणस्थलमित्युभयं भवेत् ।
प्राणलिङ्गि प्रसादीति द्वयं भोगाङ्गमिष्यते ॥ १२ ॥

माहेश्वरस्थलं भक्तस्थलमित्युभयं तथा ।
त्यागाङ्गं भवतीत्येवं प्रोच्यते पारमार्थिकैः ॥ १३ ॥

कारणं हि भवेदैक्यं शरणं तु द्वयात्मकम् ।
सूक्ष्मं स्यात्प्राणलिङ्गीति प्रसादीत्युभयात्मकम् ॥ १४ ॥

स्थूलं माहेश्वरं भक्तमिति स्याद् द्वितयात्मकम् ।
प्राज्ञ एव भवेदैक्यस्थलं च शरणस्थलम् ॥ १५ ॥

तैजसः प्राणलिङ्गि स्यात् प्रसादीति तथैव च ।
विश्वो माहेश्वरं भक्तस्थलं चैव भवत्युभे ॥ १६ ॥

ऐक्यं तु शरणं नाम प्राणलिङ्गि प्रसादि च ।
माहेश्वरं भक्तमिति क्रमात् षट्स्थलमुच्यते ॥ १७ ॥

स्थिरा यत्र परा भक्तिर्विना संसृतिसंगतिम् ।
स्थलं तदेतदित्याहुः स्थलशब्दार्थवादिनः ॥ १८ ॥

भक्तिवैचित्र्यसंयोगपरिणामप्रभावतः ।
नामरूपक्रियाभिन्नषड्विधाङ्गस्थलं भवेत् ॥ १९ ॥

सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः ।
अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य ॥ २० ॥

षट्स्थलेषु प्रविश्यैषा भक्तिः षड्विधरूपिणी ।
क्रमात् प्रवर्तते तत्तल्लक्षणोपाधिभेदतः ॥ २१ ॥

मधुरादिषु यत्षट्सु प्रविश्य सलिलं यथा ।
तत्तदाकारतो भाति तथा भक्तिः स्थले स्थले ॥ २२ ॥

षड्विधाकारतो भिन्ना भक्तिः साक्षाच्छिवात्मिका ।
षण्णामैक्यादिभक्तान्तस्थलानां वर्तते पदे ॥ २३ ॥

यथा शक्तिर्महालिङ्गाद्याचारान्तेष्ववस्थिता ।
तथैवैक्यादिभक्तान्तेष्वियं भक्तिरवस्थिता ॥ २४ ॥

भक्तिः समरसाकारा प्रथमा परिगीयते ।
आनन्दाकारतो भाति द्वितीया भक्तिरुत्तमा ॥ २५ ॥

तृतीयाऽनुभवाकारा भक्तिर्भवविनाशिनी ।
चतुर्थी परमा भक्तिरवधानात्मिका मता ॥ २६ ॥

पञ्चमी नैष्ठिकी भक्तिः षष्ठी सद्भक्तिरीरिता ।
षोढाभक्तिसमेतानामङ्गानामनुपूर्वशः ।
पृथग्लक्षणसद्भावस्थितिरत्र निगद्यते ॥ २७ ॥

नाहं त्वमप्रथितशब्दविभेदवृत्ति-
र्न प्राणदेहमनइन्द्रियभौतिकानि ।
सर्वं भ्रमात्मकमिदं मयि नेति भावा-
दैक्यस्थलं समरसं सुखरूपमाहुः ॥ २८ ॥

ज्ञानप्रकाशबलतः स्वयमेव लिङ्गं
देहेन्द्रियादि ममरूपमिति प्रबुध्य ।
युक्ते समस्तविषये सति यद्विशुद्धं
तत्प्राहुरागमविदः शरणस्थलं हि ॥ २९ ॥

प्राणेन्द्रियादिषु ममाहमिति प्रमोहं
सम्भ्रान्तिसिद्धमपहाय समस्तमेतत् ।
लिङ्गे निधाय मनसा यदनुप्रयुक्तं
तत्प्राणलिङ्गि सुचरस्थलमाहुरार्याः ॥ ३० ॥

आत्मोपभोगविषयाणि हि सावधानं
द्रव्याण्यहङ्कृतिमितैरखिलैः स्ववर्गैः ।
लिङ्गे समर्प्य बहुशो लभते प्रसादं
यत्तत्प्रसादि गदितं गुरुभिः स्थलं स्यात् ॥ ३१ ॥

आस्तिक्यबुद्धिनियमव्रतसत्यधर्म-
शौचादिलक्षणपरिस्फुटसच्चरित्रम् ।
लिङ्गैक्यनैष्ठिकतया सह वीरवृत्तं
माहेश्वरस्थलमिति प्रवदन्ति सन्तः ॥ ३२ ॥

मिथ्यैव सत्यमिव भाति इदं शरीरं
प्राणार्थंजातमिति तत्र निवृत्तचित्तम् ।
भक्तिक्रियाचरणयैव सदा विरक्तं
भक्तस्थलं भवविकारविदूरमाहुः ॥ ३३ ॥

एवमेव क्रमात् प्रोक्तमैक्यादीनां सुवर्चसाम् ।
षड्विधाश्रमिणामेषां पृथगाचारलक्षणम् ॥ ३४ ॥

आविर्भूतेरथैतेषामीषद्भेदः प्रदर्श्यते ।
आत्मनाऽऽकाशसम्भूतिराकाशाद्वायुसम्भवः ॥ ३५ ॥

वायोरग्निसमुत्पत्तिरग्नेरापः उदाहृताः ।
अद्भ्यस्तु पृथ्वीसम्भूतिर्लक्षणैक्यप्रभावतः ॥ ३६ ॥

ऐक्यस्थलादिभक्तान्तस्थलसम्भूतिरीरिता ।
ऐक्यादिभक्तपर्यन्ताश्रमिणां षट्स्थलात्मनाम् ॥ ३७ ॥

अङ्गानामधुना तेषामङ्गलक्षणमुच्यते ।
आत्माङ्गमैक्यमेव स्याद्व्योमाङ्गं शरणस्थलम् ॥ ३८ ॥

वाय्वङ्गं प्राणलिङ्गि स्यादनलाङ्गं प्रसादि च ।
माहेश्वरं जलाङ्गं स्याद्भक्तं भूम्यङ्गमिष्यते ॥ ३९ ॥

बिन्दुनादकलाभेदात् त्रिविधानि विलोमतः ।
षट्स्थलानि विभक्तानि द्वितयं द्वितयं क्रमात् ॥ ४० ॥

शरीरप्राणजीवानां त्रयाणां भेदतः क्रमात् ।
विलोमतो विभक्तानि षट्स्थलान्युभयोभयम् ॥ ४१ ॥

षट्स्थलानि विभागेन द्विविधानि परस्परम् ।
ज्ञानात्मकतया त्रीणि क्रियात्मकतया तथा ॥ ४२ ॥

ज्ञानात्मकस्थलं ह्यैक्यं शरणं प्राणलिङ्गिकम् ।
क्रियात्मकं प्रसादि स्यान्माहेश्वरमतः परम् ॥ ४३ ॥

ऐक्यं च शरणं नाम प्राणलिङ्गि प्रसादि च ।
माहेश्वरं भक्तमिति प्रवृत्तिः सृष्टिमार्गतः ॥ ४४ ॥

एवमङ्गस्थलं प्रोक्तं षड्विधं तु समासतः ।
इतः परं न वक्तव्यं शेषोऽन्यो ग्रन्थविस्तरः ॥ ४५ ॥

एतद्यो वेद सोऽविद्याग्रन्थिं विकिरति प्रभुः ।
शिवसिद्धान्तकं तन्त्रं शिवाद्वैतं शिवं पदम् ॥ ४६ ॥

इति वातुलोत्तरतन्त्रे शिवानुभवसूत्रे षट्स्थलनिर्णयेऽङ्गस्थलनिरूपणं नाम चतुर्थाधिकरणं सम्पूर्णम् ॥ ४ ॥



## पञ्चमाधिकरणे लिङ्गाङ्गसंयोगविधिः

अथेश्वरेणोक्तमतीव गुह्यं
देव्या कृतप्रश्नसुनिश्चितार्थम् ।
गुरूपदेशानुभवप्रसिद्धं
लिङ्गाङ्गसंयोगविधिं प्रवक्ष्ये ॥ १ ॥

शिव एव स्वयं लिङ्गमात्मैवाङ्गस्थलं भवेत् ।
तयोः शिवात्मनोः सम्यग्योगः संयोग एव हि ॥ २ ॥

आत्मायं केवलः शुद्धः शिवस्यांशः सदाऽमलः ।
नित्यो निरञ्जनः शान्तस्तस्मादात्मा स्वयं शिवः ॥ ३ ॥

सोऽयमात्मा शिवाङ्गं स्याच्छिवेनाङ्गीकृतत्वतः ।
सर्वज्ञत्वादिभेदैश्च शिवाङ्गमिदमिष्यते ॥ ४ ॥

सर्वज्ञत्वं च तृप्तित्वं तथानादिप्रबोधता ।
स्वतन्त्रतापि चालुप्तशक्तिताऽनन्तशक्तिता ॥ ५ ॥

इत्येतैर्लक्षणैः षड्भिः शिवाङ्गमिति लक्ष्यते ।
तस्मादङ्गस्थलं साक्षादात्मैव हि न संशयः ॥ ६ ॥

लिङ्गस्थलं शिवः साक्षात् सत्यमेव मयोदितम् ।
यथा लिङ्गस्थलं शक्त्या स्वीयया बहुधा भवेत् ॥ ७ ॥

तथा चाङ्गस्थलं भक्त्या स्वीयया बहुधा भवेत् ।
यद्यल्लिङ्गस्थलं साक्षाच्छिवो भवति शक्तितः ॥ ८ ॥

तत्तदङ्गस्थलं साक्षादात्मा भवति भक्तितः ।
यद्यद्रूपमुपास्यत्वाच्छिवो भवति शक्तिमान् ॥ ९ ॥

उपासकत्वतश्चात्मा तत्तदाप्नोति भक्तिमान् ।
यद्यत्स्वरूपमाधत्ते पूज्यत्वेन महेश्वरः ॥ १० ॥

पूजकत्वेन चात्मानं तत्तद्रूपमनुव्रजेत् ।
यद्यत्स्वरूपमाधत्ते साध्यत्वात् परमेश्वरः ॥ ११ ॥

साधकत्वादसावात्मा तत्तदास्थाय तिष्ठति ।
यद्यत्स्वरूपमाधत्ते गुरुत्वेनाम्बिकापतिः ॥ १२ ॥

शिष्यत्वेनायमात्मा च तत्तदादाय वर्तते ।
उपास्योपासकौ पूज्यपूजकौ साध्यसाधकौ ॥ १३ ॥

गुरुशिष्यौ शिवात्मानौ निगद्येते महात्मभिः ।
अथ संयोगसद्भाव उच्यते साम्प्रतं मया ॥ १४ ॥

सम्यग्योगो हि संयोगो भवेल्लिङ्गाङ्गयोः सदा ।
संयोग एव सायुज्यरूपा मुक्तिर्न चापरा ॥ १५ ॥

तस्माल्लिङ्गाङ्गसंयोगात् परा मुक्तिर्न विद्यते ।
मुक्तेः परतरा भक्तिरिति सत्यपरा श्रुतिः ॥ १६ ॥

इतः परं न वक्तव्यं बहुनोक्तेन किं फलम् ।
ततो लिङ्गाङ्गसंयोगविधिरत्र प्रदर्श्यते ॥ १६ ॥

विधिः कर्तव्यरूपोपदेश इत्येव निश्चितः ।
उपदेशप्रसिद्ध्यर्थमाचार्यं भवतारकम् ॥ १८ ॥

शिवविद्याप्रदातारमविद्याग्रन्थिभेदकम् ।
शिवसिद्धान्ततन्त्रैककर्तारं परमं शिवम् ॥ १९ ॥

सदा लिङ्गाङ्गसंयोगपरायणमनामयम् ।
उपगच्छत्यसौ देही स्वाविद्याविनिवृत्तये ॥ २० ॥

सोऽयमात्मा स्वयं साक्षाच्छिवस्यांशोऽपि तत्त्वतः ।
व्यवहारदशायां तु संसारीव प्रकाशते ॥ २१ ॥

संसारोऽविद्यया चास्य सत्यवत् परिकल्पितः ।
देहेन्द्रियादिसंघातेऽहंममभ्रान्तिरूपतः ॥ २२ ॥

स्वस्मिन्नेव स्थिताऽविद्यामोहितः पुरुषः स्वकम् ।
शिवांशत्वं स्वकां शक्तिमविज्ञाय स्वकर्मणा ॥ २३ ॥

कोऽहमित्यब्रवीद् देही गुरुं परमकारणम् ।
गुरुस्तत्त्वमसीत्याह सत्यार्थं करुणानिधिः ॥ २४ ॥

अविद्याकृतकं सर्वमिदं देहेन्द्रियादिकम् ।
असत्यं भ्रान्तिसंसिद्धं सत्यवत् परिवर्तते ॥ २५ ॥

तस्मात्तत्कृतकभ्रान्तिविनाशार्थमहो तव ।
नित्यं लिङ्गाङ्गसंयोगज्ञाननिष्ठत्वमावह ॥ २६ ॥

लिङ्गं तत्पदमाख्यातमङ्गं त्वम्पदमीरितम् ।
संयोगोऽसिपदंप्रोक्तमनयोरङ्गलिङ्गयोः ॥ २७ ॥

सन्मात्रं लिङ्गमाख्यातं चिन्मात्रं त्वङ्गमीरितम् ।
आनन्दमात्रमनयोः संयोग इति कीर्तितः ॥ २८ ॥

नादो लिङ्गमिति प्रोक्तो बिन्दुरङ्गमितीरितः ।
कला संयोग इत्युक्ता तयोर्लिङ्गाङ्गयोस्तथा ॥ २९ ॥

मन्त्रो लिङ्गमिति प्रोक्तः क्रिया त्वङ्गमितीरिता ।
क्रियामन्त्रप्रयोगस्तु संयोगो ह्यङ्गलिङ्गयोः ॥ ३० ॥

अङ्गं प्रकृतिराख्यातं लिङ्गं पुरुष ईरितः ।
तयोः प्रेरकभावेन संयोगः स्वयमीश्वरः ॥ ३१ ॥

अकारो लिङ्गमित्युक्तश्चोकारोऽङ्गमितीरितः ।
संयोगोऽयं मकारः स्यात् प्रणवांशप्रभेदतः ॥ ३२ ॥

ह्रस्वः स्याल्लिङ्गमेवाङ्गं दीर्घः प्लुतमतः परम् ।
तयोः संयोग इत्येवमोङ्कारेणाभिधीयते ॥ ३३ ॥

वागङ्गं लिङ्गमेवार्थः प्रतिपत्तिस्तयोः सदा ।
संयोग इति विद्वद्भिः प्रोक्तो लिङ्गाङ्गयोगिभिः ॥ ३४ ॥

छायातपौ जीवशिवावसौ गुरुः
शिवोऽस्य शिष्यः खलु जीवसंज्ञिकः ।
लिङ्गं परं हृद्गगनं तदङ्गकं
प्राणानिलोऽयं शिवसूत्रमुच्यते ॥ ३५ ॥

अनुभवसूत्रं सूत्रं शिवसिद्धान्तसंज्ञिकं तन्त्रम् ।
लिङ्गं षट्स्थलपरमब्रह्मैवेत्यत्र धारयेत् सततम् ॥ ३६ ॥

इत्युक्त्वा पुरुषस्यास्य देशिकः करुणाबलात् ।
चक्रे दीक्षां महाशैवीमविद्यापाशकृन्तनीम् ॥ ३७ ॥

दीयते लिङ्गसम्बन्धः क्षीयते च मलत्रयम् ।
दीयते क्षीयते यस्मात् सा दीक्षेति निगद्यते ॥ ३८ ॥

सा दीक्षा परमा शैवी त्रिधा भवति निर्मला ।
एका वेधात्मिका साक्षादन्या मन्त्रात्मिका मता ॥ ३९ ॥

क्रियात्मिका परा काचिदेवमेव त्रिधा भवेत् ।
हस्तमस्तकसंयोगच्छलाद् वेधेति गीयते ॥ ४० ॥

गुरुणोदीरिता कर्णे या सा मान्त्रीति कथ्यते ।
शिष्यपाणितले दत्ता या दीक्षा सा क्रियोच्यते ॥ ४१ ॥

पाशानशेषान् कर्तर्या छित्वा लिङ्गं समादिशेत् ।
कर्तरी शिवदीक्षा स्याद्यया पाशान् छिनात्यसौ ॥ ४२ ॥

कृत्वा शैवीं परां दीक्षां दत्त्वा विद्यां शिवात्मिकाम् ।
छित्वाऽविद्यामहापाशं कलाध्वानं विचिन्तयेत् ॥ ४३ ॥

यथा कला तथा भावो यथा भावस्तथा मनः ।
यथा मनस्तथा दृष्टिर्यथा दृष्टिस्तथा स्थलम् ॥ ४४ ॥

सा कला परमा सूक्ष्मा तत्त्वानां बोधिनी परा ।
तामाकृष्य यथान्यायं लिङ्गे समुपवेशयेत् ॥ ४५ ॥

सा बाह्याभ्यन्तरं साक्षाल्लिङ्गं ज्योतिः परं स्वकम् ।
तिले तैलमिवाभाति ह्यरण्यामिव पावकः ॥ ४६ ॥

क्षीरे सर्पिरिव स्रोतस्यम्बुवत् स्थितमात्मनि ।
तद्भावलक्षणां भक्तिं सुसूक्ष्मां परमामपि ॥ ४७ ॥

दर्शयामास शिष्यस्य देशिकः परमेश्वरः ।
तस्मिन् दृष्टे परे लिङ्गे निष्कले निरुपाधिके ॥ ४८ ॥

अस्य जीवस्य कर्माणि क्षीयन्ते सकलानि हि ।
अविद्याहृदयग्रन्थिर्भिद्यते शतधाऽपि च ॥ ४९ ॥

संशया बहुसंकल्पाश्छिद्यन्ते च सहस्रधा ।
हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् ॥ ५० ॥

तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः ।
ततस्तल्लिङ्गमस्याङ्गे शिष्यस्यामिततेजसः ॥ ५१ ॥

गुरुः संयोजयामास पूर्वोक्तेनैव वर्त्मना ।
तनुत्रयगतानादिमलत्रयमसौ गुरुः ॥ ५२ ॥

दीक्षात्रयेण निर्दग्ध्वा लिङ्गत्रयमुपादिशत् ।
यथा पुरत्रयं दग्धं युगपत् पुरवैरिणा ॥ ५३ ॥

तथा मलत्रयं दग्धं युगपद् देशिकात्मना ।
वेधामनु क्रियाकारा दीक्षा शैवी शिखा मता ॥ ५४ ॥

तच्छिखा लिङ्गमित्युक्तं कर्म मायाणुवासना ।
रूपं कर्पूरमाख्यातं तद्गन्धोऽङ्गमितीरितम् ॥ ५५ ॥

एतल्लिङ्गाङ्गसंयोगः शिखिकर्पूरयोगवत् ।
त्रिष्वङ्गेष्वस्य शिष्यस्य लिङ्गत्रयमयं गुरुः ॥ ५६ ॥

संयुयोज त्रिधाभूतं परादीक्षाबलेन तु ।
योगाङ्गे भावलिङ्गं तु वेधादीक्षाबलेन वै ॥ ५७ ॥

मन्त्रदीक्षाबलेनैव भोगाङ्गे प्राणलिङ्गकम् ।
क्रियादीक्षाबलेनायं देशिकस्तस्य चिद्घनम् ॥ ५८ ॥

इष्टलिङ्गं तथा चैव त्यागाङ्गे समयोजयत् ।
योगाङ्गमात्मनोऽङ्गत्वात् कारणाङ्गमितीरितम् ॥ ५९ ॥

भोगाङ्गमन्तरङ्गत्वात् सूक्ष्माङ्गमिति निश्चितम् ।
त्यागाङ्गं बहिरङ्गत्वात् स्थूलाङ्गमिति कीर्तितम् ॥ ६० ॥

जीवात्मा विश्व एव स्यादन्तरात्मा तु तैजसम् ।
परमात्मा भवेत् प्राज्ञ इति तत्त्वविदो विदुः ॥ ६१ ॥

विश्वो जाग्रदवस्थायां स्वप्नाख्यायां तु तैजसः ।
प्राज्ञः सुषुप्त्यवस्थायां लिङ्गत्रयमुपासते ॥ ६२ ॥

एकोऽयं पुरुषो विश्वतैजसप्राज्ञरूपतः ।
सदा स्वाङ्गेषु संयुक्तमुपास्ते लिङ्गमद्वयम् ॥ ६३ ॥

उपासनैव संयोगः संयोगो द्वैतसंलयः ।
द्वैतस्य विलयश्चैव निवृत्तिः परिकीर्तिता ॥ ६४ ॥

निवृत्तिः सैव विश्रान्तिर्विश्रान्तिः परमं पदम् ।
स्फटिकस्वच्छयोर्दीपप्रभयोः करकाम्भसोः ॥ ६५ ॥

कर्पूरगन्धयोर्वायुनभसोर्भोगयोगवत् ।
एवं लिङ्गाङ्गसंयोगविधिना स्वात्मनि स्थिता ॥ ६६ ॥

बीजरूपा परा भक्तिः प्ररोहति समन्ततः ।
आत्मा क्षेत्रं भवेद्भक्तिर्बीजं बीजी महेश्वरः ॥ ६७ ॥

तस्मात् क्षेत्रस्य बीजस्य बीजिनश्च कदाचन ।
वियोगो नेक्ष्यते क्वापि सदा संयोग एव हि ॥ ६८ ॥

अङ्गमात्मेति निर्णीतं लिङ्गं ब्रह्मेति निश्चितम् ।
अङ्गस्य हृदयं लिङ्गं लिङ्गस्य हृदयं तु तत् ॥ ६९ ॥

तयोः कथं वियोगः स्यात् सदा संयोग एव हि ।
योगेन तु परा भक्तिरिति भक्तेस्तु वैभवम् ॥ ७० ॥

अस्याः स्वरूपसद्भावात् सद्भक्तिरिति कीर्तिता ।
तद्भक्त्यैव तथा चास्य भक्तस्थलमुपागतम् ॥ ७१ ॥

आचारलिङ्गसंयुक्तमङ्गं भक्तस्थलं महत् ।
तत्र स्थिता सती भक्तिः सम्पूर्णा निजविष्टया ॥ ७२ ॥

नैष्ठिकी भक्तिरित्येव कीर्तिता भक्तितत्परैः ।
तया माहेश्वरं नाम स्थलमस्य स्वरूपतः ॥ ७३ ॥

गुरुलिङ्गसमायुक्तमङ्गं माहेश्वरस्थलम् ।
तत्र संनिहिता भक्तिर्नैष्ठिकी सावधानतः ॥ ७४ ॥

अवधानात्मिका भक्तिरिति प्रोक्ता महात्मभिः ।
भक्त्या तयाऽस्य जीवस्य प्रसादिस्थलमागतम् ॥ ७५ ॥

शिवलिङ्गसमायुक्तं प्रसादिस्थलमागतम् ।
तत्रैव सुस्थिता भक्तिरवधानात्मिका शुभा ॥ ७६ ॥

स्वानुभूतिनिबन्धेन कीर्तिताऽनुभवात्मिका ।
प्राणलिङ्गि स्थलं चास्य तया भक्त्या समागतम् ॥ ७७ ॥

अङ्गं च चरलिङ्गेन संयुक्तं प्राणलिङ्गि यत् ।
तत्र स्वानुभवाकारा भक्तिरानन्दयोगतः ॥ ७८ ॥

प्रोक्ताऽऽनन्दात्मिका भक्तिरिति वेदान्तवेदिभिः ।
अस्यात्मनस्तया भक्त्या शरणस्थलमागतम् ॥ ७९ ॥

प्रसादलिङ्गसंयुक्तमङ्गं हि शरणस्थलम् ।
तत्र प्रतिष्ठिता साक्षाद्भक्तिरानन्दरूपिणी ॥ ८० ॥

सामरस्यप्रभावेण प्रोक्ता समरसात्मिका ।
ऐक्यस्थलं तया चास्य चेतनस्य समागतम् ॥ ८१ ॥

महालिङ्गसमायुक्तमङ्गमैक्यस्थलं परम् ।
तत्रैवावस्थिता भक्तिः स्वस्मिन् स्वयमवस्थिता ॥ ८२ ॥

षडङ्गयोगमार्गेण साधयत्ययमीश्वरम् ।
युगपत् षट्स्थलावाप्तिः साधकस्यास्य सिध्यति ॥ ८३ ॥

साध्यत्वात् षट् प्रपद्यन्त आचारादिस्थलानि वै ।
भक्त्यादीनि प्रपद्यन्ते साधकत्वात् स्थलानि वै ॥ ८४ ॥

साध्यः परशिवः साक्षादाचारादिषु षट्सु च ।
भक्त्यादिषु स्थलेष्वात्मा साधकोऽयं प्रकीर्त्यते ॥ ८५ ॥

आचारलिङ्गं गुरुरूपलिङ्गं
शिवाख्यलिङ्गं चरनामलिङ्गम् ।
प्रसादलिङ्गं च महात्मलिङ्गं
निवृत्तिमार्गेण षडाहुरार्याः ॥ ८६ ॥

भक्तं माहेश्वरं चैव प्रसादि प्राणलिङ्गि च ।
शरणस्थलमैक्यं हि निवृत्तिलयमार्गतः ॥ ८७ ॥

ब्रह्मा हरिश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
साक्षात्परशिवश्चेति क्रमशः षट्स्थलात्मकाः ॥ ८८ ॥

एवं लिङ्गाङ्गसंयोगविधिरत्र प्रकीर्तितः ।
अस्माभिरादरेणैव शिवप्रोक्तो यथा तथा ॥ ८९ ॥

एतद्यो वेद सोऽविद्याग्रन्थिं विकिरति प्रभुः ।
शिवसिद्धान्तकं तन्त्रं शिवाद्वैतं शिवं पदम् ॥ ९० ॥

इत्यनुभवसूत्रे षट्स्थलनिर्णये लिङ्गाङ्गसंयोगविधिर्नाम
पञ्चमाधिकरणं सम्पूर्णम् ॥

# षष्ठाधिकरणे सर्वाङ्गलिङ्गसाहित्यम्

अथ श्रीशम्भुना प्रोक्तमनन्तार्थप्रकाशकम् ।
सर्वाङ्गलिङ्गसाहित्यं वक्ष्ये संक्षेपरूपतः ॥ १ ॥

सर्वेष्वङ्गेषु सर्वत्र सर्वदा सर्वतोमुखम् ।
लिङ्गं गुरूपदेशेन सुप्रतिष्ठितमात्मनि ॥ २ ॥

प्रकाशते ततोऽमुष्य चेतनस्य निरन्तरम् ।
सर्वाङ्गलिङ्गसाहित्यं प्रोच्यते लिङ्गतत्परैः ॥ ३ ॥

एकमेव परं लिङ्गं लिङ्गेऽस्मिन् सुप्रतिष्ठितम् ।
सर्वतोमुखमाभाति नामरूपक्रियात्मना ॥ ४ ॥

इष्टलिङ्गं तु बाह्याङ्गे प्राणलिङ्गं तथान्तरे ।
भावलिङ्गं तथैवास्मिन्नात्माङ्गे सुप्रतिष्ठितम् ॥ ५ ॥

हृदयाङ्गे महालिङ्गं श्रोत्राङ्गे तु प्रसादकम् ।
त्वगङ्गे चरलिङ्गं तु दृगङ्गे शिवलिङ्गकम् ॥ ६ ॥

जिह्वाङ्गे गुरुलिङ्गं तु नासिकाङ्गे तथैव च ।
आचारलिङ्गमश्रान्तं सुप्रतिष्ठितमेव हि ॥ ७ ॥

यथा ज्ञानेन्द्रियाङ्गेषु क्रमाल्लिङ्गं प्रतिष्ठितम् ।
तथा कर्मेन्द्रियाङ्गेषु क्रमाल्लिङ्गं प्रतिष्ठितम् ॥ ८ ॥

श्रोत्रवाचोर्न भेदोऽस्ति शब्दस्य वचनस्य च ।
स्पर्शमादानयोस्तद्वद् भेदो नहि करत्वचोः ॥ ९ ॥

न नेत्रपादयोर्भेदो रूपस्य गमनस्य च ।
भेदो नानन्दरसयोर्न जिह्वागुह्ययोस्तथा ॥ १० ॥

नासिकागुदयोर्भेदो नास्ति गन्धविसर्गयोः ।
अस्ति चेदप्रमाणं स्याच्छ्रुतिः सत्यार्थवादिनी ॥ ११ ॥

श्रोत्रस्य वाचः शब्दस्य विभोर्व्योम्नस्तथैव च ।
ईश्वरीमीश्वरस्यैनामीशानाख्यां विदुर्बुधाः ॥ १२ ॥

त्वक्पाणिस्पर्शवायूनामीश्वरीं मूर्तिमैश्वरीम् ।
पुरुषाख्यां विदुः पूर्वे पुराणागमवेदिनः ॥ १३ ॥

चक्षुषश्चरणस्यापि रूपस्याग्नेस्तथैव च ।
अघोराख्यामधिष्ठात्रीं मूर्तिमाहुर्मनीषिणः ॥ १४ ॥

रसनाया उपस्थस्य रसस्यापां तथैव च ।
ईश्वरीं वामदेवाख्यां मूर्तिं मुनिवरा विदुः ॥ १५ ॥

घ्राणस्य चैव पायोश्च गन्धस्यं च भुवस्तथा ।
सद्योजाताह्वयां मूर्तिमीश्वरीं संप्रचक्षते ॥ १६ ॥

ज्ञानकर्मात्मनां खानामाश्रयं हृदयं भवेत् ।
आश्रयत्वात् खनैर्मल्याद् ज्ञानकर्मोभयात्मकम् ॥ १७ ॥

इन्द्रियाणां तु सर्वेषामवकाशप्रदत्वतः ।
हृदयाकाश इत्येतत् प्रोच्यते मतिमत्तमैः ॥ १८ ॥

स्थूलाङ्गे स्थूलरूपेण सूक्ष्माङ्गे सूक्ष्मरूपतः ।
कारणे कारणत्वेन तिष्ठन्त्येतानि खानि हि ॥ १९ ॥

तेष्वेषु खेषु सर्वेषु लिङ्गं सत्यादिलक्षणम् ।
गुरूपदेशसंसिद्धं भासते सर्वतोमुखम् ॥ २० ॥

एतल्लिङ्गमुखं यत्र दृश्यते सूक्ष्मदर्शिभिः ।
यदामनन्ति वेदाश्च तपांसि नियमास्तथा ॥ २१ ॥

हृदयं हृदयस्येति श्रोत्रं श्रोत्रस्य सर्वदा ।
वाचो वाक् त्वक्त्वचः पाणिः पाणेश्चक्षुश्च चक्षुषः ॥ २२ ॥

पादः पादस्य जिह्वाया जिह्वा गुह्यस्य गुह्यकम् ।
नासिका नासिकायाश्च पायोः पायुरिति स्थितिः ॥ २३ ॥

तल्लिङ्गमुखमित्याहुः शिवसिद्धान्ततान्त्रिकाः ।
प्रत्येकं लिङ्गमस्यैव मुखं वक्ष्ये पृथक् पृथक् ॥ २४ ॥

घ्राणस्य घ्राणमाचारलिङ्गस्य मुखमुच्यते ।
जिह्वायाश्च तथा जिह्वा गुरुलिङ्गमुखं भवेत् ॥ २५ ॥

चक्षुषश्च तथा चक्षुः शिवलिङ्गमुखं भवेत् ।
त्वचस्त्वक् चररूपस्य लिङ्गस्य मुखमुच्यते ॥ २६ ॥

मुखं प्रसादलिङ्गस्य श्रोत्रं श्रोत्रस्य कथ्यते ।
हृदयं हृदयस्यैव महालिङ्गमुखं भवेत् ॥ २७ ॥

एवं लिङ्गमुखं प्रोक्तं सुप्रसिद्धमनन्तरम् ।
भक्तादिषट्स्थलानां च हस्तभेदः प्रदर्श्यते ॥ २८ ॥

वस्तुनो भाव उत्पन्नो भावाज्ज्ञानसमुद्भवः ।
ज्ञानान्मनः समुत्पन्नं मनसोऽहङ्कृतिस्तथा ॥ २९ ॥

अहङ्कारात्ततो बुद्धिर्बुद्धेश्चित्तस्य सम्भवः ।
एतेषां लक्षणं वक्ष्ये भावादीनामनुक्रमात् ॥ ३० ॥

अस्तीत्यारभ्यते वस्तु तत्सत्ता भाव उच्यते ।
ज्ञानं जानाति तं नित्यं मनस्तन्मनुते सदा ॥ ३१ ॥

अहं तदित्यहङ्कारो बुद्धिस्तन्निश्चिनोति हि ।
चित्तं स्थैर्यगुणेनैव तथैतद्वस्तुसाधकम् ॥ ३२ ॥

चित्तं भक्तस्य हस्तः स्याद् बुद्धिर्माहेश्वरस्य च ।
प्रसादिनस्तथा हस्तो ह्यहङ्कार उदीर्यते ॥ ३३ ॥

मनो हस्तो भवत्येव महतः प्राणलिङ्गिनः ।
ज्ञानं हस्तो भवेदस्य शरणस्य महात्मनः ॥ ३४ ॥

ऐक्यस्य भावो हस्तः स्यादेवमेवोत्तरोत्तरम् ।
आत्माङ्गं भावहस्तं स्यान्महालिङ्गार्चने रतम् ॥ ३५ ॥

ऐक्यस्थलमिति प्राहुः साक्षाद्वेदान्तपारगाः ।
व्योमाङ्गं ज्ञानहस्तं स्यात् प्रसादार्चनतत्परम् ॥ ३६ ॥

शरणस्थलमित्याहुः शिवयोगपरायणाः ।
अनिलाङ्गं मनोहस्तं चरलिङ्गार्चने रतम् ॥ ३७ ॥

प्राणलिङ्गिस्थलं साक्षादित्याहुः शिवधार्मिकाः ।
अनलाङ्गमहंहस्तं शिवलिङ्गार्चने रतम् ॥ ३८ ॥

प्रसादिस्थलमित्याहुराचार्याः शिवशास्त्रिणः ।
जलाङ्गं बुद्धिहस्तं च गुरुलिङ्गार्चने रतम् ॥ ३९ ॥

माहेश्वरस्थलं साक्षादिति प्राहुर्मनीषिणः ।
भूम्यङ्गं चित्तहस्तं च सदाचारार्चने रतम् ॥ ४० ॥

भक्तस्थलमिति प्राहुः शिवसिद्धान्तवेदिनः ।
एवमङ्गं च हस्तं च लिङ्गं च मुखमत्र च ॥ ४१ ॥

यथावदानुपूर्व्येण प्रावोचमहमादरात् ।
ततः पञ्चाक्षरीविद्यासाहित्यमधुनोच्यते ॥ ४२ ॥

पञ्चाक्षरी परा विद्या सतारा तु षडक्षरी ।
स्थूलसूक्ष्मादिभेदेन स्वयमेवाष्टधा स्थिता ॥ ४३ ॥

शिवमन्त्राभिधा मन्त्रमातृका लिङ्गरूपिणी ।
शिवप्रदायिनी नित्यं सर्वाङ्गेषु प्रतिष्ठिता ॥ ४४ ॥

अङ्गं नमःपदमसौ शिव एव लिङ्गं
सम्बन्ध एष यदयेतिपदं तदुक्तम् ।
लिङ्गाङ्गसंगमपदत्रयबोधनार्थं
मन्त्रोऽयमेवमभिधास्यति मन्त्रराजः ॥ ४५ ॥

नमःपदं तत्खलु जीववाचि
शिवःपदं तत्परमात्मवाचि ।
अयेति तादात्म्यपदं तदेतद्
नमः शिवायेति जगाद मन्त्रः ॥ ४६ ॥

मूलाधारे नकाराख्या संस्थिता परमेश्वरी ।
अनाहते वकाराख्या सदा शैवी व्यवस्थिता ॥ ४७ ॥

विशुद्धौ तु यकाराख्या साक्षाद्विश्वेश्वरी स्थिता ।
आज्ञाचक्रे महादेवी ताराख्या समुपस्थिता ॥ ४८ ॥

आचाराख्यं नकारः स्यान्मकारो गुरुलिङ्गकम् ।
शिकारः शिवलिङ्गं स्याद्वाकारश्चरलिङ्गकम् ॥ ४९ ॥

यकारः स्यात्प्रसादाख्यमोङ्कारो महदुच्यते ।
षष्ठं ब्रह्म भवेत्तारं यकारः पञ्चमं भवेत् ॥ ५० ॥

चतुर्थं तु वकारः स्याच्छिकारस्तु तृतीयकम् ।
द्वितीयं तु मकारः स्यान्नकारः प्रथमं भवेत् ॥ ५१ ॥

एवं षडक्षराण्येव ब्रह्माणि क्रमशो विदुः ।
ॐकारः परिपूर्णत्वात् त्वचि सर्वत्र तिष्ठति ॥ ५२ ॥

नकारो रुधिरे स्थाति मकारो मांससंचये ।
शिकारो मेदसि स्थाति वकारोऽस्थिषु तिष्ठति ॥ ५३ ॥

यकारः स्थाति मज्जायां शुक्ले स्थाति षडात्मकः ।
एवं षडक्षरमयं शिववन्मूर्तिसुस्थितम् ॥ ५४ ॥

देहं ममेति यो ध्यायेत् सोऽहमेव न संशयः ।
सर्वाङ्गलिङ्गसाहित्यमेवमेव मयोदितम् ॥
शिवप्रणीतवाक्यार्थं सम्यग्वीक्ष्य समासतः ॥ ५५ ॥

एतद्यो वेद सोऽविद्याग्रन्थिं विकिरति प्रभुः ।
शिवसिद्धान्तकं तन्त्रं शिवाद्वैतं शिवं पदम् ॥ ५६ ॥

इति वातुलोत्तरतन्त्रे शिवानुभवसूत्रे षट्स्थलनिर्णये
सर्वाङ्गलिङ्गसाहित्यं नाम षष्ठाधिकरणम् ॥

# सप्तमाधिकरणे अर्पणसद्भावः

अथ क्रियासु सर्वासु निर्लेपत्वाय चात्मनः ।
श्रीलिङ्गार्पणसद्भावमीश्वरोक्तं मनाग् ब्रुवे ॥ १ ॥

द्वेधा लिङ्गार्पणविधिः प्रोच्यते देशिकोत्तमैः ।
क्रियामतार्पणं किञ्चित् किञ्चिज्ज्ञानमतार्पणम् ॥ २ ॥

यथाकालोचितैर्द्रव्यैर्यदृच्छासम्भवैः स्वयम् ।
स्वोपभोगाय यत्कार्यं त्रिषु लिङ्गेषु सादरम् ॥ ३ ॥

तत्क्रियार्पणमित्याहुरर्पणैकविशारदाः ।
षट्सु लिङ्गेषु सर्वत्र सार्वकालिकरूपतः ॥ ४ ॥

स्वयमागतवस्तूनि ज्ञात्वा तत्तन्मुखेषु च ।
अनिच्छाविधिना कार्यमेतज्ज्ञानार्पणं विदुः ॥ ५ ॥

क्रियार्पणं वदाम्यत्र साम्प्रतं द्रव्यशुद्धये ।
या या क्रिया विधातव्या प्रस्तुता जायते पुरा ॥ ६ ॥

तां तां कुर्यान्महादेवसमर्पणधिया सुधीः ।
शिवार्पितानि द्रव्याणि न बन्धाय न मुक्तये ॥ ७ ॥

साक्षाच्छिवप्रसादाय इति शैवी परां स्थितिः ।
ततोऽर्पणविधानोऽत्र सूक्ष्मासूक्ष्मविभेदतः ॥ ८ ॥

विधीयते सदैवास्य स्वोपभोगाय चात्मनः ।
आत्मोपभोगजातानि द्रव्याणि त्रिविधानि हि ॥ ९ ॥

स्थूलाख्यं प्रविविक्ताख्यमानन्दाख्यमिति त्रिधा ।
स्थूलद्रव्यं भवेद्रूपं प्रविविक्तं रुचिर्भवेत् ॥ १० ॥

आनन्दस्तु भवेत्तृप्तिरेवमेव पृथक् क्रमात् ।
बहिरङ्गार्पणे रूपमन्तरङ्गार्पणे रुचिः ॥ ११ ॥

आत्मसङ्गमयं साक्षादानन्दार्पणमुच्यते ।
आत्माङ्गार्पणमेवात्र तृप्तिरित्यभिधीयते ॥ १२ ॥

रूपद्रव्यार्पको विश्व इष्टलिङ्गे स्वभावतः ।
रुचिद्रव्यार्पकः साक्षात् प्राणलिङ्गे तु तैजसः ॥ १३ ॥

भावलिङ्गे सदा प्राज्ञ आनन्दार्पक उच्यते ।
यद्रूपमर्पितं लिङ्गे तद्रूपं भोक्तुमर्हति ॥ १४ ॥

रूपान्तरं न भोक्तव्यं भुक्तं चेत्तदनर्पितम् ।
यथा भुक्तिक्रिया पुंसि क्रमेणानुप्रवर्तते ॥ १५ ॥

सुप्रतिष्ठितलिङ्गस्य न यथा पूर्वभावना ।
तथा शिवप्रसादस्य पूर्वनाम न संस्मरेत् ॥ १६ ॥

पूजादौ पूजान्ते भवेदयं भक्तितः पदार्थतनुः ।
पूजान्ते पूजादौ प्रपदेत् पुनरेष हि प्रसादतनुम् ॥ १७ ॥

पदार्थकायः पूजायां भक्तो भक्तिप्रभावतः ।
प्रसादकायः पूजान्ते पुनः पूजाक्रियावधिः ॥ १८ ॥

यद्रूपं वस्तुनामार्चाकाले लिङ्गमुखार्पितम् ।
तद्रूपं पुनरर्चाकालपर्यन्तं प्रसादकम् ॥ १९ ॥

लिङ्गस्य पूजावसरें द्रव्यं दत्तं शुभं भवेत् ।
अनावसरिकं दत्तमशुभं तदनर्पितम् ॥ २० ॥

लिङ्गस्यावसरे यत्तद् द्रव्यं दत्तं शुभं भवेत् ।
आत्मनोऽवसरे दत्तमशुभं तदनर्पितम् ॥ २१ ॥

इष्टलिङ्गार्पितं शुद्धं प्राणलिङ्गमुखार्पितम् ।
सिद्धं ततः प्रसिद्धं हि भावलिङ्गार्पितं विदुः ॥ २२ ॥

तत्तदर्पणतो लब्धं प्रसादं तत्तदादरात् ।
भुङ्क्ते यत्नात् स्वयं विश्वतैजसप्राज्ञरूपतः ॥ २३ ॥

जाग्रत्स्वप्नसुषुप्त्यादिसर्वावस्थासु सर्वदा ।
लिङ्गार्पितोपभोगेन निर्लेपोऽयं न संशयः ॥ २४ ॥

त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यो भवेत् ।
त्रिविधं प्रति यो वेद स भुञ्जानो न लिप्यते ॥ २५ ॥

ज्ञानार्पणमतो वक्ष्ये स्वानुभूत्यैकगोचरम् ।
सर्वेन्द्रियमुखागामि द्रव्यदोषनिवृत्तये ॥ २६ ॥

सोऽयं षट्स्थलरूपेण तत्तल्लिङ्गमुखार्पितम् ।
प्रसादमादरेणैव स्वतः सिद्धं समश्नुते ॥ २७ ॥

षडक्षरात्मके लिङ्गे सर्वाङ्गे सुप्रतिष्ठिते ।
तत्रैव चार्पितं सर्वमित्याहुः श्रुतयः खलु ॥ २८ ॥

ओमिति जगदखिलं स्याद्
नम इति न ममेदमपि शिवायेति ।
समर्पकोऽयं मन्त्रः
षडक्षरो मन्त्रनायको जयति ॥ २९ ॥

न ममेदं जगत्सर्वं शिवायेति शिवार्पणम् ।
अभिधत्ते द्विमात्राढ्यो मन्त्रो लुप्तमकारकः ॥ ३० ॥

तस्मादर्पणसद्भावज्ञानमेव समभ्यसेत् ।
अथ गन्धो रसो रूपं स्पर्शः शब्दस्ततः परम् ॥ ३१ ॥

परिणामः पदार्था हि षडेते सार्वकालिकाः ।
एकैकस्य पदार्थस्य नानाभेदाः पृथक् पृथक् ॥ ३२ ॥

गन्धादय इमे मात्राः पृथ्व्यादीनामनुक्रमात् ।
एकस्मिन् वस्तुनि रतास्ते सर्वे ह्येकरूपतः ।
चन्दनादिमयो गन्धो मधुरादिमयो रसः ॥ ३३ ॥

वैद्युतादिमयं रूपं स्पर्शो मृद्वादितन्मयः ।
स्वान्नादादिमयः शब्दः परिणामस्ततः परः ॥ ३४ ॥

सुखादिमय इत्येवं नानाभेदाः प्रकीर्तिताः ।
एवम्भूतेषु सर्वेषु पदार्थेषु निरन्तरम् ॥ ३५ ॥

लिङ्गार्पणधिया आत्मा प्रसादसुखमश्नुते ।
द्रव्याण्येतानि सर्वाणि विभज्य स्वस्वरूपतः ।
लिङ्गार्पणधिया भुङ्क्ते तानि वस्तूनि सर्वदा ॥ ३६ ॥

भक्तोऽयमात्मा स्वयमेव गन्ध-
मा‍चारलिङ्गार्पितमादरेण ।
भुङ्क्ते सदा सन्निहितः स्वभावात्
प्रसादरूपेण समागतं हि ॥ ३७ ॥

माहेश्वरोऽयं गुरुलिङ्गमूर्ते-
र्मुखे सदैवार्पितमाकलय्य ।
प्रसादभूतं रसमानुकूल्य-
स्वभावतः सादरमेव भुङ्क्ते ॥ ३८ ॥

रूपं पदार्थं शिवलिङ्गवक्त्रे
समर्पितं सन्ततमेव भक्त्या ।
स्वयं समायातमुपाधियोगा-
दयं प्रसादी भजते प्रसादम् ॥ ३९ ॥

स्पर्शं समादाय बहुप्रकारं
समर्पितं यच्चरलिङ्गवक्त्रे ।
भुङ्क्ते प्रसादात्मतयोपलब्धं
यः प्राणलिङ्गी स्वयमेवमात्मा ॥ ४० ॥

य एष नित्यं शरणस्थलात्मा
प्रसादलिङ्गार्पितमेव शब्दम् ।
स्वयं गृहीत्वा विविधोपदिष्टं
प्रसादभोगं कुरुते स्वभावात् ॥ ४१ ॥

ऐक्यात्मकोऽयं परिणामवस्तु
सदा महालिङ्गसमर्पितं हि ।
स्वभावसिद्धं निजभक्तियोगा-
न्निषेवते तृप्तिघनप्रसादम् ॥ ४२ ॥

एवं षडङ्गस्थलरूपतोऽसौ
स्वस्मिन् स्थिते षड्विधलिङ्गतत्त्वे ।
समर्पितं षड्विधवस्तुजातं
प्रसादरूपेण सदैव भुङ्क्ते ॥ ४३ ॥

आचारायार्पिता पृथ्वी गुरोरापः समर्पिताः ।
शिवाय चार्पितं तेजश्चराय मरुदर्पितः ।
प्रसादायार्पितं व्योम जीवात्मा महतेऽर्पितः ॥ ४४ ॥

आचारे दिव्यलिङ्गे निरुपमनिजभक्तस्थलाङ्गैक्यभाजि
घ्राणाख्ये चित्तहस्तेन च घनसुखहेतौ क्रियाशक्तियुक्ते ।
घ्रातव्यं द्रव्यमभ्यर्पणविषयविधानोपदिष्टं समर्प्य
प्रायः सद्भक्तिपूर्णः स्वयमयमिह गन्धप्रसादं भजेत ॥ ४५ ॥

स्वाङ्गे माहेश्वरात्मन्युपमसहजज्ञानशक्तिप्रयुक्ते
जिह्वास्ये सुप्रसिद्धे परतरगुरुलिङ्गाभिधे संस्थितेऽस्मिन् ।
निष्ठाभक्तिप्रभावप्रणिहितसुमहाबुद्धिहस्तेन विद्वान्
रस्यं द्रव्यं समर्प्य स्वयममलरसाख्यं प्रसादं भजेत ॥ ४६ ॥

योऽसौ नित्यं प्रसादिस्थलपरमपदप्राप्तदिव्याङ्गभाजि
स्वेच्छाशक्तिप्रयुक्ते दृशि जगति मुखे पाणिनाऽहंकृतेन ।
साक्षाल्लिङ्गे शिवाख्ये सविनयमवधानात्मताभक्तियुक्तो
द्रष्टव्यांशं समर्प्यार्पणविनिहितरूपप्रसादं भजेत ॥ ४७ ॥

संसक्ते प्राणलिङ्गिस्थलनिहितनिजाङ्गे मनःपाणिनाऽसौ
लिङ्गे साक्षाच्चराख्ये त्वचि जगति मुखे ह्यादिशक्तिप्रयुक्ते ।
स्प्रष्टव्यं चार्पयित्वा स्वयमनुभवभक्तिप्रभावोपपन्नो
नित्यं स्पर्शप्रसादं निरतिशयसुखं तत्त्ववेत्ता भजेत ॥ ४८ ॥

लिङ्गे साक्षात्प्रसादे विमलशरणसंज्ञाङ्गसंस्थापितेऽस्मिन्
श्रोतव्यं श्रोत्रवक्त्रे निखिलमिह पराशक्तियुक्ते समर्प्य ।
आनन्दाकारभक्तिस्फुटतरपरमज्ञानहस्तेन सोऽयं
शब्दाख्यं तत्प्रसादं स्वयमविरतमत्याश्रमस्थो भजेत ॥ ४९ ॥

ऐक्याङ्गं भाजि लिङ्गे महति हृदि मुखे चिन्महाशक्तियुक्ते
नित्यं भावेन हस्तेन च समरसभक्तिप्रसक्तः स्वयं सन् ।
स्मर्तव्यं चार्पयित्वा विशदमतिरवश्यं सदैवार्पणीयं
तस्माल्लब्धं विशुद्धं घनतरपरिणामप्रसादं भजेत ॥ ५० ॥

अङ्गं च लिङ्गं च मुखं च हस्तौ
भक्तिश्च शक्तिश्च तथार्पणं च ।
प्रसाद इत्यष्टविधस्थलानि
प्रतिस्थलं षट्स्थलसंज्ञितानि ॥ ५१ ॥

अङ्गं च लिङ्गं सदेव जातं
भक्तिश्च शक्तिश्च तथा चिदेव ।
आनन्द एव स्वयमर्पणं च
प्रसादरूपश्च भवेत् त्रितत्त्वम् ॥ ५२ ॥

सवितुःपदमङ्गं स्याद्भर्गपदं लिङ्गमेव सम्बन्धः ।
धीमहिपदमित्येषा गायत्र्याहाङ्गलिङ्गसम्बन्धम् ॥ ५३ ॥

जीवः सविता देवः परमो भर्गस्तदर्थकं वरणीयम् ।
अनयोरैक्यं धीमहिपदमेषा प्राह जीवपरमैक्यम् ॥ ५४ ॥

अङ्गं जीवः परमो लिङ्गं सम्बन्ध एव तादात्म्यम् ।
तद्वत् पदार्थरूपं प्रसादरूपं समर्पणं त्रिविधम् ॥ ५५ ॥

पदार्थरूपो जीवश्च प्रसादः परमो भवेत् ।
समर्पणश्च तादात्म्यमिति शैवी परा स्थितिः ॥ ५६ ॥

एकधा च त्रिधा षड्धा नवधा च प्रवर्तते ।
स्वयमेव परं लिङ्गं न ततोऽन्यच्च किञ्चन ॥ ५७ ॥

नवलिङ्गान्यविज्ञाय तन्मुखान्यर्पणानि च ।
कथं निर्लेपतामेति सर्वेष्विन्द्रियकर्मसु ॥ ५८ ॥
लेपोऽङ्गं न जहेज्जातु तज्ज्ञं स्पृशति न क्वचित् ।
सर्पिषा लिप्यते पाणी रसना नैव लिप्यते ॥ ५९ ॥
यथा कालिकया दृष्टौ सम्पृक्ताऽपि न लिप्यते ।
पक्ष्मणोरन्तरा तारा तथा सम्यक् शिवात्मवित् ॥ ६० ॥
शरीरादिपदार्थांश्च दत्त्वा दानं समर्पणम् ।
समर्प्य सोऽहमस्मीति दासोऽहंभाव उच्यते ॥ ६१ ॥
इन्द्रियादागतं किञ्चिद्यत्सुखं तच्छिवार्पितम् ।
तत्प्रसादं तु भोक्तव्यं तदिन्द्रियमुखेन च ॥ ६२ ॥
येन गन्धरसौ रूपस्पर्शशब्दरतिक्रियाः ।
एतेनैव विजानाति किमत्र परिशिष्यते ॥ ६३ ॥
एवं लिङ्गाऽर्पितं सर्वमिति यो वेत्ति तत्त्वतः ।
सोऽश्नुते सकलान् भोगान् विपश्चिद् ब्रह्मणा सह ॥ ६४ ॥
लिङ्गदेही शिवात्मायं लिङ्गाचारो न लौकिकः ।
सर्वं लिङ्गमयं रूपं लिङ्गेन सममश्नुते ॥ ६५ ॥
सर्वाङ्गलिङ्गमेव स्यादन्नपानाद्यमर्पितम् ।
प्रसादस्तृप्तिरेव स्यात् सर्वं लिङ्गमयत्वतः ॥ ६६ ॥
एतदर्पणसद्भावज्ञानं वेदान्तवाक्यजम् ।
गुरूपदेशतः साध्यं नान्यथा शास्त्रकोटिभिः ॥ ६७ ॥
श्रीलिङ्गार्पणसद्भावमवोचं परमार्थतः ।
अर्पितं च प्रसादं च भोगं निर्लेपतां प्रति ॥ ६८ ॥
एतद्यो वेद सोऽविद्याग्रन्थिं विकिरति प्रभुः ।
शिवसिद्धान्तकं तन्त्रं शिवाद्वैतं शिवं पदम् ॥ ६९ ॥

इति वातुलोत्तरतन्त्रे शिवानुभवसूत्रे षट्स्थलनिर्णये
लिङ्गार्पणसद्भावो नाम सप्तमाधिकरणम् ॥



## अष्टमाधिकरणे क्रियाविश्रान्तिः

क्रियाविश्रान्तिमाचक्षे साक्षादीश्वरभाषिताम् ।
देव्यै रहस्यरूपेण तामिदानीं समासतः ॥ १ ॥

अस्यात्मनः क्रियाः सर्वा लिङ्गार्पिततया स्थिताः ।
स्वस्मिन्नेव स्वयं यान्ति विश्रान्तिं सुखलक्षणाम् ॥ २ ॥

प्रोच्यते परमार्थज्ञैः क्रियाविश्रान्तिरित्यतः ।
क्रियाविश्रान्तिरेवात्र सम्यग्ज्ञानं न संशयः ॥ ३ ॥

सम्यग्ज्ञानमहं साक्षाच्छिव एवेति वेदनम् ।
वेदनेनैव तेनायमाप्तकामः सुखी भवेत् ॥ ४ ॥

आप्तकामस्य सुखिनः कामाचारा बहिर्मुखाः ।
प्रवृत्ता लौकिकाः सर्वे प्रययुर्नाशमात्मनि ॥ ५ ॥

प्रनष्टेष्वेषु सर्वेषु स्वेच्छाचारेण यत्कृतम् ।
तच्छिवार्चनमेव स्याद्यद् भुक्तं तच्छिवार्पितम् ॥ ६ ॥

शिवरूपतया सर्वं यस्य भाति स्वरूपतः ।
स्वेच्छाचारसमाचारः तस्य चार्चा हि शूलिनः ॥ ७ ॥

एवमर्चनमीशस्य स्वेच्छाचारनिबन्धना ।
भवत्येव न सन्देहः शिवोऽहमिति वेदनात् ॥ ८ ॥

अहमिति शिव एव सत्यचिद्घनः
स्फुरति तथा पृथगस्ति नैव वस्तु ।
इदमिति वपुषा न तेन बन्धनं
नहि शरणस्य विमोचनं न किञ्चित् ॥ ९ ॥

बन्धमुक्त्योरभावे हि भक्तिरुक्ता निरर्गला ।
न बन्धे मोचने चापि न तयोश्च समुच्चये ॥ १० ॥

बन्धे सति विमुक्तिः स्यात् सत्यां मुक्तौ च बन्धनम् ।
अन्यस्यापगमादन्य आगमिष्यति केनचित् ॥ ११ ॥

परस्परानुबन्धेन वर्तेते बन्धमोचने ।
तस्मात्तयोरभावे तु भक्तिरुक्ता निरङ्कुशा ॥ १२ ॥

न योगो न तपो नार्चाक्रमः कोऽपि हि विद्यते ।
अमाये शिवमार्गेऽस्मिन् भक्तिरेका प्रशस्यते ॥ १३ ॥

भक्तिः सत्त्वगुणस्था रजोगुणाढ्या तमोगुणप्रथिता ।
स्वातन्त्र्येण सलीला प्रवर्तते शिवसमर्पिता शुद्धा ॥ १४ ॥

सत्त्वरजस्तमसामप्यतिरिक्ता भक्तिरेभिरुपपन्ना ।
स्वविशुद्धतया तानप्येकाकारान् करोति हि त्रिगुणान् ॥ १५ ॥

न राजसो गुणो भक्तौ परायां नैव तामसः ।
न सात्त्विकगुणोऽपि स्यात् स्वगुणैरगुणैव सा ॥ १६ ॥

रौप्यं ताम्रमयोघनं त्रितयमेतत्सात्त्विकं राजसं
प्रोक्तं तामसमेषु च त्रिषु विलेपं संश्रितोऽपि स्वयम् ।
कुर्यात्सिद्धरसः स्वनिर्मलतया लोहत्रयं तद्यथा
स्वर्णं षोडशवर्णपूर्णमकरोद्भक्तिस्तथा त्रीन् गुणान् ॥ १७ ॥

यथा सिद्धरसो लोहत्रयं चैकप्रकारतः ।
कुर्यात् स्वर्णं तथा भक्तिरतिः शैवं गुणत्रयम् ॥ १८ ॥

कस्तूरीहिमकुङ्कुमानि हि तमस्सत्त्वंरजोवर्णतः
कृष्णं शुभ्रमथारुणं यदुपरि प्राप्ता शिवैकात्मिका ।
भक्तिः स्वात्मगुणात्मिका जयति तत्सद्वासनारूपिणी
नैर्गुण्ये परमे पदे किमिह वक्ष्ये भक्तियोगस्थितिम् ॥ १९ ॥

अहं कर्ता समस्तस्य धर्माधर्मस्य कर्मणः ।
इत्यनेनाभिमानेन कर्मकाण्डोऽयमुच्यते ॥ २० ॥

नाहं कर्ताऽस्य कर्तृत्वं नैव साक्षी स्वभावतः ।
इत्यनेनाभिमानेन ज्ञानकाण्डोऽयमुच्यते ॥ २१ ॥

न कर्ताऽहं न साक्षी च शिव एवेति कर्मणोः ।
द्वयाभिमानराहित्यं भक्तिकाण्डोऽयमुच्यते ॥ २२ ॥

शुक्तिः कर्मपदं सरोरुहदलं ज्ञानं पदं भाक्तिकं
तप्तायोघनमेषु संसृतिपयोबिन्दुः स्थितस्तत्क्रमात् ।
साफल्यं विफलत्वमाकृतितया प्रायेण नाशं गतो
नाम्नाप्येव शिवात्मिकां परतरां भक्तिं किमाचक्ष्महे ॥ २३ ॥

स्वच्छन्दाचारवर्तिन्या भक्त्या यत्कृतमर्चनम् ।
यद्भुक्तमर्पितं लिङ्गे मनोवाक्कायकर्मभिः ॥ २४ ॥

गन्धपुष्पादिगन्धस्य ग्रहणं यत्तदर्चनम् ।
षड्रसास्वादनं यत्तन्नैवेद्याय प्रकल्पितम् ॥ २५ ॥

इन्द्रियाकारभावेन विषयाकारतः स्वयम् ।
क्रीडया देवता भुङ्क्ते स्वत इत्यर्चनं मतम् ॥ २६ ॥

शिलालेखा स्थलीलेखा जललेखा त्रिधा क्रमात् ।
शुभाशुभात्मिका कर्मज्ञानभक्तिक्रिया मता ॥ २७ ॥

नैव लोप्या शिलालेखा स्थलीलेखा च लुप्यते ।
नादौ लेखायते चान्ते जललेखा न लुप्यते ॥ २८ ॥

शुभकर्माशुभं कर्म ज्ञानकर्म प्रसादकम् ।
एतच्चतुर्विधं कर्म तत्तत्फलविधायकम् ॥ २९ ॥

पापान्नरकः पुण्यात् स्वर्गस्ताभ्यां विनैव कर्मभ्याम् ।
ज्ञानान्मोक्षस्तैस्त्रिभिरेव विना स्यात् प्रसादतो भक्तिः ॥ ३० ॥

प्रसादादेव सा भक्तिः प्रसादो भक्तिसम्भवः ।
यथैवाङ्कुरतो बीजं बीजतो वा यथाङ्कुरः ॥ ३१ ॥

ज्ञानं ब्रूते भक्तिः कुरुते शिवजीवयोः पृथग्भावम् ।
तेन ज्ञानं पूर्वं भक्तिस्तूत्तरतया विभाति ततः ॥ ३२ ॥

आत्मानं च पृथक् कृत्वा प्रेरितारं तथा पृथक् ।
असौ जुष्टस्ततस्तेन ह्यमृतत्वाय कल्पते ॥ ३३ ॥

आत्मोपासक ईश्वरः स्वयमुपास्यः सर्वदैवेत्यसौ
भक्तिर्भोगकरी करोति शिवमात्मानं च कृत्वा पृथक् ।
यत्तत्क्षीरघृतारणीहुतवहस्रोतोऽम्बुवत् संयुतं
जीवेशैक्यपदं विभज्य परतोऽप्यस्यामृतत्वाय हि ॥ ३४ ॥

नेत्रे चाल्पविलोकिते सति पृथक्त्वं याति यत्तच्चिरं
रूपं वस्तु तदेकमेव पुरुषेणाश्चर्यसंस्पृग्धिया ।
कृत्वा भूय उभे समे यदि दृशौ तेनेक्षिते सत्यभूद्
रूपं पूर्ववदेकमेव विमलं चैकं स्वभावेन हि ॥ ३५ ॥

एवमद्वैतभक्त्यैव प्रसादः सर्वतोमुखः ।
प्रसिद्ध्यति ततः सर्वमात्मरूपेण दृश्यते ॥ ३६ ॥

कर्ता कारयिता कर्म करणं कार्यमेव च ।
सर्वमात्मतया भाति प्रसादात् पारमेश्वरात् ॥ ३७ ॥

भोक्ता भोजयिता भोगो भोगोपकरणानि च ।
सर्वमात्मतया भाति प्रसादात् पारमेश्वरात् ॥ ३८ ॥

ग्राहकश्च तथा ग्राह्यं ग्रहणं सर्वतोमुखम् ।
सर्वमात्मतया भाति प्रसादात् पारमेश्वरात् ॥ ३९ ॥

जीवात्मा परमात्मा च तयोर्भेदश्च भेदकः ।
सर्वमात्मतया भाति प्रसादात् पारमेश्वरात् ॥ ४० ॥

शरीरमिन्द्रियं प्राणा मनो बुद्धिरहङ्कृतिः ।
सर्वमात्मतया भाति प्रसादात् पारमेश्वरात् ॥ ४१ ॥

विधयश्च निषेधाश्च निषिद्धकरणान्यपि ।
सर्वमात्मतया भाति प्रसादात् पारमेश्वरात् ॥ ४२ ॥

कामक्रोधादयः सर्वे तथा शान्त्यादयोऽपि च ।
सर्वमात्मतया भाति प्रसादात् पारमेश्वरात् ॥ ४३ ॥

तस्माद्द्वैतगां भक्तिमाश्रयेत् सर्वसिद्धिदाम् ।
न च द्वैतात्मिकां भक्तिं क्लेशहेतुप्रदायिनीम् ॥ ४४ ॥

अन्योन्यप्रार्थकं द्वैतं समसंयोगयोस्तयोः ।
कः कं भजति भक्त्या सा भक्तिरद्वैतगा नहि ॥ ४५ ॥

अद्वैतपदरूढा या भक्तिरद्वैतलक्षणा ।
सैवाद्वैताभिधा भक्तिरन्या केवलकल्पिता ॥ ४६ ॥

द्वैतभक्त्या हि संसारवर्धनं भिन्नरूपतः ।
अभिन्नरूपतोऽद्वैतभक्त्या संसारनाशनम् ॥ ४७ ॥

द्वैतभक्तिः प्रपञ्चाख्या केनचित् कल्पिता मृषा ।
अद्वैतभक्तिरचला निर्विकल्पा निरञ्जना ॥ ४८ ॥

द्वैतभक्तिनिवृत्तौ हि साक्षादद्वैतलक्षणा ।
भक्तिर्गरीयसी भाति निजर्वाणनिरूपिणी ॥ ४९ ॥

अद्वैतभक्तियुक्तस्य योगिनः सकलक्रिया ।
आस्ते दग्धपटन्यायात् क्रियामात्रा हि न क्रिया ॥ ५० ॥

क्रियामात्रा क्रिया नैव प्रतिबन्धाय देहिनाम् ।
केवला निर्मला शुद्धा फलकामविवर्जिता ॥ ५१ ॥

फलकामप्रयुक्ता हि क्रिया सा प्रतिबध्यते ।
क्रियामात्रा न बन्धायेत्यत्राश्चर्यं किमुच्यताम् ॥ ५२ ॥

फलकामतया कर्मकरणं प्रतिबध्यते ।
न कर्ममात्रकरणं तस्मात् कर्मफलं त्यजेत् ।
त्यक्ते कर्मफलेऽप्यस्य विलासो नैव बाधते ॥ ५३ ॥

यथा चित्रपटस्त्रीणां विलासो नैव बाधते ।
तथाऽद्वैतक्रियाणां च विलासो नैव बाधते ॥ ५४ ॥

न प्ररोहन्ति बीजानि यथा भ्रष्टानि भूतले ।
अद्वैतभक्तियुक्तानि कर्माणि च तथैव हि ॥ ५५ ॥

यथा वन्ध्याः स्त्रियो लोके फलाय न कदाचन ।
तथाऽद्वैतक्रिया लोके फलाय न कदाचन ॥ ५६ ॥

वन्ध्या सकामा यदि पुंसि सङ्गमं
करोत्यकामाऽपि फलं यथा नहि ।
भक्तिः सदा सङ्गममीश्वरे मुदा
करोत्यपि स्यात् फलमेव नेतरत् ॥ ५७ ॥

निष्फला निष्फलाः नैव सफला सफला नहि ।
क्रिया अद्वैतसिद्धान्तभक्तियोगसमाश्रिताः ॥ ५८ ॥

अद्वैतभक्तिरूपेण दृश्यन्ते तत्प्रभावतः ।
नैष्फल्यमिति सम्भ्रान्तिः साफल्यमिति विभ्रमः ॥ ५९ ॥

न नैष्फल्यं न साफल्यं क्रियाणामस्ति वस्तुतः ।
समौ निम्नोन्नतौ नाभिकुचे चित्रपटे स्त्रियः ॥ ६० ॥

क्रियानैष्फल्यसाफल्ये सत्यद्वैते तथा समे ।
यथा नानाविधा नद्यो नानाविधजंला अपि ॥
स्यन्दमाना इमाः सर्वा अकूपारं समाश्रिताः ॥ ६१ ॥

तद्रूपेणैव दृश्यन्ते नामरूपे विहाय च ।
तथाद्वैतं समाश्रित्य क्रिया नानाविधा अपि ॥ ६२ ॥

अद्वैतभक्तिरूपेण दृश्यन्ते भक्तियोगतः ।
क्रियाकारस्वरूपेण प्रतीताऽप्येव सर्वथा ॥ ६३ ॥

न केवलक्रिया ह्यस्य लीलामात्रा स्वभावतः ।
अर्चनार्पणरूपेण तत्सर्वं तु प्रतीयते ॥ ६४ ॥

लीलया सकलाकारा स्वयं सा भक्तिदेवता ।
क्रीडन्ती स्वात्मनात्मानं भुङ्क्ते चैतच्छिवार्पितम् ॥ ६५ ॥

अनुरागपरा भक्तिर्विषयेषु विशुद्धधीर्विरागपरा ।
अनुरागेण विरागेण सन्ततं भक्तिरेव निर्लेपा ॥ ६६ ॥

अन्तर्लेपबहिर्लेपत्यागग्रहणयोः समा ।
विषयाणां विषयिणामनुरागविरागिणाम् ॥ ६७ ॥

तस्माद्भक्तिर्न गृह्णाति न जहाति किमप्यसौ ।
अनुरागेण यद्वस्तु विरागेणापि शाम्भवी ॥ ६८ ॥

तथा तमःप्रकाशाभ्यां युक्तोऽप्याकाश एतयोः ।
निर्लेपतः स शुद्धात्मा तथा ताभ्यां तयोश्च सा ॥ ६९ ॥

तमोज्योत्स्नाप्रवृत्तिर्हि रात्रावेव न चाहनि ।
पुण्यपापोभयं कर्ममते भक्तिमते कुतः ॥ ७० ॥

अहन्यातप एवास्ते तमो ज्योत्स्नाविलक्षणे ।
तथा भक्तिपदे शैवं पुण्यपापविलक्षणे ॥ ७१ ॥

अहन्यहस्करो भाति भर्गो भक्तिपदे तयोः ।
प्रभावो ह्यातपस्यैवमित्येतदुभयं मतम् ॥ ७२ ॥

ज्ञानैकलक्षणं शैवमित्येतदुभयं मतम् ।
ज्ञानैकलक्षणं शैवमुष्णलक्षण आतपः ॥ ७३ ॥

तमश्चन्द्रिकयोः सख्यमुभयोश्चैक्यलक्षणात् ।
रात्रौ व्यवस्थितत्वाच्च तद्वदज्ञानलक्षणात् ॥ ७४ ॥

कर्मण्येव स्थितत्वाच्च सख्यं स्यात् पापपुण्ययोः ।
तस्माद् भक्तिपदे पापपुण्ययोर्नैव वर्तते ॥ ७५ ॥

अत एव परायां तु भक्तौ न च शुभाशुभे ।
ज्ञानं प्रसादादेव स्यादित्येषा शाम्भवी स्थितिः ॥ ७६ ॥

ज्ञानादेव हि मोक्षः स्यान्मोक्षादुपरि शाम्भवी ।
भक्तिर्गुरुतरा भाति स्वतन्त्रा निजलीलया ॥ ७७ ॥

धर्मादिपुरुषार्थाणां चतुर्णां परतः पुरा ।
पञ्चमः पुरुषार्थो हि भक्तिः शैवी सनातनी ॥ ७८ ॥

लोकयोरुभयोरैहिकामुष्मिकपदार्थयोः ।
गमागमौ विनैवास्ते भक्तिः सम्पूर्णवैभवा ॥ ७९ ॥

भावानुरूपफलदा स्वाश्रितानां फलैषिणाम् ।
उत्तरोत्तररूपेण भक्तिः पूर्णा निरुत्तरा ॥ ८० ॥

केचित्प्राणैः सह शिवपदं केचिदात्मीयकायैः
केचिद् दारैर्निजतनुभवैर्मन्दिरैर्बन्धुवर्गैः ।
ग्रामैर्देशैः सह परिजनैः केचिदन्ये क्रमेण
त्यक्त्वा चैतत्सकलमपि यान्ति स्वयं चैव भक्ताः ॥ ८१ ॥

प्राणादिवस्तुविषयेष्वनुरागयुक्ता
भक्ताः प्रयान्ति कतिभिः सह तैः शिवैक्यम् ।
केचिद्विरागनिरता विषयेषु तेषु
त्यक्त्वा च तान् शिवपदं स्वयमेव यान्ति ॥ ८२ ॥

भक्तिरेव परमार्थदायिनी भक्तिरेव परतत्त्ववेदिनी ।
भक्तिरेव भवदोषहारिणी भक्तिरेव शिवभावकारिणी ॥ ८३ ॥

अतः परं भक्तिविलासवैभवे
सदा शिवाद्वैतपरायणः स्वयम् ।
प्रसादमासाद्य निजैक्यसौख्यदं
स्वयमेव गायन् विचरेत् स्वलीलया ॥ ८४ ॥

नाहमनात्मा पश्चात्कोऽहं योऽहं पदस्थ आत्मा साक्षी ।
सोऽहं तत्पतिशिवदासोऽहं दासोऽहमिति चरेदुपरि ॥ ८५ ॥

इति परमरहस्यं वेदवेदान्तसारं
हृतभवभयबाधं षट्स्थलब्रह्मबोधम् ।
गुरुशिवपदभक्त्या प्राप्तविद्याय देयं
विरहितघनभक्तिश्रेयसे नैव देयम् ॥ ८६ ॥

नाशिष्येभ्यश्चैतेभ्यो वा नाभक्तेभ्यः कदाचन ।
ग्राहयेदीदृशानर्थानिति वेदानुशासनम् ॥ ८७ ॥

क्रियाविश्रान्तिरित्येवं मया संसारनाशिनी ।
अद्वैतभक्तिनिर्वाणनिष्ठाकाष्ठा समीरिता ॥ ८८ ॥

श्रीमदैपुरसोमेशलिङ्गायालिङ्गरूपिणे ।
लिङ्गाङ्गैक्यस्वरूपाय नमस्ते लिङ्गमूर्तये ॥ ८९ ॥

नमश्शब्द उमा साक्षाच्छिवशब्दः शिवः स्वयम् ।
अयशब्दस्तयोर्योगः सोमतत्त्वमुपास्महे ॥ ९० ॥

अवाच्यात्मस्वरूपाय शिवभावप्रदायिने ।
नमः सद्गुरुनाथाय षट्स्थलब्रह्ममूर्तये ॥ ९१ ॥

स्वानुभूतिविभवानुगाहिना
मायिदेवविभुना महात्मना ।
श्रीशिवानुभवसूत्रमुत्तरं
तन्त्रमुक्तमतिशोभनं परम् ॥ ९२ ॥

एतद्यो वेद सोऽविद्याग्रन्थिं विकिरति प्रभुः ।
शिवसिद्धान्तकं तन्त्रं शिवाद्वैतं शिवं पदम् ॥ ९३ ॥

इति श्रीवातुलोत्तरतन्त्रे शिवानुभवसूत्रे षट्स्थलनिर्णये
क्रियाविश्रान्तिर्नामाष्टमाधिकरणं सम्पूर्णम् ॥

समाप्तोऽयं ग्रन्थः ॥

# वातुलशुद्धाख्यं तन्त्रम्

कैलासशिखरे रम्ये नानारत्नोपशोभिते ।
नानाद्रुमलताकीर्णे नानापुष्पोपशोभिते ॥ १ ॥

तत्र सिंहासनासीनं श्रीकण्ठं त्रिदशेश्वरम् ।
प्रणम्य चरणौ तस्य स्कन्दो वचनमब्रवीत् ॥ २ ॥

देवदेव जगन्नाथ सर्वज्ञ त्रिपुरान्तक ।
स्थित्युत्पत्तिलयेशान प्रणतार्तिहर प्रभो ॥ ३ ॥

सर्वलोकहितार्थाय योगिनां रक्षणाय च ।
मन्त्रतन्त्रं महादेव[1] त्वया प्रोक्तं तु विस्तरात् ॥ ४ ॥

पुंसामनुग्रहार्थाय ज्ञानिनां मुक्तिकारणम् ।
शिवज्ञानं परं गुह्यं संक्षेपाद् वद मे प्रभो ॥ ५ ॥

ईश्वर उवाच

अथातः सम्प्रवक्ष्यामि यत्त्वया परिचोदितम् ।
एतत्सर्वं समासेन श्रूयतामिह[2] षण्मुख ॥ ६ ॥

साधकानां हितार्थाय भुक्तिमुक्तिप्रदायकम् ।
वातुलाख्ये महातन्त्रे दध्नो[3] घृतमिवोद्धृतम् ॥ ७ ॥

सारात्सारं समुद्धृत्य शुद्धाख्यं तन्त्रमुत्तमम्[4] ।
सहस्रग्रन्थसंयुक्तं सर्वज्ञानसमुच्चयम् ॥ ८ ॥

गुह्याद् गुह्यमिदं तन्त्रं सर्वशास्त्रसमुद्धृतम्[5] ।
सूक्ष्मात् सूक्ष्मतरं चैव[6] सारात् सारं महोदयम् ॥ ९ ॥

---

१. पुरा देव ।
२. मपि ।
३. नवनीतमिवोद्धृतम् ।
४. संज्ञकम् ।
५. समुच्चयम् ।
६. सूक्ष्मम् ।

अप्रकाश्यमिदं तन्त्रं रहस्यमतिदुर्लभम् ।
शिवज्ञानं[1] महासेन संक्षेपाद् वक्ष्यतेऽधुना ॥ १० ॥
प्रथमस्तत्त्वभेदश्च[2] द्वितीयो [3]वर्णभेदकः ।
तृतीयश्चक्रभेदश्च[4] [5]चतुर्थो वर्गभेदकः ॥ ११ ॥
पञ्चमो[6] मन्त्रभेदस्तु [7]षष्ठः प्रणवभेदकः ।
सप्तमो ब्रह्मभेदश्च अङ्गभेदस्तु [8]चाष्टमः ॥ १२ ॥
नवमं [9]मन्त्रजातं तु दशमं कीलकं तथा ।
एते वै[10] दशभेदास्तु कीर्तिताश्च क्रमेण वै ॥ १३ ॥
एतेषामेव पूर्वं तु तत्त्वभेदं वदाम्यहम् ।
तत्त्वं तु त्रिविधं ज्ञेयं तस्य भेदं शृणुष्व[11] हि ॥ १४ ॥
शिवं सदाशिवं चैव महेशं त्रिविधं स्मृतम् ।
शिवतत्त्वं महासेन निष्कलं चेति कीर्तितम् ॥ १५ ॥
सकलं निष्कलं चैव सदाशिवमिति[12] स्मृतम् ।
महेशं सकलं विद्यात् त्रिविधं तद्[13] भवेद्यथा ॥ १६ ॥
शिवमेकं विजानीयात् सदाख्यं पञ्चधा भवेत् ।
महेशं तु महासेन पञ्चविंशतिभेदकम् ॥ १७ ॥
एतेषां तत्त्वसंयुक्तमेकत्रिंशदिति स्मृतम् ।
शिवस्य लक्षणं वक्ष्ये समासाच्छृणु षण्मुख ॥ १८ ॥
शिवं परात्परं सूक्ष्मं नित्यं सर्वगताव्ययम् ।
अनिर्द्धतमनौपम्यमप्रमाणमनामयम्[14] ॥ १९ ॥

---

१. शिवज्ञानमहातन्त्रं ।
२. प्रथमं तत्त्वभेदं तु ।
३. द्वितीयं वर्णभेदकम् ।
४. तृतीयं चक्रभेदं तु ।
५. चतुर्थं वर्णभेदकम् ।
६. पञ्चमं मन्त्रभेदं तु ।
७. षष्ठं प्रणमुवच्यते ।
८. सप्तमं ब्रह्मभेदञ्च अङ्गभेदन्तु चाष्टमम् ।
९. मन्त्रभेदं ।
१०. एतानि दशभेदानि कीर्तितानि क्रमेण तु ।
११. शृणुष्व च ।
१२. शिवमिहोच्यते, सादाख्यमिति चोच्यते ।
१३. त्रिविधास्ते भवन्ति वै ।
१४. अप्रमाणममेयम् ।

शुद्धत्वाच्छिवमुद्दिष्टं परादूर्ध्वं परात्परम् ।
व्योमातीतं च सूक्ष्मं हि नित्यं कारणकारणम् ॥ २० ॥

व्याप्तं सर्वगतं प्रोक्तमक्षीणादव्ययं भवेत् ।
अमलानिद्धतं ज्ञेयमसादृश्यादनौपमम् ॥ २१ ॥

[1]प्रमाणाद्यतिरिक्तत्वादप्रमेयमिति स्मृतम् ।
निर्गुणत्वाद् विशेषेण चानामयमिति स्मृतम् ॥ २२ ॥

इत्येतैर्लक्षणैर्युक्तं [2]शिवरूपमिति स्मृतम् ।
सृष्ट्यर्थं सर्वतत्त्वानां लोकस्योत्पत्तिकारणम् ॥ २३ ॥

योगिनामुपकाराय स्वेच्छया[3] चिन्त्यते शिवः ।
तच्छिवे तु पराशक्तिः सहस्रांशेन जायते ॥ २४ ॥

तच्छक्तेस्तु सहस्रांशादादिशक्तिसमुद्भवः ।
आदिशक्तिसहस्रांशाद् इच्छाशक्तिसमुद्भवः ॥ २५ ॥

इच्छाशक्तिसहस्रांशाद् ज्ञानशक्तिसमुद्भवः ।
[4]ज्ञानशक्तिसहस्रांशात् क्रियाशक्तिसमुद्भवः ॥ २६ ॥

एता वै शक्तयः पञ्च निष्कलाश्चेति कीर्तिताः ।
शिवसृष्टिरियं प्रोक्ता शक्तीनां सृष्टिरुच्यते ॥ २७ ॥

योगिनां च यतीनाञ्च ज्ञानिनां मन्त्रिणां तथा ।
ध्यानपूजानिमित्ताय निष्कलं सकलं भवेत् ॥ २८ ॥

तद्रूपं हि समासेन सादाख्यमिति कीर्तितम् ।
सादाख्यं पञ्चधा प्रोक्तं तेषां लक्षणमुच्यते ॥ २९ ॥

पराशक्त्यादिशक्त्योश्च सादाख्यस्य समुद्भवः ।
प्रथमं शिवसादाख्यममूर्तं तु द्वितीयकम् ॥ ३० ॥

---

१. प्रमाणाद्यतिरिक्तत्वादप्रमाणमिति स्मृतम् ।
२. शिवरूपमिहोच्यते ।
३. स्वेच्छया चिन्तितः शिवः ।
४. तच्छक्तेस्तु ।

तृतीयं मूर्तसादाख्यं चतुर्थं कर्तृनामकम् ।
पञ्चमं [1]कर्मसादाख्यमुक्तं सादाख्यपञ्चकम् ॥ ३१ ॥

सदाशिवस्तथेशश्च ब्रह्मा वै चेश्वरः स्मृतः ।
ईशानश्चेति [2]पञ्चैते तत्त्वभेदाः प्रकीर्तिताः ॥ ३२ ॥

शिवं सदाशिवं ज्ञेयममूर्तश्चेश उच्यते ।
मूर्तं ब्रह्मेति विज्ञेयं कर्तृ चैवेश्वरः स्मृतः ॥ ३३ ॥

कर्मेशान इति प्रोक्त इत्येवं द्विविधं स्मृतम् ।
परात्परतरश्चैव सूक्ष्मतः सूक्ष्ममेव च ॥ ३४ ॥

स्थूलसूक्ष्मक्रमेणैव शिवादिः परिलक्ष्यते ।
[ [3]तदेतत्त्रिविधं स्थूलं सूक्ष्मतत्त्वं ततः परम् ॥ ३५ ॥

असदाद्यमनिर्देश्यं स्थूलं सूक्ष्मञ्च च योगिनः ।
ततः परं तु यन्नित्यं ज्ञानमानन्दमव्ययम् ॥ ३६ ॥

तन्निष्ठैस्तत्परैर्भक्त्या[4]. दृश्यं तद्रूपमास्तिकैः[5] ] ।
एतेषु पञ्चतत्त्वेषु विशेषमधुनोच्यते ॥ ३७ ॥

[6]तत्त्वमूर्तिप्रभावश्च [7]त्रिविधो विद्यते क्रमात् ।
शिवश्च तत्त्वमित्युक्तं मूर्तिश्चैव [8]महेश्वरः ॥ ३८ ॥

तयोर्योगिन[9] यद्रूपं तद्रूपं भावसंज्ञकम् ।
भावं सादाख्यमित्युक्तमित्येवं परिकल्पितम् ॥ ३९ ॥

सन्ततं शिवभावत्वात् सादाख्यमिति कीर्तितम् ।
निष्कलं तत्त्वमित्युक्तं सकलं मूर्तिरीरिता[10] ॥ ४० ॥

---

१. पञ्चसादाख्यमुच्यते ।
२. पञ्चैव ।
३. तदिदं त्रिविधं रूपं स्थूलं सूक्ष्मं ततः परम् ।
असदाद्यमरैर्दृश्यं स्थूलं सूक्ष्मञ्च योगिभिः ॥
४. भक्तैः ।
५. तद्व्रतमास्तिकैः ।
६. तत्त्वमूर्तिप्रभावेति ।
७. त्रिभेदम् ।
८. सदाशिवः ।
९. तयोर्भावेन तद्रूपं तद्रूपं भावमुच्यते ।
१०. रुच्यते ।

सकलं निष्कलं चैव प्रभावमिति कीर्तितम् ।
देही निष्कलमित्युक्तं देहं सकलमीरितम्[1] ॥ ४१ ॥

देहिदेहस्य सम्बन्धमेव रूपमिति स्मृतम् ।
सर्वेषां ध्यानपूजार्थं सकलं निष्कलं भवेत् ॥ ४२ ॥

एवं ज्ञात्वा विशेषेण सर्वकर्म समाचरेत् ।
पञ्चसादाख्यतत्त्वानामुद्भवं हि पृथक् पृथक् ॥ ४३ ॥

तेषां रूपञ्च वर्णञ्च समासाच्छृणु षण्मुख ।
शान्त्यतीता पराशक्तिस्तस्याः पर्यायवाचकः ॥ ४४ ॥

पराशक्तेर्दशांशेन शिवसादाख्य(मुद्भवम्)समुद्भवः ।
पराशक्त्युद्भवत्वाच्च शुद्धत्वाच्छिवमीरितम् ॥ ४५ ॥

तद्रूपं सूक्ष्मरूपेण ज्योतीरूपमिति स्मृतम् ।
विद्युद्रूपमिवाकाशे प्रत्यक्षं सर्वतो मुखम् ॥ ४६ ॥

[2]शिवतत्त्वमिति प्रोक्तं तत्त्वानामखिलालयम् ।
शिवसादाख्यमित्युक्तममूर्तं तु ततः शृणु ॥ ४७ ॥

शान्तिरेवादिशक्तिश्च तस्याः पर्यायवाचकः ।
आदिशक्तिदशांशेन ह्यमूर्तस्य समुद्भवः ॥ ४८ ॥

आदिशक्तेरमूर्तत्वादमूर्तं चेति कीर्तितम् ।
अमूर्तत्वात् कलाहीनं तद्रूपं [3]लिङ्गवद्भवेत् ॥ ४९ ॥

सूर्यकोटिप्रतीकाशं ज्योतिस्तम्भाकृति स्थितम् ।
तस्याभ्यन्तर्गता मूर्तिरमूर्तादिरिहोच्यते[4] ॥ ५० ॥

एतद्वै दिव्यलिङ्गं तु मूलस्तम्भमिहोच्यते ।
लिङ्गात् सर्वं समुत्पन्नं लयं तस्मिन् प्रकीर्तितम् ॥ ५१ ॥

---

१. मुच्यते ।
२. शिवतत्त्वमिदम् ।
३. लिङ्गमुद्भवम् ।
४. अमूर्तत्वादगोचरम् ।

सृष्टिसंहारमेवोक्तं लिङ्गनाम्ना त्विहोच्यते ।
अमूर्तमेवमाख्यातं समूर्तं तु ततः शृणु ॥ ५२ ॥

इच्छाशक्तिश्च विद्या च तस्याः पर्यायवाचकः ।
तच्छक्तेस्तु दशांशेन[1] ज्योतीरूपमिहोच्यते[2] ॥ ५३ ॥

इच्छाशक्तेर्गुणत्वाच्च तस्मान्मूर्तिरुदाहृता[3] ।
मूर्तत्वाच्च कलायुक्तं रूपं चेति प्रकीर्तितम् ॥ ५४ ॥

ज्वालाग्निसदृशप्रख्या दिव्यलिङ्गाकृतिर्भवेत् ।
तस्योर्ध्वशैकभागे[4] तु चैकवक्त्रसमन्वितम् ॥ ५५ ॥

त्रिनेत्रं चारुवदनं सर्वावयवसंयुतम् ।
कृष्णापरशुहस्तश्च वराभयचतुर्भुजम् ॥ ५६ ॥

एवं लक्षणसंयुक्तं लिङ्गमूर्तमुदाहृतम् ।
एकमेकासनोपेतं[5] दिव्यलिङ्गाकृतिर्भवेत् ॥ ५७ ॥
मूर्तसादाख्यमित्युक्तं [6]कर्तृसादाख्यमुच्यते ।
ज्ञानश्चैव प्रतिष्ठा च तस्याः पर्यायवाचकः ॥ ५८ ॥
ज्ञानशक्तिदशांशेन कर्तृसादाख्यसमुद्भवः ।
ज्ञानकर्तृस्वभावत्वात् कर्तृनामेति कीर्तितम् ॥ ५९ ॥
ज्ञानं हि शुद्धरूपत्वात्[7] स्फटिकाभासमुच्यते ।
दिव्यलिङ्गं महास्थूलं महादीर्घतयान्वितम् ॥ ६० ॥
तस्य मध्ये स्थिता मूर्तिरीश्वरः सर्वकारणम् ।
( पञ्चमूर्धचतुर्वक्त्रं नेत्रैर्द्वादशभिर्युतम् )
चतुर्मूर्धचतुर्वक्त्रं नेत्रद्वादशसंयुतम् ॥ ६१ ॥

---

१. तदंशेन । २. मूर्तसादाख्यसम्भवः ।
३. मूर्तमुदाहृतम् । ४. तस्यार्धार्धैकभागे तु ।
५. एकमेकाननोपेतम् । ६. लिङ्गमूर्तिरुदाहृता ।
७. भावरूपत्वात् ।

चतुरास्यं चतुर्वर्णं वसुश्रोत्रसमन्वितम् ।
अष्टहस्तं द्विपादञ्च सर्वलक्षणसंयुतम् ॥ ६२ ॥

शूलं परशुखड्गञ्च अभयं दक्षिणे करे ।
पाशं नागञ्च घण्टां च वरदं वामहस्तके ॥ ६३ ॥

सर्वावयवसंयुक्तं सर्वाभरणभूषितम् ।
एवं तमीश्वरं[1] विद्यात् कर्तृसादाख्यलिङ्गकम् ॥ ६४ ॥

कर्तृसादाख्यमित्युक्तं कर्मसादाख्यमुच्यते ।
निवृत्तिः स्यात् क्रियाशक्तिस्तस्याः पर्यायवाचकः ॥ ६५ ॥

क्रियाशक्तिदशांशेन कर्मसादाख्यमुद्भवम्(समुद्भवः)।
क्रिया कर्मेति विज्ञेया तस्मात्कर्मेति नामतः ॥ ६६ ॥

लिङ्गपीठप्रकारेण कर्मसादाख्यलक्षणम् ।
नादो लिङ्गमिति ज्ञेयं बिन्दुः पीठमुदाहृतम् ॥ ६७ ॥

बिन्दुनादयुतं रूपं लिङ्गाकारमिति[2] स्मृतम् ।
चत्वारि कर्तृरूपाणि[3] केवलं नादमीरितम्[4] ॥ ६८ ॥

लिङ्गं शिव इति ज्ञेयं पीठं शक्तिरुदाहृता ।
योनिलिङ्गप्रकारेण जगत्सृष्ट्यर्थकारणम् ॥ ६९ ॥

तथा संयोगभावेन कर्मरूपमुदाहृतम् ।
बिन्दुमध्यगतो नादो नादमध्ये तु मूर्तयः ॥ ७० ॥

मूर्तिमध्यगतं तत्त्वं तत्त्वमध्यगतः शिवः ।
एतच्छिवमयं[5] लिङ्गं सर्वतत्त्वालयं विदुः ॥ ७१ ॥

लिङ्गे तु जायते सर्वं जगत् स्थावरजङ्गमम् ।
तस्माद् लिङ्गं विशेषेण कर्मरूपमुदाहृतम् ॥ ७२ ॥

---

१. तदीश्वरं प्रोक्तं कर्तुलिङ्गमिहोच्यते ।
२. लिङ्गाकारमिहोच्यते ।
३. रूपादि ।
४. मुच्यते ।
५. तत्त्वमयम् ।

कर्मोदये च सृष्टिः स्यात् कर्मान्ते संहृतिर्भवेत् ।
एतत्कर्मेशरूपं[1] तु सृष्टिस्थितिलयावहम् ॥ ७३ ॥

पञ्चसादाख्ययोगेन[2] कर्मसादाख्यमुच्यते ।
शिवसादं विशेषेण शिवरूपं समाश्रितम् ॥ ७४ ॥

अमूर्तं तु महासेन शिवसादाख्यमाश्रितम् ।
मूर्तरूपं विशेषेण अमूर्तादिसमाश्रितम् ॥ ७५ ॥

कर्तृसादाख्यमेवं हि समूर्तादिसमाश्रितम् ।
कर्मरूपं क्रमेणैव कर्तृरूपं समाश्रितम् ॥ ७६ ॥

अनेनैव प्रकारेण चैकैकं तु समाश्रितम् ।
तस्मात् कर्मेशरूपं[3] तु पञ्चतत्त्वाश्रितं विदुः ॥ ७७ ॥

पञ्चतत्त्वात्मकं[4] ज्ञेयं सर्वाधारं[5] समाश्रितम् ।
एतद्वै [6]मूर्तिपिण्डत्वात् पिण्डकायमिति स्मृतम् ॥ ७८ ॥

पिण्डस्थं पिण्डमध्यस्थं पिण्डेन तु [7]पुटीकृतम् ।
पिण्डेन पिण्डितं पिण्डं पिण्डरूपमुदाहृतम् ॥ ७९ ॥

( अतीतकाले मृत्पिण्डरूपं कुम्भे व्यवस्थितम् ।
पञ्चात्मकं मूर्तिपिण्डं धातुबद्धगुणात्मकम् ॥ ) ८० ॥

तस्माद्वै कर्मसादाख्यं पिण्डरूपमुदाहृतम् ।
एतच्छिवमयं पिण्डं सर्वतत्त्वालयं विदुः ॥ ८१ ॥

पञ्चमूर्तमयं देवं पञ्चतत्त्वात्मकं भवेत् ।
मूर्तीनां देहभेदैस्तु गुणैः [8]पञ्चाननं विदुः ॥ ८२ ॥

---

१. कर्मस्वरूपम् ।
२. पञ्चसादाख्यमेवोक्तम् ।
३. कर्मस्वरूपम् ।
४. सर्वतत्त्वात्मकम् ।
५. तत्त्वाधारं ।
६. कर्मसादाख्यं पिण्डरूपमिहोच्यते ।
७. घटीकृतम् ।
८. पञ्चाननैर्युतम् ।

तद्देहस्तु[1] महेशादिसर्वतत्त्वादिसम्भवः ।
तस्य वक्त्रेषु संभूताः सिद्धान्ताः शैवतान्त्रिकाः ॥ ८३ ॥
तत्त्वार्थे तु महेशादिसर्वतत्त्वसमुद्भवः ।
सर्वज्ञानमयं देवं सर्वकारणकारणम् ॥ ८४ ॥
एवं [2]लिङ्गं तु कर्मेशं ध्यायेत् सकलनिष्कलम् ।
देहस्थं सकलं ज्ञेयं निष्कलं देहवर्जितम् ॥ ८५ ॥
[3]देहं त्वेतत् कलोपेतं धातुपिण्डमिति स्मृतम् ।
षट्कला चैव धात्री च[4] षडङ्गैस्तु प्रकल्पयेत् ॥ ८६ ॥
सर्वाङ्गैरपि सम्पूर्णं [5]सर्वावयवसुन्दरम् ।
एवं तत्स्मृतिमात्रेण मूर्तिः सकलरूपधृत् ॥ ८७ ॥
निष्कलं तदभावे तु [6]तत्स्यात् सकलनिष्कलम् ।
सवीर्यं चैव निर्देहं मांसास्थिरुधिरं न च ॥ ८८ ॥
इन्द्रचापमिवाकाशे दर्पणे प्रतिबिम्बवत् ।
इत्येवं मनसा कल्प्य निष्कलं सकलं भवेत् ॥ ८९ ॥
ध्यानलक्षणमित्युक्तमङ्गभावमथोच्यते ।
अङ्गभेदो महासेन चतुर्भिर्भेद उच्यते ॥ ९० ॥
अङ्गं प्रत्यङ्गसाङ्गं चोपाङ्गं चत्वारि च क्रमात् ।
शिरो वक्त्रं च हृदयमङ्गं चेति प्रकीर्तितम् ॥ ९१ ॥
शिवमध्यगतं नृत्तं नृत्तमध्ये तु शान्तकम् ।
अतीतं शान्तमध्ये तु शान्त्यतीतं परात्परम् ॥ ९२ ॥
[7]वक्षः कण्ठस्तनौ बाहू नाभिगुह्योदराणि च ।
[8]नेत्रे नासास्यकर्णौ च पाणिपादौ तथाङ्गुलिः ॥ ९३ ॥

---

१. तद्धेतु महेशादि ।
२. एवं लिङ्गे तु ।
३. देहस्य तत्कलाभेदम् ।
४. शास्त्रज्ञः षडङ्गेषु ।
५. सर्वावयवसंयुतम् ।
६. तस्मात् ।
७. मध्यदण्डस्तथा बाहू
८. नेत्रनासिककर्णौ च ।

ऊरू च जानुजङ्घे च प्रत्यङ्गं चेति कीर्तितम् ।
मूर्तीनां गुणरूपञ्च साङ्गञ्चेति प्रकीर्तितम् ॥ ९४ ॥

गुणं चिह्नमिति[1] ज्ञेयं तद्गुणं [2]दशधा भवेत् ।
त्रिगुणं शक्तिखण्डञ्च दुर्भेद्योऽनुग्रहस्तथा ॥ ९५ ॥

विधिर्मायाविवरणं वर्णसंहार एव च ।
एते दश गुणाः प्रोक्तास्तेषां लक्षणमुच्यते ॥ ९६ ॥

त्रिगुणं शूलमित्युक्तं [3]शक्तिः परशुरीरितः ।
खड्गमीशप्रतापः स्याद् दुर्भेद्यं वज्रमिष्यते ॥ ९७ ॥

ईशस्यानुग्रहश्चैव अभयन्तु प्रशस्यते ।
विधिः स्यान्नागरूपन्तु पाशं मायास्वरूपकम् ॥ ९८ ॥

विवरणमङ्कुशं चैव वर्णं नादात्मकं विदुः ।
संहारस्त्वग्निरूपं स्यात् [4]तेषामाख्याः प्रकीर्तिताः ॥ ९९ ॥

एतानि गुणरूपाणि साङ्गानि च यथाक्रमम् ।
वस्त्रोपवीतमाल्यानि गन्धाश्चाभरणं तथा ॥ १०० ॥

तथैवाभरणं चैव उपाङ्गं [5]प्रोच्यतेऽपि च ।
[6]अङ्गभेदमिति प्रोक्तं तस्य रूपमिहोच्यते ॥ १०१ ॥

कुन्देन्दुस्फाटिकाभासं जटामकुटमण्डितम् ।
पञ्चमूर्धसमायुक्तं पञ्चवक्त्रसमायुतम् ॥ १०२ ॥

प्रतिवक्त्रं विशेषेण त्रिलोचनसमायुतम् ।
दिग्भुजं तु महासेन द्विपादं पद्मसंस्थितम् ॥ १०३ ॥

शूलं परशुखड्गौ चाभयवज्रे च दक्षिणे ।
नागं पाशाङ्कुशं चैव घण्टां वह्निं च वामके ॥ १०४ ॥

---

१. गुणचिह्नमिन्न । २. तु तथा भवेत् ।
३. कर्ता परशुरुच्यते । ४. पाशानां भष्मसात्कृतिः ।
५. चेति प्रोच्यते । ६. अङ्गभेदमिदं प्रोक्तम् ।

सर्वलक्षणसंयुक्तं सर्वाभरणभूषितम् ।
दिव्याम्बरधरं देवं दिव्यरूपमुदाहृतम् ॥ १०५ ॥

दिव्यगन्धानुलिप्ताङ्गं दिव्यमालाविभूषितम् ।
शान्तरूपमिदं वत्स किञ्चित् प्रहसिताननम् ॥ १०६ ॥

एतद्रूपं स्मरेन्नित्यं धर्मकामार्थमोक्षदम् ।
ध्यानरूपमिदं प्रोक्तं विशेषमधुनोच्यते ॥ १०७ ॥

कर्मेशं [1]पूर्वरूपन्तु कर्तृसव्याननं भवेत् ।
अपरं मूर्तिवक्त्रं[2] स्यादमूर्तं चोत्तराननम् ॥ १०८ ॥

ऊर्ध्वं तु शिवसादाख्यमेवं पञ्चाननं विदुः ।
[3]ईशानादीनि मूर्धादि तथा कर्मान्तवद् भवेत् ॥ १०९ ॥

प्राग्वक्त्रं पूर्णमुद्दिष्टं पश्चिमं पश्चिमाननम् ।
दक्षिणाभिमुखं याम्यमुत्तरं चोत्तराननम् ॥ ११० ॥

ऊर्ध्वं तु दक्षिणं सव्यमितरं पश्चिमोत्तरम् ।
[4]किञ्चिदस्मिन् विशेषोऽस्ति चोर्ध्ववक्त्रस्य षण्मुख ॥ १११ ॥

मूलं संचिन्त्य तद्वक्त्रं परं मुखमिति स्मृतम् ।
[5]पूजाकाले तु तद्ध्यात्वा अर्चयेत् [6]कर्मवक्त्रवत् ॥ ११२ ॥

एवं सङ्कल्प्य विधिवत् पूजान्ते पूर्ववद्भवेत् ।
[7]एतत्पञ्चात्मकत्वात्तु सर्वकारणकारणम् ॥ ११३ ॥

सदाशिवमिति प्रोक्तमिति[8] शास्त्रेषु निश्चितम् ।
एतद्वै कर्मरूपत्वात्[9] कर्मकर्मणि कारयेत् ॥ ११४ ॥

---

१. पूर्ववक्त्रं स्यात् कर्तृ स्याद्दक्षिणाननम् ।
२. वक्त्रन्तु ह्यमूर्तं ।
३. कर्मेशानादिमूर्तान्तं तथा कर्माख्यमुच्यते ।
४. भेदे चास्मिन् ।
५. पूजाकर्मकाले ।
६. कर्तृवक्त्रवत् ।
७. तस्मान्नादात्मतत्त्वञ्च ।
८. सर्वशास्त्रेषु ।
९. रूपत्वं कर्मवर्मेति कारयेत् ।

कर्षणादिक्रियादीनि कर्म चेति निगद्यते ।
तस्माद्वै स्थापनादीनि कर्ममूर्तौ तु कारयेत् ॥ ११५ ॥

लिङ्गे वा[1] स्थण्डिले वह्नौ कुम्भे वा हृदयेऽपि वा ।
ध्यात्वा सदाशिवं पूज्य विधिवत् स्थापयेत्ततः ॥ ११६ ॥

आवाहनं त्वात्मनि चित्प्रकाशं तत्र स्थितिस्थापनमीश्वरस्य ।
सान्निध्यमात्रेश्वरसन्निधानं संशोधनं स्वस्य शिवे विरोधः ॥ ११७ ॥

कर्त्रादिकं चतुर्णां तु स्थापनञ्च न कारयेत् ।
योगिनां मन्त्रिणां चैव स्तुतिमात्रं भवेद् गुह ॥ ११८ ॥

इत्येतैर्लक्षणैर्युक्तं [2]कर्मसादाख्यलिङ्गकम् ।
शिवादिकर्मपर्यन्तं क्रमेणैव प्रकीर्तितम् ॥ ११९ ॥

सादाख्यलक्षणं प्रोक्तं महेशं शृणु षण्मुख ।
कर्मेशस्य सहस्रांशाद् महेशस्य समुद्भवः ॥ १२० ॥

महेशं सकलं विद्यात् सृष्टिस्थितिलयात्मकम्[3] ।
पञ्चविंशतिभेदैस्तु [4]तन्मूर्तिर्विविधा भवेत् ॥ १२१ ॥

नानारूपधरं देवं नानारूपसमन्वितम् ।
नानाचिह्नसमोपेतं नानालीलाधरं हरम् ॥ १२२ ॥

स्थानयानसमासीनं नृत्तं कोपञ्च साम्यकम् ।
अनेकाकारसंयुक्तं देवदेवं महेश्वरम् ॥ १२३ ॥

जटामुकुटसंयुक्तमेकवक्त्रं त्रिनेत्रकम् ।
[5]चतुर्भुजसमायुक्तं एकपद्मासनस्थितम् ॥ १२४ ॥

वरदाभयहस्तञ्च मृगीपरशुधारकम् ।
महेशरूपमेवोक्तं रूपभेदमथोच्यते ॥ १२५ ॥

---

१. वापि मण्डले ।
२. कर्मसादाख्यमुच्यते ।
३. लयावहम् ।
४. तन्मूर्तिपञ्चविंशति ।
५. सर्वाभरणसंयुक्तम् ।

प्रथमं सोमधारी स्याद् द्वितीयमुमया सह ।
तृतीयमुरसा रूढं चतुर्थं नृत्तरूपकम्[1] ॥ १२६ ॥
वैवाहं पञ्चमं विद्यात् षष्ठं भिक्षाटनं भवेत् ।
कामारिं सप्तमं विद्यात् कालारिश्चाष्टमो भवेत् ॥ १२७ ॥
नवमं त्रिपुरारिः स्याद् जालन्धरवधो दश ।
एकादशमजारिः स्याद् द्वादशं वीरभद्रकः ॥ १२८ ॥
त्रयोदशं हरिध्वंसमर्धनारी चतुर्दशम् ।
किरातः स्यात् पञ्चदशं [2]कङ्काली षोडशं भवेत् ॥ १२९ ॥
चण्डेशानुग्रहश्चैव तथा सप्तदशं भवेत् ।
विषापहरणश्चैव अष्टादशमिति स्मृतम् ॥ १३० ॥
चक्रदानस्वरूपश्च[3] एकोनविंशतिः स्मृतम् ।
विघ्नप्रसादो विंशः स्यात् [4]सोमस्कन्दस्ततः परम् ॥ १३१ ॥
उमास्कन्दश्चैकविंशो द्वाविंशश्चैकपातकः ।
सुखावहस्त्रयोविंशो भवेच्च तदनन्तरम् ॥ १३२ ॥
द्वाविंशमेकपादः स्यात् त्रयोविंशः सुखावहः ।
दक्षिणामूर्तिरूपन्तु [5]चतुर्विंशतिरीरितम् ॥ १३३ ॥
लिङ्गोद्भवस्वरूपन्तु पञ्चविंशं प्रकीर्तितम् ।
एते महेशरूपाः[6] स्युर्मूर्तिभेदाः प्रकीर्तिताः ॥ १३४ ॥
सोमधार्यादिलिङ्गान्तं कर्मणा च समुद्भवम् ।
एते महेश्वररूपाश्च कर्माख्यादिसमुद्भवाः ॥ १३५ ॥

---

१. नृत्यकोपमम् ।
२. कंकाल ।
३. स्वरूपं तु ।
४. उमास्कन्दैकविंशतिः ।
५. मिति स्मृतम् ।
६. रूपाश्च मूर्तिभेदाः ।

[1]तन्महेश्वरकोट्यंशाद् ब्रह्मविष्णुसमुद्भवौ ।
त्रिकोणमुमया सार्द्धं सोमसूर्याग्निलोचनम् ॥ १३६ ॥

घ्राणे वायुः समुत्पन्नो गणेशस्तु गलोद्भवः ।
षण्मुखो हृदये जातो नाभौ देवाश्च संभवाः ॥ १३७ ॥

पञ्चाशत्कोटिदेवाश्च [2]महेशांशसमुद्भवाः ।
ऋषयश्च तथा कोट्यो रोम्णि चैव [3]समुद्भवाः ॥ १३८ ॥

तत्त्वानामुद्भवः प्रोक्तः शक्तीनामुद्भवं शृणु ।
बिन्दुरूपदशांशेन चोमाशक्तिसमुद्भवः ॥ १३९ ॥

उमाऽम्बिका गणेशी च ईश्वरी च मनोन्मनी ।
एकैकेन दशांशेन जायते क्रमशस्तथा ॥ १४० ॥

एता वै शक्तयः पञ्च शिवाधीनाश्च शक्तयः ।
मनोन्मनीसहस्रांशाद् गौरी जातेति [4]कीर्तिता ॥ १४१ ॥

[5]तया सरस्वती दुर्गा उमायाश्च प्रभावतः ।
शची ज्येष्ठा च लक्ष्मीश्च [6]तथा चान्याश्च शक्तयः ॥ १४२ ॥

कोटिशक्तय एता वै गौरीदेहसमुद्भवाः ।
शक्तिभेदो विशेषेण समासात् परिकीर्तितः ॥ १४३ ॥

---

१. पञ्चविंशतिप्रकारेण रूपं प्रति पृथक् पृथक् ।
महेशस्य सहस्रांशाद् रुद्रदेवसमुद्भवः ॥
तन्महेश्वरकोट्यंशाद् विष्णुदेवसमुद्भवः ।
विष्णुदेवस्य कोट्यंशाद् ब्रह्मदेवसमुद्भवः ॥
नेत्रेषु सव्ये वोर्ध्वे च सूर्यसोमाग्निसम्भवाः ।
घ्राणे वायुसमुत्पन्नाः श्रोत्रे कीलादि चोद्भवाः ॥
आस्ये ज्ञानं समुत्पन्नं गणेशस्तु गलोद्भवः । इति पुस्तकान्तरे ।

२. महेशस्वेदसमुद्भवाः ।
३. कोटिर्निमेषेण ।
४. इति स्मृताः ।
५. लक्ष्मी हि ।
६. तथा शान्ताश्च शक्तयः ।

शिवाद्यो महेशान्ता एकत्रिंशत् प्रकीर्तिताः ।
यो वेत्ति तत्त्वभेदं हि स पूजास्थापनार्हकः ॥ १४४ ॥
एवं त्रिमूर्तिभेदस्तु समासात् परिकीर्तितः ।
[1]तत्त्वभेदो मया [2]प्रोक्तो वर्णभेदमतः शृणु ॥ १४५ ॥

इति वातुले शुद्धाख्यतन्त्रे तत्त्वभेदो नाम
प्रथमः पटलः समाप्तः ॥

---

१. तत्त्वमिदं । २. प्रोक्तम् ।

# द्वितीयः पटलः

अथातः संप्रवक्ष्यामि वर्णभेदविधिं परम् ।
[1]मन्त्राणामुद्भवं चैव वर्णानां च समुद्भवम् ॥ १ ॥

अकारादिक्षकारान्तमेकपञ्चाशदक्षरम्[2] ।
एते वर्णाः प्रशस्यन्ते कामितार्थप्रदायकाः ॥ २ ॥

[3]स्त्रीरूपाश्चैव पुंरूपास्तथा चोभयरूपकाः ।
[4]सर्वे वै देवतारूपाः प्रत्येकं वर्णरूपधृत् ॥ ३ ॥

वर्णो बीजं तथार्णं च लिङ्गमक्षरमात्रकम् ।
[5]एतानि षट् च नामानि वर्णपर्यायवाचकाः ॥ ४ ॥

[6]तेषां समुद्भवं नामरूपभेदं तथांशकम् ।
तत्त्वमन्त्रादिभेदश्च अधिदैवफलं तथा ॥ ५ ॥

स्थूलसूक्ष्माकृतिं चैव जीवोपाधिविभेदकम् ।
एतद् भेदं महासेन संक्षेपाच्छृणु षण्मुख ॥ ६ ॥

शिवतत्त्वे परे सूक्ष्मे बिन्दुरूपं तु जायते ।
बिन्दोर्नादः समुत्पन्नो नादाच्छक्तिरजायत ॥ ७ ॥

शक्तेस्तु जायते शब्दः [7]शब्दाज्जातं तु वाग्भवम् ।
वाग्भवाच्च कला जाताः कलाभ्यो विकलास्तथा ॥ ८ ॥

तस्माद्वै वाचको मन्त्रो मन्त्रस्तैरेव भिद्यते ।
एष सृष्टिक्रमः प्रोक्तस्तेषां लक्षणमुच्यते ॥ ९ ॥

---

१. मन्त्राणामुद्भवत्वं च ।
२. क्षकारान्ता एकपञ्चाशदक्षरा ।
३. स्त्रीरूपा इव ।
४. सर्वे च ।
५. एते वै ।
६. तेभ्यः ।
७. शब्दाज्जायेत वाग्भवम् ।

बिन्दुरूपा परा शक्तिर्नादश्चैवादिरीरितः[1] ।
शक्तिरिच्छेति विज्ञेया [2]शब्दश्च ज्ञानमीरितः ॥ १० ॥

वाग्भवः स्यात् क्रियाशक्तिः कला वै षोडश स्वराः ।
तेषां रूपं यथा प्रोक्तं प्रकृतिर्विकृतिस्तथा ॥ ११ ॥

प्रकृतिः सप्त वर्णाश्च विकृतिस्तु नवार्णकः ।
अकारश्च इकारश्च उकारश्च ऋकारकः ।
लकारश्चैव एकार [3]ओकारश्च तथैव च ॥ १२ ॥

एते सप्त स्वराः प्रोक्ता प्रकृतिस्तु समीरिता ।
[4]शेषा विकृतयः प्रोक्तास्तेषामुद्भव उच्यते ॥ १३ ॥

अकारेऽजायताकार इकारे त्वीसमुद्भवः ।
उकारे चैव ऊकार ऋकारे ॠसमुद्भवः ॥ १४ ॥

लकारादेव लृकारः [5]एकारादैसमुद्भवः ।
[6]ओकारादौ तथा ज्ञेयः क्रमेणैव समुद्भवः ॥ १५ ॥

[7]एता विकृतयः प्रोक्ता आकारादिनवार्णकाः ।
अकारादिविसर्गान्ता एते वै षोडश स्वराः ॥ १६ ॥

कला मात्रा स्वरा जीवाः प्रकृतिर्विकृतिस्तथा ।
प्राणात्मानौ च देही च कलापर्यायवाचकाः ॥ १७ ॥
(एतानि दशनामानि कलानामेव युज्यते ।
कलाभेदमिदं प्रोक्तं विकलाभेदकं शृणु ॥ १८ ॥

ककारादिक्षकारान्ता वर्णाश्च विकलाः स्मृताः ।
ककारादीनि वर्णानि अकारे तु समुद्भवाः ॥ १९ ॥

---

१. रूच्यते ।
२. शब्दो ज्ञानमिहोच्यते ।
३. तथैवोकार एव च ।
४. शेषास्तु विकृतिः ।
५. एकारे त्वैसमुद्भवः ।
६. ओकारे चौकार ।
७. एते वै विकृतिः ।

ओकारे तु समुद्भूता यकारादि दश स्मृताः।)
देहोपाधिशरीरश्च[1] क्षेत्राधारे तनुस्तथा ॥ २० ॥
व्यञ्जनं विकला शक्तिर्बिन्दुपर्यायवाचकाः।
कलानां विकलानां तु [2]त्रीणि रूपाणि वक्ष्यते ॥ २१ ॥
शिवाग्निभूतरुद्राश्च त्रयोदशतिथिस्तथा।
एते वै [3]स्वरवर्णाश्च पुंलिङ्गाश्चेति कीर्तिताः ॥ २२ ॥
पक्षवेदा रसो भानुर्मनुश्चैवाधिकारकम्।
एतानि षट्च [4]बीजानि स्त्रीलिङ्गाश्चेति कीर्तिताः ॥ २३ ॥
ऋ-ॠ-ऌ-ॡ च चत्वारो नपुंसकमिति स्मृताः।
ककारश्च गकारश्च चकारश्च जकारकः ॥ २४ ॥
टकारश्च डकारश्च तकारश्च दकारकः।
पकारश्च बकारश्च [5]पकारश्च हकारकः ॥ २५ ॥
एते द्वादशवर्णाश्च पुंलिङ्गाश्चेति कीर्तिताः।
खकारश्च घकारश्च छकारश्च झकारकः ॥ २६ ॥
ठकारश्च ढकारश्च थकारश्च धकारकः।
फकारश्च भकारश्च शकारश्च सकारकः ॥ २७ ॥
एतानि भानुबीजानि जायाश्चेति प्रकीर्तिताः।
शेषान् नपुंसकान् विद्यात् त्रयो भेदा इति स्मृताः ॥ २८ ॥
अकारादित्रयो व्योम ईकारादित्रयोऽनिलः।
[6]उकारादित्रिवर्णाश्च वैश्वानर इति स्मृताः ॥ २९ ॥
एकारादित्रयो ह्याप ओकारादित्रयो मही।
प्रकृतिस्तत्त्वबीजं[7] स्याद् विकृतिर्मूर्तिरुच्यते[8] ॥ ३० ॥

---

१. देहोपाधिशरीराणि।
२. विकलानाञ्च रूपत्रयमिहोच्यते।
३. रसवर्णाश्च।
४. नामानि।
५. क्षकारश्च।
६. उकारादीनि वर्णानि तेषामग्निरिति स्मृतः।
७. ह्रस्वभेदः।
८. मूर्तिरीरिता।

[1]प्रभात्रं विकलाः प्रोक्ता इत्येवं त्रिविधं भवेत् ।
प्रकृतिर्ह्रस्वमित्युक्ता विकृतिर्दीर्घमीरिता[2] ॥ ३१ ॥

एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ [3]इष्यते ।
(त्रिमात्रस्तु प्लुतो ज्ञेयो [4]व्यञ्जनं त्वर्धमात्रकम्)
व्यञ्जनं त्वर्धमात्रं स्यादित्येतल्लक्षणं भवेत् ॥ ३२ ॥

अकारः सर्वदैवत्यं रक्तं सर्ववशीकरम् ।
आकारः स्यात्परा शक्तिः स्वेदमाकर्षणं भवेत् ॥ ३३ ॥

इकारो विष्णुदैवत्यं श्यामं रक्षाकरं भवेत् ।
[5]मायाशक्तिरितीकारः पीतं स्त्रीणां वशीकरम् ॥ ३४ ॥

उकारो वास्तुदैवत्यं कृष्णं राज्यवशीकरम् ।
ऊकारो [6]भूमिदेवी च श्यामं लोकवशीकरम् ॥ ३५ ॥

ऋकारो ब्रह्मणो ज्ञेयं पीतं ग्रहविनाशकम् ।
शिखण्डिरूपं ॠकारमञ्जनं ज्वरनाशकम् ॥ ३६ ॥

अश्विनीभ्यां ऌ-ॡ चैव श्वेतरक्तं ज्वरापहम् ।
एकारो वीरभद्रं स्यात् पीतं सर्वार्थसिद्धिदम् ॥ ३७ ॥

ऐकारं वाग्भवं विद्यात् स्फाटिकं ज्ञानसिद्धिदम् ।
ओकारमीश्वरं विद्याज्ज्योतिः सर्वफलप्रदम् ॥ ३८ ॥

औकार आदिशक्तिः स्याच्छुक्लं [7]सर्वार्थसिद्धिदम् ।
अङ्कारस्तु महेशः स्याद् रक्तवर्णं सुखप्रदम् ॥ ३९ ॥
अकारः कालरुद्रश्च रक्तं पाशनिकृन्तनम् ।
प्राजापत्यं ककारश्च पीतं [8]पुष्टिकरं भवेत् ॥ ४० ॥

---

१. विभागो विकलः प्रोक्तः ।
२. मुच्यते ।
३. उच्यते ।
४. विकलम् ।
५. मायाशक्तिस्तु ईकारः ।
६. भूमिदैवत्यम् ।
७. सर्वत्र सिद्धिदम् ।
८. वृष्टिकरं भवेत् ।

खकारं जाह्नवी ज्ञेयं क्षीराभं पापनाशनम् ।
गकारं [1]गणरूपं स्याद् रक्ताभं विघ्ननाशनम् ॥ ४१ ॥

घकारं भैरवं ज्ञेयं मुक्ताभं शत्रुनाशनम् ।
ङकारं कालबीजं स्यात् कालं [2]सर्वजयं भवेत् ॥ ४२ ॥

चकारं चण्डरुद्रं स्यादञ्जनं त्रिपुरापहम् ।
छकारो भद्रकाली स्याद्राजावर्तं जयप्रदम् ॥ ४३ ॥

जकारो [3]जम्भहा ज्ञेयं रक्ताभश्च जयावहम् ।
झकारमर्धनारी स्यात् [4]श्यामं रक्तजयावहम् ॥ ४४ ॥

ञकारं कोटि विज्ञेयं पीतं रोगविनाशनम् ।
भृङ्गीशः स्यात् टकारन्तु रक्तवर्णसुखावहम् ॥ ४५ ॥

ठकारं चन्द्रबीजं स्यात् श्वेतं मृत्युविनाशनम् ।
डकारं चैकनेत्रं स्यात् पीतं कालजयं भवेत् ॥ ४६ ॥

ढकारं यमबीजं स्यान्नीलं मृत्युविनाशनम् ।
णकारं नन्दिबीजं स्याद् रक्ताभं चार्थसिद्धिदम् ॥ ४७ ॥

तकारं वास्तुदैवत्यं श्वेतं सर्वजयं भवेत् ।
थकारं धर्मिणो ज्ञेयं कुन्दाभं स्याज्जयप्रदम् ॥ ४८ ॥

दुर्गाबीजं दकारं स्यात् श्यामं सर्वार्थसिद्धिदम् ।
धकारं धनदं प्रोक्तं पीताभं चार्थसिद्धिदम् ॥ ४९ ॥

नकारं चैव सावित्री स्फाटिकं पापनाशनम् ।
पकारं पर्जबीजं स्याच्छुक्लाभं वृष्टिसिद्धिदम् ॥ ५० ॥

फकारं पाशुपत्यं स्याद् [5]ज्ञानं पापनिकृन्तनम् ।
बकारस्तु त्रिमूर्तिः स्यात् पीतं सर्वार्थसिद्धिदम् ॥ ५१ ॥

---

१. गणबीजं स्यात् ।
२. सर्वं जयं भवेत् ।
३. जम्भमित् ।
४. सर्वं ।
५. श्वेतं पाशनिकृन्तनम् ।

भकारं भार्गवं विद्याद् रक्तं सर्वार्थसिद्धिदम् ।
मकारं मदनं विद्याच्छाम्यं सर्वजयप्रदम् ॥ ५२ ॥
यकारं वायुदैवत्यं कृष्णमुच्चाटनं भवेत् ।
रकारं वह्निदैवत्यं रक्ताभं संहृतिर्भवेत् ॥ ५३ ॥
लकारं क्षितितत्त्वं स्यात् पीतं स्यात् स्तम्भनं भवेत् ।
वारणं स्याद् वकारं तु शुक्लाभं रोगनाशनम् ॥ ५४ ॥
लक्ष्मीरूपं शकारं स्याद्धेमाभं श्रीकरं भवेत् ।
षकारं द्वादशादित्यं रक्तं सर्वार्थसिद्धिदम् ॥ ५५ ॥
सकारं शक्तिरूपं स्याद् रक्तं स्थितिकरं भवेत् ।
हकारं शिवबीजं स्याच्छुद्धस्फटिकसन्निभम् ॥ ५६ ॥
अणिमाद्यष्टसिद्धिं च भुक्तिमुक्तिप्रदायकम् ।
ळकारं चात्मतत्त्वं स्याद् रक्ताभं सर्वसिद्धिदम् ॥ ५७ ॥
[1]विद्यातत्त्वं क्षकारं स्यात् क्षीराभश्च सुखप्रदम् ।
इत्येते ह्यधिदेवाश्च फलं वर्णक्रमेण तु ॥ ५८ ॥
अकारादिक्षकारान्ताः समासात् परिकीर्तिताः ।
कला जीवमिति ख्यातं विकला देहमुच्यते ॥ ५९ ॥
कलाश्च विकलाश्चैव देहिदेहमिति स्मृतम् ।
देहिरूपं द्विधा प्रोक्तं स्थूलं सूक्ष्मं तथैव च ॥ ६० ॥
देहमेकं विनिर्दिष्टं केवलं सूक्ष्ममुच्यते ।
अकारादिविसर्गान्तं केवलं तु स्वराकृति ॥ ६१ ॥
तत्स्थूलमिति विज्ञेयं सूक्ष्मं मध्यस्थितिर्भवेत् ।
ककारादीनि वर्णानि विकलाश्चेति कीर्तिताः ॥ ६२ ॥
तद्रूपं चार्धमात्रं तु सूक्ष्मं रूपमिहोच्यते ।
एवं कला च विकला स्थूलसूक्ष्माकृतिर्भवेत् ॥ ६३ ॥

---

१. विद्याबीजम् ।

कलानां तत्त्ववर्णानि संजीवार्णमिति स्मृतम् ।
कलाहीनं तु यद्वर्णं देहं तस्य विनिर्दिशेत् ॥ ६४ ॥
देहिदेहे सुसंयोज्य जीवे जीवं न योजयेत् ।
सर्वेषां देहभेदोऽस्ति ह्यात्मभेदो न विद्यते ॥ ६५ ॥
आत्मा च जीवमित्युक्तो जीवो जीवमिति स्मृतम् ।
तस्माज्जीवात् परं नास्ति पश्चान्न च विनिर्दिशेत् ॥ ६६ ॥
तस्माद् वै जीवदेहेषु कलाबीजं सुयोजयेत् ।
प्रत्येकं वर्णरूपं च देवतात्मकमुच्यते ॥ ६७ ॥
देवानां बीजनामानि वर्णास्तत्र प्रकल्पिताः ।
तस्माद् बीजानि चोक्तानि ज्ञात्वा मन्त्रान् समुद्धरेत् ॥ ६८ ॥
देवातास्थापने काले लिङ्गे वा कौतुकेऽपि वा ।
दीक्षायां प्रोक्षणे काले सकलीकरणे तथा ॥ ६९ ॥
बीजानि विन्यसेद् धीमान् मूर्धादिक्रमशस्तथा ।
एवमेव क्रमेणैव ज्ञात्वा वर्णान् विशेषतः ॥ ७० ॥
तत्तद्वर्णाकृतिं ध्यात्वा जपेत् सर्वार्थसिद्धिदम् ।
वर्णभेदो मया प्रोक्तश्चक्रभेदमतः शृणु ॥ ७१ ॥

इति श्रीवातुले शुद्धाख्यतन्त्रे वर्णभेदो नाम
द्वितीयः पटलः समाप्तः ॥

## अथ तृतीयः पटलः

अथातः संप्रवक्ष्यामि चक्रभेदविधिं परम् ।
सर्वदेवप्रियार्थाय सर्वलोकहिताय च ॥ १ ॥

मन्त्राणां बोधनार्थाय चक्ररूपं प्रकीर्तितम् ।
सर्वदेवमयं चक्रं सर्वं वर्णात्मकं विदुः ॥ २ ॥

चक्ररूपं तु तत्साक्षाच्छिवज्ञानस्वरूपकम् ।
तस्मात् तस्य स्वरूपं तु लक्षणं चाधिदैवतम् ॥ ३ ॥

वर्णन्यासक्रमं चैव संक्षेपाच्छृणु षण्मुख ।
महेन्द्रे मलये सह्ये[1] केदारे मन्दराचले ॥ ४ ॥

गङ्गातीरे तथा विन्ध्ये गह्वरे वाब्धितीरके ।
देवालये गवां गोष्ठे [2]नदीतीरतडागयोः ॥ ५ ॥

[3]अन्येषु शुद्धदेशेषु देशिकस्य गृहेऽपि[4] वा ।
इत्येतेषूक्तदेशेषु चक्रमुद्धारयेत् क्रमात् ॥ ६ ॥

भूप्रदेशे शुभे रम्ये निम्नोन्नतविवर्जिते ।
नाभिमात्रं खनित्वा [5]कुं पांशुना पूरयेत्ततः ॥ ७ ॥

ततोर्ध्वे मण्डपं कुर्याद् द्वादशस्तम्भसंयुतम् ।
चतुर्द्वारसमायुक्तं रन्धास्ताभिरलंकृतम् ॥ ८ ॥

वितानध्वजसंयुक्तं दर्भमालासमायुतम् ।
सर्वालङ्कारसंयुक्तं तरङ्गेणैव वेष्टितम् ॥ ९ ॥

दर्पणोदरसांकाश्यं गोमयेनानुलेपयेत्[6] ।
देशिकस्तु शुचिर्भूत्वा क्षीरभुग्विजितेन्द्रियः ॥ १० ॥

---

१. सिंहे ।
२. नदीतीरतडाके ।
३. पुण्येषु ।
४. तथा ।
५. तु ।
६. विलेपयेत् ।

[1]पूर्वरात्रोपवासी च प्रभाते यन्त्रमुद्धरेत् ।
सुस्नायाचम्य विधिवत् सकलीकृतविग्रहः ॥ ११ ॥
पुण्याहं वाचयित्वा च प्रोक्षयेद् [2]हृदयेन तु ।
रङ्गेण धातुना चैव [3]तन्मध्ये च क्रमाल्लिखेत् ॥ १२ ॥

पूर्वापरगतं तं तु [4]युग्मसूत्रं तु कारयेत् ।
विस्तारं द्वादशाङ्गुल्यं तथा वै दक्षिणोत्तरम् ॥ १३ ॥

मध्यमे चतुरस्रं स्याद् वृत्तं तत्कर्णिका भवेत् ।
युग्माङ्गुलेन तद्बाह्ये त्रिवृत्तं भ्रामयेद् बुधः ॥ १४ ॥

एकाङ्गुलेन तद्बाह्ये त्रीणि वृत्तानि कारयेत् ।
बाह्ये तु मुकुलाकाराद् द्वात्रिंशत् परितो [5]भवेत् ॥ १५ ॥

कर्णिकायास्तु परितश्चाष्टपत्राणि[6] वै लिखेत् ।
तद्बाह्ये चाष्टपत्राणि कृत्वा चोपदलानि वै ॥ १६ ॥

अष्टदिक्षु [7]समन्ताच्च पक्षे पक्षे गुणान् [8]गुणान् ।
तृतीयावरणे बाह्ये दलांश्चोपदलान् कुरु ॥ १७ ॥
[9]कर्णिकामध्यमे कुर्याद् रन्ध्रं तत्सूक्ष्मकर्णिका ।
तद्बाह्ये परितो लेख्यं चतुष्पत्रं सकेशरम् ॥ १८ ॥

राजसेनैव सूत्रं तु सात्त्विकेन दलानि वै ।
कर्णिकां पीतवर्णेन [10]बीजानि तामसेन तु ॥ १९ ॥
रक्तकृष्णस्थितेनैव बाह्यवृत्तत्रयं लिखेत् ।
तद्बाह्ये मुकुलान् सर्वान् रक्तवर्णेन लेखयेत् ॥ २० ॥

---

१. पूर्वरात्राधिवासी च ।
२. रुद्रियेण तु ।
३. लेख्यकम् ।
४. तत्र ।
५. लिखेत्
६. चाष्टपत्रं समालिखेत् ।
७. समन्तात्तु ।
८. गुणम् ।
९. कर्णिकामध्यके ।
१०. सूत्रपातं तु कारयेत् ।

चक्रन्यासो मया प्रोक्तो देवतान्यास उच्यते ।
कर्णिकामध्यमे[1] पूज्या शक्तिराधाररूपिणी ॥ २१ ॥

अम्बिकादिचतुःशक्तीः चतुष्पत्रेषु संयजेत् ।
वामादिशक्तयश्चाष्टौ प्रथमावरणे यजेत् ॥ २२ ॥

अष्टमूर्तिगणाश्चैव द्वितीयावरणे यजेत् ।
विघ्नेशान् लोकपालांश्च वसूंश्चैव तृतीयके ॥ २३ ॥

बाह्यरेखात्रयं पूज्यं मण्डलत्रितयं तथा ।
तत्पत्रे मुकुलाकारे वास्तुदेवान् प्रपूजयेत् ॥ २४ ॥

गन्धपुष्पादिभिश्चैव पूर्वादीनि स्वनामतः ।
देवतान्यासमेवोक्तं वर्णन्यासमथोच्यते ॥ २५ ॥

कर्णिकायां तु तन्मध्ये शिवबीजं तु विन्यसेत् ।
पूर्वपत्रे न्यसेद् बिन्दुमात्मबीजं तु दक्षिणे ॥ २६ ॥

वारुणे सूक्ष्मनादं तु विद्याबीजं तथोत्तरे ।
एवं तत्तद्दले न्यसेत् पञ्चरूपं षडानन ॥ २७ ॥

तत्तद्बाह्यदलेष्वेवं[2] क्रमाद्वर्णान् प्रविन्यसेत् ।
एकद्वित्रितये चैव एकद्वित्रितयं न्यसेत् ॥ २८ ॥

सश्च अश्च समूर्तिश्च कश्च भावश्च गश्च वै ।
सश्च इश्च समूर्तिश्च घश्च भावश्च चश्च वै ॥ २९ ॥

प्राश्च उश्च समूर्तिश्च छश्च भावश्च झश्च वै ।
वश्च ऋश्च समूर्तिश्च यश्च भावश्च ठश्च वै ॥ ३० ॥

लश्च लृञ्च समूर्तिश्च डश्च भावश्च णश्च वै ।
रश्च एश्च समूर्तिश्च तश्च भावश्च दश्च वै ॥ ३१ ॥

यश्च ओश्च समूर्तिश्च धञ्च भावञ्च पञ्च वै ।
मञ्च अञ्च समूर्तिञ्च फञ्च भावञ्च भञ्च वै ॥ ३२ ॥

---

१. कर्णिकामध्यके । २. बाह्यदले सर्वान् ।

[1]एतान् वर्णांश्च पूर्वादीन् विन्यसेत् प्रथमादिषु ।
एतच्चक्रं महासेन रहस्यमतिदुर्लभम् ॥ ३३ ॥
वर्णानामधिदेवांश्च पूजयेत्तु यथाक्रमम् ।
प्रासादादीनि मन्त्राणि सर्वमस्मिन् व्यवस्थितम् ॥ ३४ ॥
तच्चक्रं पूजयेन्नित्यं सर्वपूजासमं भवेत् ।
रोचनाकुङ्कुमोपेतैः[2] कर्पूरागुरुचन्दनैः ॥ ३५ ॥
भूर्जपत्रे लिखेत् चक्रं गुलिकां कारयेद् बुधः ।
शिरसा धारयित्वा तु सर्वकामार्थसिद्धिदम् ॥ ३६ ॥
आयुरारोग्यमैश्वर्यं पुत्रपौत्राभिवर्धनम्[3] ।
सर्वरक्षाकरं चैव सर्वव्याधिनिवारकम्[4] ॥ ३७ ॥
सर्वदुःखप्रशमनं सर्वक्षुद्रनिवारणम् ।
भूतप्रेतपिशाचाश्च वेतालब्रह्मराक्षसाः ॥ ३८ ॥
यन्त्ररूपधरं दृष्ट्वा दूराद् गच्छन्ति भीरवः ।
चक्रभेदो मया प्रोक्तो वर्गभेदमथ शृणु ॥ ३९ ॥

इति श्रीवातुले शुद्धाख्यतन्त्रे चक्रभेदो नाम
तृतीयः पटलः समाप्तः ॥



१. एनान् ।
२. रोचनाकुङ्कुमाभ्यां तु ।
३. पुत्रपौत्रादिवर्धनम् ।
४. विदारकम् ।

# अथ चतुर्थः पटलः

वर्गभेदं प्रवक्ष्यामि समासाच्छृणु षण्मुख ।
वर्गस्तु त्रिविधः[1] प्रोक्तः प्रथमः[2] स्थितिवर्गकः ॥ १ ॥

[3]सृष्टिवर्गो द्वितीयः स्यात् संहारस्तु तृतीयकः ।
[4]स्थितिमार्गस्त्रिवर्गः स्यात् सृष्टिश्चाष्टविधा भवेत् ॥ २ ॥

संहारः पञ्चवर्गः स्यात् तेषां लक्षणमुच्यते ।
[5]चक्रे यथा स्थिता वर्णा यथा वै स्थितिरीरिता[6] ॥ ३ ॥

[7]सकाराद्यष्टवर्णाश्च प्रथमावरणे लिखेत् ।
प्रथमो वर्ग इत्युक्तः सात्त्विकं[8] नामधेयकम् ॥ ४ ॥

द्वितीयावरणे वर्णा हकाराद्याश्च षोडश ।
द्वितीयवर्ग इत्युक्तो राजसं[9] संप्रकीर्तितम् ॥ ५ ॥

तृतीये तु ककारादिचतुर्विंशतिवर्णकाः[10] ।
तृतीयो वर्ग इत्युक्तस्तामसं [11]नामधेयकम् ॥ ६ ॥

वर्गभेदो मया प्रोक्तः स्थितिमार्गे[12] प्रकीर्तितः ।
पञ्च प्रासादमन्त्रांश्च स्थितिमार्गेण चोद्धरेत् ॥ ७ ॥

एवं स्थितिक्रमः प्रोक्तः सृष्टिमार्गं ततः शृणु ।
अकारादिक्षकारान्तवर्णानां सृष्टिरुच्यते ॥ ८ ॥

---

१. तृतयः ।
२. उच्यते ।
३. द्वितीयः सृष्टिवर्गकः ।
४. स्थितिमात्रम् ।
५. चक्रे यथा स्थितं वर्णं ।
६. रुच्यते ।
७. प्रथमावरणे वर्गः सकारादीनि चाष्टकम् ।
८. चोच्यते ।
९. राजसं तु प्रशस्यते ।
१०. चतुर्विंशाक्षरं तथा ।
११. चेति कीर्तितम् ।
१२. मार्गः ।

तस्मात् सृष्टिक्रमेणैव [1]वक्ष्यन्ते चाष्टवर्गकाः ।
अवर्गं प्रथमं विद्यादैन्द्रवर्गं उदाहृतः ॥ ९ ॥

द्वितीयस्तु [2]कवर्गश्च वह्निवर्गः प्रकीर्तितः[3] ।
चवर्गस्तु तृतीयश्च याम्यवर्गं उदाहृतः ॥ १० ॥

टवर्गस्तु चतुर्थश्च नैर्ऋतो वर्ग ईरितः[4] ।
पञ्चमस्तु तवर्गश्च वारुणो वर्ग ईरितः[4] ॥ ११ ॥

षष्ठं विद्यात् पवर्गश्च मरुद्वर्गं उदाहृतः ।
सप्तमस्तु यवर्गश्च कौबेरो वर्ग ईरितः[4] ॥ १२ ॥

शवर्गं चाष्टमं विद्यादीशवर्गं उदाहृतः ।
एते वै चाष्टवर्गास्ते सृष्टिमार्गं उदाहृतः ॥ १३ ॥

सदाशिवस्य मन्त्राणां पञ्चब्रह्माङ्गमेव च ।
सौम्यमन्त्रान् समस्तांश्च सृष्टिमार्गेण चोद्धरेत् ॥ १४ ॥

एवं सृष्टिक्रमः प्रोक्तः संहारश्च ततः शृणु ।
क्षकारादि अकारान्तं संहार इति कीर्तितः[5] ॥ १५ ॥

क्षकारादि अकारान्तं [6]दशार्णं प्रथमं विदुः ।
पार्थिवो वर्ग इत्युक्तो मकारादि दशाक्षरम् ॥ १६ ॥

द्वितीयो वर्ग इत्येव[7] आपो वर्ग उदाहृतः ।
पकारादि चकारान्तं तृतीयं चानलं विदुः ॥ १७ ॥

तकारादि ककारान्तं चतुर्थं मारुतं विदुः ।
( ङकारादि चैकारान्तं दशार्णं मारुतं विदुः ।
एकारादि ह्यकारान्तं रुद्रार्णं व्योमवर्गकम् ॥ )
अःकारादि अकारान्तं रुद्रान्तं व्योमवर्गकम् ॥ १८ ॥

---

१. अष्टवर्गाणि चोच्यते ।
२. कवर्गः स्यात् ।
३. उदाहृतः ।
४. उच्यते ।
५. उच्यते ।
६. दशकम् ।
७. इत्युक्तो हि ।

एते वै पञ्चवर्गास्ते संहारेति प्रकीर्तिताः ।
समस्तान् रुद्रमन्त्रांश्च[1] संहारेण समुद्धरेत् ॥ १९ ॥
एवं त्रिवर्गभेदास्ते[2] कीर्तिताश्च[3] समासतः ।
वर्गभेदो मया प्रोक्तो वर्णनामान्यथ शृणु ॥ २० ॥
चक्रे तु कर्णिकादीनि वर्णानि[4] च यथाक्रमम् ।
वक्ष्ये नामानि संक्षेपाच्छृणु तत्त्वं शिवादिकम् ॥ २१ ॥
नादं गुह्यं परं जीवं देहिभूतञ्च पञ्चमम् ।
सान्तं तत्त्वान्तभूतान्तं शिवार्णं शून्यमव्ययम् ॥ २२ ॥
सूक्ष्मत्वाद् घोषरूपत्वान्नादमित्यभिधीयते ।
चराचरादिभूतेषु जीवरूपं हृदि स्थितम् ॥ २३ ॥
तस्माद् गुह्यमिदं प्रोक्तं परं भावात्परं स्थितम् ।
जीवः शिव इति ज्ञेयस्तस्माज्जीवः[5] शिवः स्मृतः ॥ २४ ॥
शिवाद्यवनिपर्यन्तं देहत्वाद्देहि चोच्यते ।
[6]आकाशत्वात् सजीवत्वादुद्भूतश्चेति कीर्तितम् ॥ २५ ॥
तत्त्वाद्येन क्रमाद् व्योम पञ्चतत्त्वाच्च पञ्चमम् ।
सकारस्य परं तस्मात् सान्तं चेति प्रकीर्तितम् ॥ २६ ॥
कलादि च शिवान्तत्वात् तत्त्वान्तमिति कीर्तितम् ।
पृथिव्यादिक्रमाद् व्योम भूतान्तमिति कीर्तितम् ॥ २७ ॥
सर्वव्यापिप्रभावत्वाच्छिवार्णं चेति[7] कीर्तितम् ।
वाङ्मनोऽतीतभावत्वाच्छून्यं चेति प्रकीर्तितम् ॥ २८ ॥
अक्षीणत्वान्महासेन अव्ययं चेति कीर्तितम् ।
[8]पर्यायनामान्येतानि हकारस्य स्मृतानि च ॥ २९ ॥

---

१. रुद्रमन्त्राणि सर्वाणि ।
२. भेदानि ।
३. कीर्तितानि ।
४. वर्णानि तु ।
५. इति ।
६. अकायत्वादजीवत्वात् ।
७. मिति कीर्तितम् ।
८. एते पर्यायनामानि हकारस्य विधीयते ।

[1]कर्णिकासंस्थितं बीजमिदं च परिकीर्तितम् ।
प्रवक्ष्ये केसराणाञ्च चतुष्पात्रेषु वर्णकान् ॥ ३० ॥

आधारशक्तिकार्याणि परबिन्दुरनुक्रमात् ।
बिन्दोः पर्यायनामानि पञ्चैतानि स्मृतानि च ॥ ३१ ॥

ळकारमात्मबीजञ्च देहिक्षेत्रज्ञभोगिनः ।
[2]एतानि पञ्चनामानि ळकारस्योदितानि च ॥ ३२ ॥

आधेयं च शिवश्चैव करणं परनामकम् ।
नादपर्यायनामानि पञ्चैतानि स्मृतानि च ॥ ३३ ॥

[3]विद्या बीजं क्षकारश्च कूटवर्णं तथैव च ।
वर्गान्तं चैव पञ्चैते क्षकारस्य प्रकीर्तिताः ॥ ३४ ॥

बिन्द्वादिवेदबीजानि कर्णिकर्णा इति स्मृताः ।
सकारः शक्तिबीजश्च[4] प्रथमं शुक्लधातुकम् ॥ ३५ ॥

षकारो द्वितयं भानुरविमज्जादिवाकराः ।
शकारं श्री रमा लक्ष्मीरस्थि च त्रितयं विदुः ॥ ३६ ॥

वकारो वारुणो[5]ऽप्यापश्चतुर्थभेद[6] ईरितः ।
लकारः पञ्चमं चैन्द्रमासश्च धरणी मही ॥ ३७ ॥

रकारश्चानलं रक्तं षष्ठं क्रोधश्च पावकः ।
यकारश्चानिलः स्नायुः सप्तमो मरुतस्ततः ॥ ३८ ॥

---

१. कर्णिका बीजमेवोक्तं केसराणि तथोच्यते ।
आधारशक्तिकार्यञ्च परो बिन्दुरिति स्मृतः ॥
एते वै पञ्चनामानि बिन्दुपर्यायवाचकाः ।
एकारञ्च शिवा ध्येयं परं नादान्तमेव च ।
एते वै पञ्च नामानि नादपर्यायवाचकाः ॥

२. एते वै पञ्चनामानि ककारस्याभिधीयते ।

३. बिन्दुरादिचतुर्थानि कर्णिकाबीजमिष्यते ।

४. बीजं स्यात् ।

५. ह्याप ।

६. मेदसि स्थितम्

मकारः कालमृत्युश्च अष्टमं मृत्युकारकम् ।
[1]एतानि चाष्टवर्गस्य नामान्येवं स्मृतानि च ॥ ३९ ॥

द्वितीयस्तु कला ज्ञेयस्तत्कलाद्यक्षरं शृणु ।
[2]आदिवर्णादिबीजश्च वर्गादिश्च कलादि च ॥ ४० ॥

स्वरादिश्चैव मात्रादिरादिप्रकृतिरेव च ।
जीवादिश्च कला मात्रा आदिश्चैव स्वरस्तथा ॥ ४१ ॥

एते पर्यायनामानि [3]अकारस्य विधीयते ।
अकारादीनि शेषाणि कलाश्चेति प्रकीर्तिताः ॥ ४२ ॥

तृतीयवर्णो वर्णाश्च विकलाश्च प्रकीर्तिताः ।
वर्णानां चैव वर्गाणामेवमेवं प्रकीर्तितम् ॥ ४३ ॥

एवमेव वर्गवर्णादि ज्ञात्वा मन्त्रान् समुद्धरेत् ।
वर्गभेदो मया प्रोक्तो मन्त्रभेदमथ शृणु ॥ ४४ ॥

इति श्रीवातुले शुद्धाख्यतन्त्रे वर्गभेदो नाम
चतुर्थः पटलः समाप्तः ॥



१. एते प्रथमवर्गस्य त्वेवं नाम प्रकीर्तिताः ।
२. आदिबीजश्च वर्णादि । ३. ज्ञात्वा मन्त्रान् समुद्धरेत् ।

# अथ पञ्चमः पटलः

अथातः संप्रक्ष्यामि मन्त्रभेदविधिं परम् ।
भुक्तिदं मुक्तिदं चैव सर्वकामार्थसिद्धिदम् ॥ १ ॥

मन्त्रस्तु देवतारूपं मन्त्ररूपमिदं जगत् ।
परार्द्धकोटिमन्त्राश्च शिववक्त्राद्विनिर्गताः ॥ २ ॥

कर्षणादिक्रियाः सर्वा मन्त्रेणैव प्रकीर्तिताः ।
तस्मान्मन्त्रक्रियार्थत्वाद्विना मन्त्रं क्रिया न च ॥ ३ ॥

मन्त्रेण देवता स्थाप्या मन्त्रेण यजनादयः ।
स्नानं मन्त्रेण कर्तव्यं मन्त्रेणाहुतितर्पणम् ॥ ४ ॥

प्रायश्चित्तं तु मन्त्रेण दीक्षा मन्त्रेण चैव हि ।
अणिमादीनि मन्त्रेण सालोक्यादिपदं तथा ॥ ५ ॥

मन्त्रेण पातकादीनि मुच्यन्ते सर्वजन्मिनाम् ।
सर्वमन्त्रक्रियाश्चैव मन्त्रं शृणु षडानन ॥ ६ ॥

मननं सर्वपक्षेषु त्राणं संसारसागरात् ।
मननत्राणधर्मत्वाद्[1] मन्त्र इत्यभिधीयते ॥ ७ ॥

[2]आह्वानतः स्वनाम्ना तु जनः संनिहितो [3]यथा ।
तथा मन्त्रप्रयोगेण शिवः[4] सन्निहितो भवेत् ॥ ८ ॥

तस्माद् मन्त्रं महासेन रहस्यं न प्रकाशय ।
पूर्वोक्तदेशे कृत्वा तु मण्टपं लक्षणान्वितम् ॥ ९ ॥

गोमयेनानुलिप्याथ मण्टपं भूषयेत् ततः ।
प्रोक्षयेदस्त्रमन्त्रेण तन्मध्ये चक्रमालिखेत् ॥ १० ॥

---

1. प्राणधर्मित्वात् ।
2. यथादरः ।
3. भवेत् ।
4. तत्र सन्निहितः शिवः ।

कर्णिकां केसरांश्चैव दलान्युपदलानि वै ।
क्रमेणैव तु संलिख्य चाधारादीन् प्रपूजयेत् ॥ ११ ॥

तन्मध्ये शिवपूजादीन् प्रकुर्यात् पूर्ववत् क्रमात् ।
तच्चक्रे स्थितिमार्गेण प्रासादं तु समुद्धरेत् ॥ १२ ॥

प्राशब्दः स्याच्छिवो ज्ञेयः साशब्दः शक्तिरुच्यते ।
तत्स्वरूपं तु दःशब्दस्त्रिवर्णमभिधीयते ॥ १३ ॥

दानेन मुक्तिदो यस्मात्तस्मात् प्रासाद उच्यते ।
अज्ञानज्ञानविज्ञेयं त्रिविधं विद्यते क्रमात् ॥ १४ ॥

अन्धकारवदज्ञानं [1]दीपवज्ज्ञानमुच्यते ।
ज्ञेयं भास्करवत् प्रोक्तमिति ज्ञानं विशिष्यते ॥ १५ ॥

शिवज्ञानात् परं ज्ञानं नहि लोकेषु विद्यते ।
प्रासादः पञ्चधा ज्ञेयः[2] तद्भेदो वक्ष्यतेऽधुना ॥ १६ ॥

शुद्धो मूलं तथा तत्त्वमादिरात्मेति पञ्चधा ।
प्रासादा[3] उदितास्तेषां शुद्धप्रासाद उच्यते ॥ १७ ॥

शुद्धः शिव इति प्रोक्तस्तस्माच्छुद्धः प्रकीर्तितः ।
नादाख्यं यत्परं बीजम् आदिस्वरसमन्वितम् ॥ १८ ॥

(ह इति)

तच्छुद्धमिति विज्ञेयं [4]सर्वभूतव्यवस्थितम् ।
मुक्तिदं परमं गुह्यं [5]सर्वसिद्धिप्रदायकम् ॥ १९ ॥

तद्विदित्वा महासेन देशिकः पाशभिद् भवेत् ।
शुद्धप्रासाद एवोक्तो मूलप्रासादमुच्यते ॥ २० ॥

सर्वेषामेव तत्त्वानां मूलं शिवमिति स्मृतम् ।
तस्माद् मूलमिति ज्ञेयं[6] मूलमन्त्रस्तदुच्यते ॥ २१ ॥

---

१. ज्ञानदीपवदुच्यते । २. प्रोक्तः ।
३. पञ्चप्रासादमित्युक्तम् । ४. सर्वभूते ।
५. सर्वकारणकारणम् । ६. प्रोक्तं ।

षष्ठं त्रयोदशान्तं च पञ्चमे विनियोजयेत् ।
शिवशक्तिसमायुक्तः शिवमन्त्र इति स्मृतः ॥ २२ ॥
( ह्रौं इति )
शिवमेकं विजानीयाद् मन्त्रमूर्तिः परः शिवः ।
नादो किरीटमित्युक्तो विन्दुर्वक्त्रमुदाहृतः ॥ २३ ॥
हकारो देह इत्युक्तो द्वौ शृङ्गौ च भुजौ तथा ।
वह्निपादद्वयं विद्यान्मन्त्रमूर्तिरुदाहृता ॥ २४ ॥
स्थूलं सूक्ष्मं परं चैव त्रिविधं तु प्रकीर्तितम् ।
स्थूलं वर्णाकृतिं विद्याच्छूक्ष्मं तच्छब्द उच्यते ॥ २५ ॥
अकारादिक्षकारान्तं पाञ्चभौतिकमुच्यते ।
पञ्च पञ्च प्रयुञ्जीत पञ्चाशद्वर्णमीरितम् ॥ २६ ॥
अन्तर्यत् पञ्चमं वीजं तत्परं परिकीर्तितम् ।
पाञ्चभौतिकसम्बन्धः शिवाधार इति स्मृतः ॥ २७ ॥
एवं ज्ञात्वा तु मन्त्रज्ञः सर्वपापात् प्रमुच्यते ।
एवं वै पञ्चभूतत्वं जीवप्रासाद उच्यते ॥ २८ ॥
ब्रह्मादिस्तम्भपर्यन्तं जगद्योनिश्चराचरम् ।
भूतं भव्यं भविष्यद्यत् प्रासादे सर्वमुद्धृतम् ॥ २९ ॥
मूलप्रासाद इत्युक्तस्तत्त्वप्रासाद उच्यते ।
तत्त्वं चैवादिवीजं च तत्त्वान्ते विनियोजयेत् ॥ ३० ॥
( हुं इति )
कार्यकारणसंयुक्तं सर्वतत्त्वात्मकं विदुः ।
तत्त्वप्रासाद इत्युक्त आदिप्रासाद उच्यते ॥ ३१ ॥
प्रथमं चतुर्दशं चैव जीवान्ते विनियोजयेत् ।
आधाराधेयसंयुक्तमादिबीजमिहोच्यते ॥ ३२ ॥
( ह्रौं इति )
आदिशक्तिस्ववीजेन संयोगादभिधीयते ।
एतच्छिवमयं वीजं सर्वसिद्धिकरं परम् ॥ ३३ ॥

आदिप्रासाद इत्युक्त आत्मप्रासाद उच्यते ।
भूतान्तं तु समुद्धृत्य आदिप्रकृतिसंयुतम् ॥ ३४ ॥

प्रथमं तु समुद्धृत्य [1]षोडशस्वरसंयुतम् ।
तयोर्मध्यगता शक्तिरात्मबीजमिति स्मृतम् ॥ ३५ ॥

( हंस इति )

हृत्सरोरुहमध्ये च संस्थितं सर्वकारणम् ।
आत्मप्रासाद इत्युक्तो जीवप्रासाद उच्यते ॥ ३६ ॥

एते वै शिवबीजत्वाच्छिवमन्त्रा इति स्मृताः ।
शुद्धादि चात्मपर्यन्तं स्थितिमार्गेण चोद्धृताः ॥ ३७ ॥

शिवमन्त्रो मया प्रोक्तः सदाशिवमथ शृणु ।
सादाख्यं साम्यरूपत्वात् सृष्टिमार्गेण चोद्धरेत् ॥ ३८ ॥

मोक्षदश्चाभिवृद्धिश्च काम्यशान्तिकपौष्टिकाः ।
पञ्चाक्षरो मोक्षदः[2] स्यादभिवृद्धिः षडक्षरः ॥ ३९ ॥

काम्यमष्टाक्षरं विद्याच्छान्तिकं च नवाक्षरम् ।
पौष्टिकं दशबीजं स्याद् मन्त्राः पञ्चविधाः स्मृताः ॥ ४० ॥

ईशे [3]तुरीयमैन्द्रे च चतुर्दशकलान्वितम् ।
परापरसमायुक्तं शक्तिं चाधिकलान्वितम् ॥ ४१ ॥

( हौं सदाशिवाय )

सोमान्तौ द्वित्रिकलोपेतौ सोमादित्वादिसंयुतम् ।
अयं [4]पञ्चाक्षरो मन्त्रः परमो मुक्तिदो भवेत् ॥ ४२ ॥

भूतान्तं तु समुद्धृत्य [5]चतुर्दशकलान्वितम् ।
कार्यकारणसंयुक्तमीशाद्यं [6]त्रिकलान्वितम् ॥ ४३ ॥

---

१. आदिप्रकृतिसंयुतम् ।
२. मोक्षदं पञ्चाक्षरं पञ्च ।
३. तुरीयमुद्धृत्य ऐन्द्रे चतुर्दशान्वितम् ।
४. पञ्चाक्षरमिदं प्रोक्तं मुक्तिदं परमं विदुः ।
५. सप्तसप्तस्वरान्वितम् ।
६. त्रिकलायुतम् ।

सोमान्तं द्विकलोपेतं सोमादित्वादिसंयुतम् ।
[1]वर्णान्तं चादिसंयुक्तं मारुतान्तं कलान्वितम् ॥ ४४ ॥

( ह्रौं शिवाय नम इति )

एवं षडक्षरः प्रोक्तः सर्वसिद्धिप्रदायकः ।
गुह्यं चतुर्दशोपेतं शिवशक्तिसमायुतम् ॥ ४५ ॥

वर्गादिजीवसंयुक्तं शक्तिशक्तिकलान्वितम् ।
( भूतान्तमादिप्रकृति कार्यकारणसंयुतम् ।
ईशे तृतीयवर्णश्च प्रथमस्वरसंयुतम् । )
शक्तिमात्रादिसंयुक्तं वारुणे तु तृतीयकम् ॥ ४६ ॥

तृतीयं चास्थिसंयुक्तं सोमान्तं द्विकलायुतम् ।
अनिलादिकलोपेतमेवमष्टाक्षरं विदुः ॥ ४७ ॥

( ह्रौं हं सदाशिवाय इति )

एवमष्टाक्षरः प्रोक्तः सर्वसम्पत्प्रदायकः ।
भूतान्तं तु समुद्धृत्य [2]षट्पञ्चत्रिकलायुतम् ॥ ४८ ॥

कार्यकारणसंयुक्तं गुह्यं मात्रादिबिन्दुयुक् ।
शक्तिमात्रादिसंयुक्तं[3] सप्तमान्तं विसंयुतम् ॥ ४९ ॥

अनिलान्तं त्वादियुक्तं[4] लयादिवर्णादिकम् ।
तयोर्मध्यगतं यान्तमादिबीजेन संयुतम् ॥ ५० ॥

सप्तमाद्यं समुद्धृत्य षट्पञ्चककलायुतम् ।
बिन्दुनादसमायुक्तं नवाक्षरमिदं विदुः ॥ ५१ ॥

( ह्रौं हं स्वं मं क्षं रं तं यं मं इति )

एतदेव परं बीजं सर्वसिद्धिप्रदायकम् ।
परात्परं समुद्धृत्य चैन्द्रे चतुर्दशान्वितम् ॥ ५२ ॥

---

१. वर्णान्तमसंयुक्तम् । २. चतुर्दशकलान्वितम् ।
३. गुह्यमात्रादिसंयुक्तं शक्तिं तस्योपरि न्यसेत् । ४. मादिभूतान्तम् ।

कार्यकारणसंयुक्तं शक्तिबीजसमन्वितम् ।
ईशे तृतीयकं चाधोपरि द्वितीयजीवयुक् ॥ ५३ ॥

सप्तमान्तं विसंयुक्तं षष्ठान्तं षट्कलान्वितम् ।
भूतान्तं तु समुद्धृत्य वह्निं तस्योपरि न्यसेत् ॥ ५४ ॥

पञ्चमान्तं कलोपेतं भान्तमेकारसंयुतम् ।
पञ्चपञ्चमादिश्यात् पष्ठान्तं सप्तमादिकम् ॥ ५५ ॥

( ह्रौं सं सं ष्वं मूं ह्रूं मैं नं मं इति )

बिन्दुनादसमायुक्तं दशबीजमिहोच्यते ।
एते पञ्चविधाः प्रोक्ता मन्त्राः पञ्चाक्षरादयः ॥ ५६ ॥

सदाशिवमिदं प्रोक्तं महेशं शृणु षण्मुख ।
महेशं रुद्रमूर्तिः स्यात् संहारेण समुद्धरेत् ॥ ५७ ॥

तस्य भेदस्त्रिधा ज्ञेयः सृष्टिस्थितिलयं तथा ।
भूमौ तृतीयमुद्धृत्य सलिलाद्यसमन्वितम् ॥ ५८ ॥

भूमौ नवार्णकं विद्यादम्बरे तु षडक्षरम् ।
आधाराधेयसंयुक्तं सृष्टिबीजमिहोच्यते ॥ ५९ ॥

( हं रं एं इति )

पृथिव्यां तु तृतीयं स्याद्व्योमान्तेन समन्वितम् ।
शक्तिं तस्योपरि न्यस्य तद्वर्गे तूर्यकं भवेत् ॥ ६० ॥

लयाद्यमबलं चैव पार्थिवान्तेन संयुतम् ।
व्योमे षष्ठसमायुक्तं कार्यकारणसंयुतम् ॥ ६१ ॥

( हं सं क्षं रं यं एं इति )

स्थितिबीजमिदं प्रोक्तं संहारश्चाधुनोच्यते ।
वह्निवर्गे तृतीयं स्याद् व्योमान्तेन समायुतम् ॥ ६२ ॥

शिवशक्तिसमायुक्तं पृथिव्यादि समुद्धरेत् ।
द्वितीयमाद्यमुद्धृत्य तेजो वै पार्थिवान्तकम् ॥ ६३ ॥

व्योमो षड्वर्णकं विन्दुः संहारं चेति कीर्तितम् ।
( हं क्षं मं रं सं इति )
महेश एवमाख्यातं शक्तिबीजमथ शृणु ॥ ६४ ॥
शक्तिबीजं समुद्धृत्य विकृतिर्वह्निसंयुतम् ।
बिन्दुनादसमायुक्तं शक्तिबीजमिदं परम् ॥ ६५ ॥
( स्रां इति )
प्रथमा शक्तिरित्युक्ता द्वितीया शक्तिरुच्यते ।
नादाद्यन्तं समुद्धृत्य षष्ठं मायासमन्वितम् ॥ ६६ ॥
( स्रीँ इति )
बिन्दुनादसमायुक्तं तृतीया शक्तिरीरिता ।
तत्त्वान्ताद्यं धरावह्निबिन्दुनादसमायुतम् ॥ ६७ ॥
( स्रुँ इति )
तृतीया शक्तिरित्युक्ता जीवाद्यं वह्निसंयुतम् ।
कलाद्वादशकाभेद्यं बिन्दुनादसमायुतम् ॥ ६८ ॥
( स्रैँ इति )
चतुर्थी शक्तिरित्युक्ता भूताद्यं वह्निसंयुतम् ।
[1]चतुर्दशकलोपेतं बिन्दुनादसमन्वितम् ॥ ६९ ॥
पञ्चमी शक्तिरित्युक्ता शिवाङ्गमिव चोद्धृतम् ।
एतासां पञ्चशक्तीनामुमाशक्त्यादिरेव च ॥ ७० ॥
[2]वह्नेर्गणं समुद्धृत्य वह्निमायासमन्वितम् ।
बिन्दुनादसमायुक्तं गौरीबीजमिदं परम् ॥ ७१ ॥
( स्रीँ इति )
अन्यासां चैव शक्तीनां स्वनामाद्यक्षरेण तु ।
कार्यकारणसंयुक्तं सर्वेषां शक्तिरुच्यते ॥ ७२ ॥

---

१. भूतान्ताद्यं समुद्धृत्य चतुर्दशकलान्वितम् ।
वह्निबिन्दुसमायुक्तं पञ्चमी शक्तिरीरिता ॥
२. वह्निवर्णं ।

मन्त्र एवं समाख्यातो मन्त्रन्यासमथ शृणु ।
अङ्गस्य स्थापनाकाले तत्त्वमन्त्रांश्च विन्यसेत् ॥ ७३ ॥

कुम्भेष्वन्तर्गतान् मन्त्रान् लिङ्गवत् पूरितान् बहिः ।
तयोर्योगे क्रियावस्था सुप्रतिष्ठेति कीर्तिताः ॥ ७४ ॥

प्राणप्रकृतियोगं तु ज्ञात्वा स्थापनमाचरेत् ।
प्राणो मन्त्र इति प्रोक्तः प्रकृतिर्मूर्तिरीरिता ॥ ७५ ॥

मन्त्रमूर्तिसुसंयोगः शिवसान्निध्यकारणम् ।
तस्माद् वै मन्त्रं मूर्तिं च अङ्गमध्ये तु विन्यसेत् ॥ ७६ ॥

मूर्ध्नि प्रविन्यसेच्छुद्धं मूलं स्यात् सूत्रमध्यके ।
तत्त्वं तु दक्षिणे प्रोक्तमादिवामे तु विन्यसेत् ॥ ७७ ॥

आत्मानं सूत्रमूले तु विन्यसेत्तु विचक्षणः ।
मन्त्रन्यासो मया प्रोक्तस्तत्त्वन्यासमथ शृणु ॥ ७८ ॥

कर्मेशं पुरतो न्यस्य कर्तुः सव्ये तु विन्यसेत् ।
मूर्तिं च पश्चमे न्यस्य त्वमूर्तिं चोत्तरे न्यसेत् ॥ ७९ ॥

ऊर्ध्वे तु शिवसादाख्यं पञ्चतत्त्वानि विन्यसेत् ।
पञ्चमूर्तिमयं देवं सर्वकारणकारणम् ॥ ८० ॥

अष्टत्रिंशत्कलोपेतं ध्यात्वा तु सकलीकृतम् ।
आवाहयेत् ततो देवं पञ्चाक्षरविधानतः ॥ ८१ ॥

षडक्षरेण मन्त्रेण स्थापयेच्च विचक्षणः ।
अष्टाक्षरेण मन्त्रेण सन्निधीकरणं कुरु ॥ ८२ ॥

निवेदय नवार्णेन दशबीजेन पूजय ।
पाद्यगन्धादिकं दद्याद् ब्रह्माङ्गैः सह बुद्धिमान् ॥ ८३ ॥

सकलस्थापनाकाले तद्बीजं हृदि विन्यसेत् ।
सृष्टिमूर्तिंन्यसेत् सृष्टिं स्थितिमूर्तिंन्यसेत् स्थितिम् ॥ ८४ ॥

संहारे संहृतं बीजं विन्यसेत्तु विचक्षणः ।
शक्तीनां स्थापनाकाले तद्बीजं हृदि विन्यसेत् ॥ ८५ ॥

क्रियाशरीरमित्युक्तं मन्त्रो जीवमिति स्मृतः ।
क्रियामन्त्रप्रयोगो हि शिवसान्निध्यकारणम् ॥ ८६ ॥

तस्माज्जीवं शरीरं च ज्ञात्वा सर्वं समाचरेत् ।
मन्त्रभेदो मया प्रोक्तः प्रणवं च ततः शृणु ॥ ८७ ॥

इति श्रीवातुले शुद्धाख्यतन्त्रे मन्त्रभेदो नाम
पञ्चमः पटलः समाप्तः ॥



# अथ षष्ठः पटलः

अथ प्रणवभेदं तु प्रवक्ष्यामि समासतः ।
सर्वपापहरं चैव मुक्तिदं परमं नृणाम् ॥ १ ॥

प्रणवं सर्वदेवाख्यं सर्वदेवमयं विदुः ।
सर्वेषां चैव मन्त्राणां प्रणवः प्राण उच्यते ॥ २ ॥

प्रणवः पञ्चभेदः स्यात् तद्भेदं शृणु षण्मुख ।
साकल्यं शाम्भवं सौख्यं सावश्यं सायुजं तथा ॥ ३ ॥

एते वै पञ्चभेदास्तु पञ्चवक्त्रेषु चोद्धृताः ।
अकारश्च उकारश्च मकारश्च त्रिधा भवेत् ॥ ४ ॥

तृतीयान्तर्गतं नादं चतुर्थं मुक्तिकारणम् ।
अकारो दक्षिणांशः स्याद्वामांशः स्यादुकारकः ॥ ५ ॥

मकारो मध्यदेशः स्यात् तस्मात् त्रिप्रणवात्मकम् ।
हकारस्तस्य मध्ये तु संस्थितः सर्वकारणम् ॥ ६ ॥

अकारो ब्रह्मदैवत्यमुकारो विष्णुदैवतम् ।
मकारो रुद्रदैवत्यमोङ्कारश्च सदाशिवः ॥ ७ ॥

नादं शिवमयं विद्यात् पञ्चदेवात्मकं विदुः ।
अकारोकारसंयोगादोकारस्वर उच्यते ॥ ८ ॥

ओमित्येकाक्षरं ब्रह्म वदन्ति शिवयोगिनः ।
पञ्चमं प्रथमोपेतं तृतीयान्तर्गतं परम् ॥ ९ ॥
( अ उ म ह इति )

साकल्यमिति विज्ञेयं पूर्ववक्त्रे तु जायते ।
आदिबीजं चतुर्थान्तं भान्तं भूतान्तसंयुतम् ॥ १० ॥

चतुर्थस्वरसंयुक्तं शाम्भवं दक्षिणानने ।
(अ उ म ह इ इति)
वर्गादिपञ्चमं चैव षष्ठान्तं जीवसंयुतम् ॥ ११ ॥
तृतीयस्वरसंयुक्तं सौख्यं वै पश्चिमानने ।
(अ उ म ह ई इति)
अकारं पञ्चमान्तं च मकारं तत्त्वबीजकम् ॥ १२ ॥
एकादशकलोपेतं सावश्यं सौम्यवक्त्रके ।
(अ उ म ह ए इति)
आदिप्रकृतिवर्णं च पञ्चमान्तं षडन्तकम् ॥ १३ ॥
गुह्यं चतुर्दशोपेतं सायुज्यं चोर्ध्ववक्त्रके ।
(अ उ म ह औ इति)
साकल्यं रक्तवर्णं स्यात् छन्दोऽनुष्टुप् प्रकीर्तितम् ॥ १४ ॥
ऋषिः सनत्कुमारस्तु पार्थिवं भूतमुच्यते ।
तत्त्वं कर्मेशमित्युक्तमीशानश्चाधिदैवतम् ॥ १५ ॥
[1]मात्राचतुर्भिः संयुक्तं सर्वसिद्धिकरं परम् ।
शाम्भवं त्वञ्जनप्रख्यं त्रिष्टुप् छन्दः प्रकीर्तितम् ॥ १६ ॥
भारद्वाज ऋषिर्ज्ञेयः सलिलं भूतमुच्यते ।
तत्त्वं कर्तृसमाख्यातमीश्वरस्त्वधिदैवतम् ॥ १७ ॥
पञ्चमात्रासमोपेतं सर्वसिद्धिप्रदायकम् ।
सौख्यं गोक्षीरवर्णं स्याद् [2]बृहती छन्द ईरितम् ॥ १८ ॥
विश्वामित्र ऋषिर्ज्ञेयस्तेजो भूतमिति स्मृतम् ।
सर्वं वै तत्त्वमित्युक्तं ब्रह्मा स्यादधिदैवतम् ॥ १९ ॥
चतुर्मात्रासमायुक्तं सर्वसम्पत्करं परम् ।
सावश्यं कुङ्कुमाभं स्याज्जगती छन्द ईरितम् ॥ २० ॥

---

१. चतुर्मात्रासमायुक्तम् ।
२. छन्दो बृहती उच्यते ।

गौतमोऽस्य ऋषिर्ज्ञेयो मारुतं भूतमुच्यते ।
मूर्तं वै तत्त्वमित्युक्तमीशस्तस्याधिदैवतम्॥ २१ ॥

पञ्चमात्रासमोपेतं सर्ववश्यकरं परम् ।
सायुज्यं[1] स्फटिकाभं स्याज्जगती छन्द ईरितम् ॥ २२ ॥

अगस्त्योऽस्य ऋषिर्ज्ञेयो व्योम भूतमुदाहृतम् ।
सादाख्यतत्त्वमित्युक्तमधिदैवं सदाशिवम् ॥ २३ ॥

पञ्चमात्रासमोपेतं सायुज्यपदमाप्नुयात् ।
प्रणवः सर्ववर्णानां शिवबीजमिति स्मृतः ॥ २४ ॥

बिन्दुनादप्रकारेण प्रणवाकृतिरीरिता ।
सृष्टिस्थितिनिमित्ताय उच्चारणमधोमुखम् ॥ २५ ॥

साकल्यादिश्च प्रणवः क्रमेण परिकीर्तितः ।
उक्तः प्रणवभेदश्च ब्रह्मभेदमथ शृणु ॥ २६ ॥

इति श्रीवातुले शुद्धाख्यतन्त्रे प्रणवभेदो नाम
षष्ठः पटलः समाप्तः ॥

---

१. सायुज्यं शुद्धपीतं स्याद् गायत्री छन्द उच्यते ।
नारदोऽस्य ऋषिर्ज्ञेय आकाशो भूतमुच्यते ॥
शिवसादाख्यमेवोक्तं सदाशिवोऽधिदैवतम् ।
पञ्चमात्रासमोपेतं सर्वकार्यप्रदं महत् ॥

## अथ सप्तमः पटलः

अथ वक्ष्ये विशेषेण ब्रह्मभेदविधिं परम् ।
बृहत्वाद् बृंहणत्वाच्च ब्रह्मेति [1]परिकीर्तितम् ॥ १ ॥
ब्रह्मत्वमिति विज्ञेयं [2]भवेत् तद्ब्रह्म पञ्चधा ।
पञ्चब्रह्मप्रकारेण पञ्चविंशतिभेदकः ॥ २ ॥
एभिर्भेदैर्युतं पञ्चविंशतितत्त्वसंयुतम् ।
इत्येतत्पञ्चभेदत्वाद् ब्रह्मपञ्चकमीरितम्[3] ॥ ३ ॥
मूर्तिब्रह्म भवेत्पूर्वं[4] तत्त्वब्रह्म द्वितीयकम् ।
भूतब्रह्म तृतीयं स्यात् पिण्डब्रह्म चतुर्थकम् ॥ ४ ॥
पञ्चमं च कलाब्रह्म [5]ब्रह्मपञ्चकमीरितम् ।
[6]पञ्चानां ब्रह्मणामेषां लक्षणं वक्ष्यतेऽधुना ॥ ५ ॥
ब्रह्मा विष्णुश्च रुद्रश्च मूर्तयः[7] प्रणवाधिपाः ।
[8]एतत्प्रणवरूपं तु मूर्तिरूपमुदाहृतम् ॥ ६ ॥
साकल्यादिस्तु यत्पञ्च मूर्तिब्रह्म तदुच्यते ।
एतेषां चैव तत्त्वानां शिवतत्त्वं प्रभुः स्मृतम् ॥ ७ ॥
एतच्छिवमयं बीजं शिवार्णं चेति कीर्तितम् ।
तस्माच्छुद्धादि चात्मान्तं तत्त्वब्रह्म प्रकीर्तितम् ॥ ८ ॥
प्रथमं मांसबीजं स्याद् द्वितीयं मेदसो भवेत् ।
तृतीयं [9]षष्ठबीजं स्याच्चतुर्थं सप्तमं तथा ॥ ९ ॥

---

१. अभिधीयते ।
२. तद्ब्रह्म पञ्चधा भवेत् ।
३. पञ्चब्रह्म उदाहृतम् ।
४. तथा पूर्वम् ।
५. पञ्चब्रह्म उदाहृतम् ।
६. एतेषां ब्रह्मपञ्चानाम् ।
७. त्रिमूर्तिः प्रणवाधिपा ।
८. तस्मात् प्रणवरूपम् ।
९. षष्ठभेदास्तु ।

पञ्चमं पञ्चमं विद्यात् पाञ्चभौतिकमुच्यते ।
मांसं वै पार्थिवं बीजं मेदसो ह्याप उच्यते ॥ १० ॥

षष्ठं तेजो विनिर्दिष्टं सप्तमं मारुतात्मकम् ।
पञ्चमं व्योमबीजं स्याद् भूतब्रह्मेति[1] कीर्तितम् ॥ ११ ॥

सप्तके[2] प्रकृतौ वर्णे तुरीयं पञ्चमं त्यजेत् ।
शेषेषु पञ्चवर्णेषु पञ्चमं च[3] प्रयोजयेत् ॥ १२ ॥

बिन्दुनादसमायुक्तं [4]पञ्चवर्णेष्वनुक्रमात् ।
तेषां नामानि वक्ष्यामि समासाच्छृणु षण्मुख ॥ १३ ॥

सद्योजातं तथा पूर्वं वामदेवं द्वितीयकम् ।
अघोरं च तृतीयं स्याच्चतुर्थं पुरुषं तथा ॥ १४ ॥

ईशानं पञ्चमं विद्यादेवं मुख्याः प्रकीर्तिताः ।
प्रणवादिचतुर्थ्यन्तं स्वनामपदमध्यगम् ॥ १५ ॥

नमस्कारान्तसंयुक्तान् सद्यादीन् योजयेत् क्रमात् ।
शिवार्णे जीववर्णानां संयोगात् पिण्डमुच्यते ॥ १६ ॥

कर्मेशं पिण्डरूपत्वात् पिण्डब्रह्मेति कीर्तितम् ।
ईशानः पुरुषश्चैव अघोरो वामदेवकः ॥ १७ ॥

सद्योजातश्च पञ्चैते कलाब्रह्म प्रकीर्तिताः ।
ईशानस्य कलाः पञ्च पुरुषस्य चतुष्कलाः ॥ १८ ॥

अघोरस्य कलाश्चाष्टौ वामदेवे त्रयोदश ।
सद्यस्याष्टकला ज्ञेया अष्टत्रिंशत्कलाः स्मृताः ॥ १९ ॥

---

१. ब्रह्म प्रकीर्तितम् । २. सप्तप्रकृतिवर्णे तु ।

३. सह ।

४. ल व र य ह इति पाञ्चभौतिकबीजाक्षराणि । हं हिं हुं हें हों इति पञ्चब्रह्मबीजाक्षराणि । ॐ हं सद्योजाताय नमः । ॐ हिं वामदेवाय नमः । ॐ हुं अघोराय नमः । ॐ हें तत्पुरुषाय नमः । ॐ हों ईशानाय नमः ( पूर्वोक्तानि पञ्चब्रह्मबीजाक्षराणि रेफयुक्तानि चेत् ॐ ह्रं सद्योजातायेत्यादि ) इति सद्यादीनि योजयेत् ।

ईशानः सर्वविद्यानां प्रथमं परिकीर्तितम् ।
ईश्वरः सर्वभूतानां द्वितीयं चेति कीर्तितम् ॥ २० ॥

ब्रह्माधिपतिश्चैव ब्रह्मणोऽधिपतिस्तथा ।
ब्रह्मेतीदं तृतीयं स्याच्छिवो मेऽस्तु चतुर्थकम् ॥ २१ ॥

सदाशिवोमिति ज्ञेयं पञ्चमं परिकीर्तितम् ।
एते चेशानरूपाश्च पञ्चसंख्याः प्रकीर्तिताः ॥ २२ ॥

तत्पुरुषाय विद्महे प्रथमं परिकीर्तितम् ।
महादेवाय धीमहि तन्नो चेति द्वितीयकम् ॥ २३ ॥

तन्नो रुद्रश्च तृतीयं स्याच्चतुर्थं तु प्रचोदयात् ।
एवं तत्पुरुषस्यैव चतस्रश्च कलाः स्मृताः ॥ २४ ॥

अघोरेभ्यस्तथा पूर्वं घोरेभ्यश्च द्वितीयकम् ।
घोरघोरस्तृतीयं स्यात् तरेभ्यश्च चतुर्थकम् ॥ २५ ॥

सर्वतः पञ्चमं विद्यात् षष्ठं सर्वमुदाहृतम् ।
सर्वेभ्यो नमस्तेऽस्तु सप्तमं चेति कीर्तितम् ॥ २६ ॥

अष्टमं रुद्ररूपेभ्यो अघोरस्याष्टकं स्मृतम् ।
प्रथमं वामदेवाय ज्येष्ठायेति द्वितीयकम् ॥ २७ ॥

तृतीयं रुद्राय नमः कालायेति चतुर्थकम् ।
पञ्चमं कल इत्युक्तं विकर्णाय नमस्तु षट् ॥ २८ ॥

सप्तमं बलमित्युक्तमष्टमं विकरणाय च ।
नवमं बलमित्युक्तं दशमं प्रमथाय च ॥ २९ ॥

सर्वभूतदमनाय नमश्चैकादशं स्मृतम् ।
द्वादशश्च मनश्चेति उन्मनाय त्रयोदशम् ॥ ३० ॥

एतास्त्रयोदश कला वामदेवेति कीर्तिताः ।
सद्योजातं प्रपद्यामि प्रथमं परिकीर्तितम् ॥ ३१ ॥

द्वितीयं सद्योजाताय वै नमश्चेति कीर्तितम् ।
तृतीयं च भवे चैव भवे चेति चतुर्थकम् ॥ ३२ ॥

पञ्चमं नातिभवे षष्ठं चेति भवस्व माम् ।
सप्तमं तु भवं विद्यादुद्भवायाष्टमं भवेत् ॥ ३३ ॥

एवमष्टकलाः प्रोक्ताः सद्योजात उदाहृताः ।
ईशानादीनि सद्यान्तान्यष्टत्रिंशत्कलाः स्मृताः ॥ ३४ ॥

कलाब्रह्ममिति प्रोक्तं पञ्चब्रह्माणि चोच्यते ।
मूर्त्यादिककलान्तानां लक्षणं पञ्च ते क्रमात् ॥ ३५ ॥

ईशानश्चेश्वरो ब्रह्मा शिवश्चेति सदाशिवः ।
पञ्चमूर्त्याकृतिर्यद्यत् तत्तद् वै प्रणवाकृति ॥ ३६ ॥

सद्यादीनां च पञ्चानां क्रमेण परिलक्ष्यते ।
कर्म कर्तृ समूर्तिश्च अमूर्तिश्च शिवस्तथा ॥ ३७ ॥

पञ्चसादाख्यतत्त्वानां यद्भावं विन्यसेत् क्रमात् ।
आत्मादीनि च तद्भावं शुद्धान्तानि च लभ्यते ॥ ३८ ॥

पार्थिवं पीतवर्णं स्याच्छुक्लाभा ह्याप उच्यते ।
रक्ताभं तैजसं प्रोक्तं कृष्णाभमनिलं विदुः ॥ ३९ ॥

व्योमधूमनिभं विद्यादेवं भूताकृतिर्भवेत् ।
गोक्षीरं शङ्खवर्णाभं जटामकुटमण्डितम् ॥ ४० ॥

चतुर्वक्त्रं चतुर्बाहुं नेत्रद्वादशभिर्युतम् ।
सर्वाभरणसंयुक्तमेवं सद्य उदाहृतम् ॥ ४१ ॥

जपापुष्पनिभं वामं जटामकुटमण्डितम् ।
चतुर्वक्त्रसमायुक्तं चतुर्दोर्भिः समन्वितम् ॥ ४२ ॥

नेत्रैर्द्वादशभिर्युक्तं सर्वावयवसंयुतम् ।
रक्तवस्त्रधरं देवं रक्तवस्त्रोत्तरीयकम् ॥ ४३ ॥

दक्षिणेऽभयटङ्कं च वामे वरदशूलधृत् ।
रक्तगन्धानुलिप्ताङ्गं रक्तमाल्यैरलङ्कृतम् ॥ ४४ ॥

सर्वलक्षणसंयुक्तं सर्वाभरणभूषितम् ।
वामदेव इति प्रोक्तं सर्ववश्यकरं परम् ॥ ४५ ॥

भिन्नाञ्जनसमप्रख्यमघोरं रौद्ररूपकम् ।
चतुर्वक्त्रं चतुर्बाहुं जटामकुटमण्डितम् ॥ ४६ ॥

द्वादशाक्षिसमायुक्तं दंष्ट्राकरालमास्यकम् ।
व्याघ्रचर्माम्बरधरं व्याघ्रचर्मोत्तरीयकम् ॥ ४७ ॥

पादनूपुरसंयुक्तं सर्वाभरणभूषितम् ।
दिव्यगन्धानुलिप्ताङ्गं दिव्यपुष्पैरलङ्कृतम् ॥ ४८ ॥

टङ्कशूलसमायुक्तं वरदाभयसंयुतम् ।
सर्वावयवसंयुक्तं सर्वलक्षणसंयुतम् ॥ ४९ ॥

अघोररूपमेवं हि सर्वशत्रुजयं भवेत् ।
पुरुषं कुङ्कुमाभं स्याच्चतुर्वक्त्रं चतुर्भुजम् ॥ ५० ॥

जटामकुटसंयुक्तं नेत्रैर्द्वादशभिर्युतम् ।
सर्वावयवसंयुक्तं पीताम्बरधरं परम् ॥ ५१ ॥

पीतवस्त्रोत्तरीयं च सर्वाभरणभूषितम् ।
सव्ये तु टङ्कमभयं शूलं वरदमन्यके ॥ ५२ ॥

दिव्यगन्धानुलिप्ताङ्गं दिव्यपुष्पैरलङ्कृतम् ।
एवं तत्पुरुषं विद्यात् सर्वसिद्धिप्रदायकम् ॥ ५३ ॥

ईशानं स्फटिकाभं स्याद् जटामकुटमण्डितम् ।
चतुर्वक्त्रसमायुक्तं द्वादशाक्षिसमन्वितम् ॥ ५४ ॥

चतुर्भुजसमायुक्तं सर्वलक्षणसंयुतम् ।
शुक्लाम्बरधरं सौम्यं शुक्लवस्त्रोत्तरीयकम् ॥ ५५ ॥

टङ्कशूलसमायुक्तं वरदाभयसंयुतम् ।
सर्वावयवसंयुक्तं सर्वाभरणभूषितम् ॥ ५६ ॥

दिव्यपुष्पैरलङ्कृत्य दिव्यगन्धानुलेपितम् ।
एवमीशानरूपं तु सद्यो मोक्षप्रदायकम् ॥ ५७ ॥

अघोरं रौद्रमित्युक्तं शेषं सौम्यमुदाहृतम् ।
सद्यो मूर्तं विजानीयादमूर्तं वामदेवकम् ॥ ५८ ॥

अघोरं कर्तृरूपं स्यात् कर्म तत्पुरुषं भवेत् ।
शिवसादाख्यमीशानं पञ्चतत्त्वात्मकं विदुः ॥ ५९ ॥

पञ्चमूर्त्यात्मकं यत्तत् पिण्डब्रह्माकृतिर्भवेत् ।
एवं पिण्डाकृतिः प्रोक्ता कलारूपमिहोच्यते ॥ ६० ॥

शङ्खकुन्देन्दुवर्णं च स्फाटिकं क्षीरसन्निभम् ।
ईशानस्य कलानां तु पञ्चवर्णं प्रशस्यते ॥ ६१ ॥

रक्तासितश्वेतपीतास्तत्पुरुषकलाः स्मृताः ।
अञ्जनारुणपीतं च श्यामं नीलसितारुणम् ॥ ६२ ॥

काञ्चनं चाष्टवर्णानि अघोरस्य कलाः स्मृताः ।
जपापीताञ्जनश्यामं शुक्लं श्यामाञ्जनारुणम् ॥ ६३ ॥

अञ्जनं स्फाटिकं रक्तं नीलं मकरतं तथा ।
एते वामकलानां तु त्रयोदशनिभाः स्मृताः ॥ ६४ ॥

रक्तं सितं तथा नीलं कृष्णपीतं सकुङ्कुमम् ।
भिन्नाञ्जनारुणं चैव त्वष्टौ सद्यःकलाः स्मृताः ॥ ६५ ॥

कलारूपाणि सर्वाणि त्रिनेत्राश्च चतुर्भुजाः ।
अभयं वरदं चैव शूलं परशुधारिणः ॥ ६६ ॥

सर्वलक्षणसंयुक्ताः सर्वाभरणभूषिताः ।
कलारूपेषु वामाद्याः शक्तयः पञ्च संस्थिताः ॥ ६७ ॥

अष्टत्रिंशत्कलानां तु अष्टत्रिंशच्च शक्तयः ।
एवं शक्तिसमोपेतं न्यासकाले तु विन्यसेत् ॥ ६८ ॥

मूर्तिस्तत्त्वं तथा भूतं पिण्डं चैव कला तथा ।
पञ्चब्रह्माणि चैतानि सर्वकार्येषु योजयेत् ॥ ६९ ॥

ब्रह्मभेदो मया प्रोक्तः अङ्गभेदमथ शृणु ।

इति श्रीवातुले शुद्धाख्यतन्त्रे ब्रह्मभेदो नाम
सप्तमः पटलः समाप्तः ॥



# अथाष्टमः पटलः

अतः परं प्रवक्ष्यामि अङ्गभेदविधिं परम् ।
अङ्गं षड्भेदमित्युक्तं तस्मादङ्गं तदुच्यते ॥ १ ॥

षडङ्गमङ्गभेदाश्च[1] षट्त्रिंशदिति ते[2] स्मृताः ।
एभिर्भेदैः समायुक्तमङ्गं षट्त्रिंशदुच्यते ॥ २ ॥

तेषां तु लक्षणं वक्ष्ये समासाच्छृणु षण्मुख ।
शिवाङ्गं चैव भूताङ्गं कूटाङ्गं च तथैव च ॥ ३ ॥

विद्याङ्गं चैव शक्त्यङ्गं सामान्याङ्गं तथैव च ।
एतानि चाङ्गनामानि शिवाङ्गानि षडानन ॥ ४ ॥

एतेषां चैव अङ्गानां शिवाङ्गं पूर्वमुच्यते ।
नवार्णविकृतिष्वासु[3] तूर्यं पञ्चममष्टकम् ॥ ५ ॥

त्रीणि वर्णानि संत्यज्य शेषषट्परवर्णयुक् ।
कार्यकारणसंयुक्तं सर्वेषां च षडानन[4] ॥ ६ ॥

प्रथमं हृदयं विद्याद् द्वितीयं तु शिरो भवेत् ।
तृतीयं तु शिखा विद्याच्चतुर्थं कवचं भवेत् ॥ ७ ॥

पञ्चमं नेत्रत्रयं स्यादस्त्रं षष्ठमुदाहृतम् ।
शिवाङ्गनामान्येतानि[5] कीर्तितानि क्रमाद्विदुः ॥ ८ ॥

आदौ प्रणवमुच्चार्य शिवार्णं तदनन्तरम् ।
अभिधानं चतुर्थ्यन्तं नमस्कारादिभिर्युतम् ॥ ९ ॥

---

१. भेदानि ।
२. तानि तु ।
३. एषु ।
४. हाँ हीँ हूँ हैँ हौँ हः इति तान्त्रिकशिवाङ्गानि ।
५. एते ।

नमोऽन्तं हृदयं विद्यात् स्वाहान्तं शिरसो भवेत् ।
वषडन्तं शिखा ज्ञेया हूंकारं कवचस्य तु ॥ १० ॥

वौषड् नेत्रत्रयं विद्यात् फूत्कारं चास्त्रमन्त्रतः[1] ।
एवं शिवाङ्गमित्युक्तं भूताङ्गश्च[2] तथोच्यते ॥ ११ ॥

पार्थिवं जीवसंयुक्तं द्वितीयस्वरसंयुतम्[3] ।
बिन्दुनादसमायुक्तं प्रथमं बीजमुच्यते ॥ १२ ॥

शिवार्णं जीवनोपेतं चतुर्थस्वरभूषितम् ।
शिवशक्तिसमायुक्तं द्वितीयं बीजमुच्यते ॥ १३ ॥

पञ्चमं षष्ठसंयुक्तं पञ्चमान्तकलान्वितम् ।
आधाराधेयसंयुक्तं तृतीयं बीजमुच्यते ॥ १४ ॥

भूतान्तमलिनोपेतं पञ्चसप्तकलान्वितम् ।
परापरसमायुक्तं चतुर्थं बीजमुच्यते ॥ १५ ॥

तत्त्वान्तं तत्त्वसंयुक्तं [4]चतुर्दशकलान्वितम् ।
कार्यकारणसंयुक्तं पञ्चमं बीजमुच्यते ॥ १६ ॥

शक्त्यन्तं शिवसंयुक्तमादिबीजं कलान्वितम् ।
तयोर्मध्यगतो बिन्दुः षष्ठं बीजमुदाहृतम् ॥ १७ ॥

पञ्चभिर्ग्रन्थिभिर्युक्तं छेद्यमन्त्रेण चात्मनि ।
एवं भूताङ्गमाख्यातं कूटाङ्गानि ततः शृणु ॥ १८ ॥

प्रथमस्य द्वितीयं तु चतुर्थं पञ्चमान्तकम् ।
रुद्रान्तं रुद्रतुरीयश्च अन्तं कूटाक्षरेण युक् ॥ १९ ॥

बिन्दुनादसमायुक्तं कूटाङ्गमिदमीरितम्[5] ।
एवं कूटाङ्गमित्युक्तं विद्याङ्गानि ततः शृणु ॥ २० ॥

---

१. ॐ ह्राँ हृदयाय नमः, ॐ ह्रीँ शिरसे स्वाहा, ॐ ह्रूँ शिखायै वषट, ॐ ह्रैँ कवचाय हुम्, ॐ ह्रौँ नेत्रत्रयाय वौषट्, ॐ ह्रः अस्त्राय फट् इति ह्राँ ह्रीँ ह्रूँ ह्रैँ ह्रौँ ह्रः ।
२. अङ्गानि ।
३. भूषितम् ।
४. कलान्तेन समन्वितम् ।
५. क्षाँ क्षीँ क्षूँ क्षैँ क्षौँ क्षः इति ।

प्राकारं तु समुद्धृत्य तकारं तु समुद्धरेत् ।
दकारोपेतमाकारं यकारश्च नमोऽन्तकम् ॥ २१ ॥

एवं विद्याङ्गमाख्यातं प्राकारश्च समुद्धरेत् ।
नकारं चैव वाकारं तकारेण मकारयुक् ॥ २२ ॥

नमोऽन्तं तु समुद्धृत्य स्वाहान्तं शिरसा विदुः ।
शिकारं चैव वाकारं वषड्ढुङ्कारमेव च ॥ २३ ॥

वषट्कारसमायुक्तं शिखाबीजमुदाहृतम् ।
शिकारं चैव वाकारं तकारेण मकारयुक् ॥ २४ ॥

तकारश्च मकारश्च टकारश्च समुद्धरेत् ।
तकारश्च हकारश्च अनुस्वारश्च सर्वतः ॥ २५ ॥

जकारे तु समायुक्तं भकारश्च फकारकम् ।
रकारश्च शिकारश्च मकारश्च समुद्धरेत् ॥ २६ ॥

अकारश्च वकारश्च नकारश्च भकारयुक् ।
वह्निशेखरसंयुक्तं यकारं तु मकारयुक् ॥ २७ ॥

यौकारश्च ककारश्च अनुस्वारसमायुतम् ।
ककारश्च मकारञ्च फकारञ्च सिकारकम् ॥ २८ ॥

अनुस्वारसमायुक्तं गकारं च भंकारकंम् ।
ऋकारञ्च भकारञ्च मकारेण समुच्चयम् ॥ २९ ॥

अकारं चैव वाकारं हकारश्च भकारकम् ।
शिकारश्च लकारश्च मकारं हारमेव च ॥ ३० ॥

क्षकारश्च उकारश्च ककारश्च एकारकम् ।
नकारेण समायुक्तो बन्धशब्द उदाहृतः ॥ ३१ ॥
पूर्णं चैव तु पूर्णश्च कह कह समायुतम् ।
किरिद्वन्द्वसमायुक्तं सूक्ष्मसूक्ष्मसमायुतम् ॥ ३२ ॥

इकारश्च दकारश्च रिकारो हारमेव च ।
चकारश्च मकारश्च उकारश्च प्रकाशकम् ॥ ३३ ॥

विकारञ्च शकारञ्च स च चैव दुकारकम् ।
फट्कारस्तम्भकश्चैव स्तम्भशब्दस्तथैव च ॥ ३४ ॥

यकारं चैव दुंकारं फट्कारेण समायुतम् ।
एवं कवचमाख्यातं सर्वरक्षाकरं भवेत् ॥ ३५ ॥

प्रकारञ्च स्फुकारञ्च रकारञ्च स्फुकारकम् ।
रकारं चैव विन्यस्य घोरं चैव तु घोरकम् ॥ ३६ ॥

तकारं चैव विन्यस्य मकारं चैव विन्यसेत् ।
तकारञ्च मकारञ्च ऋकारञ्च फकारकम् ॥ ३७ ॥

चटश्चैव चटश्चैव प्रचटः प्रचटस्तथा ।
कहश्चैव कहश्चैव वमश्चैव वमस्तथा ॥ ३८ ॥

घातय घातय चैव हुंफट्कारसमायुतम् ।
स्वरेणैव सुसंयुक्तो मन्त्रो हेति उदाहृतः ॥ ३९ ॥

एवं विद्याङ्गमाख्यातं शक्त्यङ्गानि ततः शृणु ।
आधारशक्तिबीजं च बिन्दुनादसमन्वितम् ॥ ४० ॥

प्रथमं बीजमित्युक्तं पीताभं शक्तिबीजकम् ।
बिन्दुनादसमायुक्तं द्वितीयं बीजमुच्यते ॥ ४१ ॥

उकारं शक्तिबीजं च बिन्दुनादसमन्वितम् ।
तृतीयं बीजमित्युक्तमैकारं शक्तिसंयुतम् ॥ ४२ ॥

कार्यकारणसंयुक्तं चतुर्थं बीजमुच्यते ।
शक्तिश्चतुर्दशोपेता शिवशक्तिसमायुता ॥ ४३ ॥

पञ्चमं बीजमाख्यातं स्वरान्तं शक्तिसंयुतम् ।
वर्णं चैव सुसंयुक्तं षष्ठकं [1]बीजमुच्यते ॥ ४४ ॥

एवं शक्त्यङ्गमाख्यातं सामान्याङ्गमथोच्यते ।
आदिवर्गेऽश्विनौ वेदा रसो भानुर्मनुस्तथा ॥
ब्रह्मविष्णुसुरेन्द्राश्च आदित्येन्दुगुहास्तथा ॥ ४६ ॥

मदनक्षेत्रविघ्नेशाश्चाष्टमूर्तिर्वसुस्तथा ।
विद्येशाश्च गणेशाश्च लोकपालायुधास्तथा ॥ ४७ ॥

सिद्धविद्याधराश्चैव गन्धर्वाश्चाप्सरास्तथा ।
यक्षकिन्नरभूताश्च ऋषयः खेचरास्तथा ॥ ४८ ॥

अन्येषां सर्वदेवानां स्वनामाद्यक्षरं तथा ।
सामान्येषु समायोगाद्बिन्दुनादसमन्वितम् ॥ ४९ ॥

तेषामङ्गानि चोक्तानि मूलं तद्बीजमुच्यते ।
सामान्याङ्गमिदं प्रोक्तं तेषां वर्णमथोच्यते ॥ ५० ॥

हृदयं शुक्लवर्णं स्यात् पीतवर्णं शिरस्तथा ।
शिखां रक्तसमां विद्यात् कवचं स्फटिकप्रभम् ॥ ५१ ॥

नेत्रं श्यामनिभं विद्यात् कृष्णाभं चास्त्रमुच्यते ।
एवं शिवाङ्गमाख्यातं भूताङ्गं च तथोच्यते ॥ ५२ ॥

पीतं [2]शुक्लारुणं चैव कृष्णं धूम्रं च पावकम् ।
भूताङ्गानां तु वर्णानि समासात् कीर्तितानि तु ॥ ५३ ॥

---

१. सां सीं सूं सैं सौं सः इति तान्त्रिकशक्त्यङ्गानि । तान्येव रेफयुक्तानि चेद्वैदिकशक्त्यङ्गानि ज्ञेयानि । आदिवर्गे द्वितीयार्णं चतुर्थंवर्णमनन्तरम् । षष्ठवर्णं द्वादशार्णं तच्चैतुंदशवर्णकम् ॥ षोडशार्णं षडेते च सामान्याङ्गमितीर्यते । अ ई उ ओ औ अः इति सामान्याङ्गानि । वर्णभेदपटले ब्रह्मदेवताकः ककार उक्तः, तस्य सामान्याङ्गैराकारादिभिर्योगात् कॉं कीँ कूँ कैँ कौँ कः इति ब्रह्मषडङ्गं भवति ।

२. शुक्लनिभं रक्तं ।

श्वेतं रक्तं [1]तथा नीलं कुङ्कुमं पीतमञ्जनम् ।
कूटाङ्गानां तु वर्णानि समासाद् [2]उदितानि तु ॥ ५४ ॥

जपाकुसुमकुन्दाभं पावकं चेन्द्रनीलकम् ।
सिन्दूरं हरितालं च विद्याङ्गानि नभस्तथा ॥ ५५ ॥

पीतं श्यामं तथा रक्तं कृष्णं मरकतं तथा ।
एतैरेव सवर्णानि शक्त्यङ्गानां क्रमेण तु ॥ ५६ ॥

स्फाटिकं रक्तपीतश्च श्यामं स्यात् काञ्चनारुणम् ।
एतान्युक्तानि वर्णानि सामान्याङ्गं प्रकीर्तितम् ॥ ५७ ॥

चतुर्भुजं त्रिनेत्रं च जटामकुटमण्डितम् ।
सर्वलक्षणसंयुक्तं सर्वाभरणभूषितम् ॥ ५८ ॥

त्रिशूलमभयं सव्ये कपालं वरमन्यके ।
हारकेयूरसंयुक्तं कटकैः कुण्डलैर्युतम् ॥ ५९ ॥

हृदादिवर्णपर्यन्तं[3] स्वरूपं सौम्यमुच्यते ।
शेषा रौद्रा इति ज्ञेयाः सर्वेषां रूपमुच्यते ॥ ६० ॥

शिवाङ्गैस्तु यजेद् देवं स्थापनादीनि सर्वशः ।
भूताङ्गेषु च वै वत्स पादादिभूतशोधनम् ॥ ६१ ॥

अर्णौ नामानि संयोज्य भूताङ्गेषु समाचरेत् ।
कूटाङ्गैश्चैव विद्याङ्गैः प्रायश्चित्तं तु कारयेत् ॥ ६२ ॥

शक्तीनां स्थापने काले शक्त्यङ्गैस्तु समाचरेत् ।
अन्येषां सर्वदेवानां सामान्याङ्गैस्तु योजयेत् ॥ ६३ ॥

एवं षडङ्गमाख्यातं विशेषमधुनोच्यते ।
केवलं ज्ञानजं चैव योगजं भूतजं तथा ॥ ६४ ॥

---

१. श्वेतं रक्तनिभं तथा । २. परिकीर्तितम् ।
३. वामपर्यन्तम् ।

कामदश्च क्रमेणैव हृदयं पञ्चधा भवेत् ।
शिवाङ्गं हृदयं यत्तु केवलं समुदाहृतम् ॥ ६५ ॥

स्थानं यानसमायुक्तमादिवर्गान्तसंयुतम् ।
ज्ञानात्महृदयं बिन्दुः समासात् परिकीर्तितम् ॥ ६६ ॥

भूतान्तमनिलोपेतं तत्त्वान्तं स्वरसंयुतम् ।
शिवशक्तिसमायुक्तं योगजं हृदयं विदुः ॥ ६७ ॥

पञ्चमं पार्थिवोपेतं द्वितीयस्वरसंयुतम् ।
बिन्दुनादसमायुक्तं भूतजं हृदयं विदुः ॥ ६८ ॥

तत्त्वान्तमनिलान्तं च दशान्तान्तकलान्वितम् ।
बिन्दुनादसमायुक्तं हृदयं सर्वकामदम् ॥ ६९ ॥

हृदयाय नमोऽन्तं तु सर्वेषां सह योजयेत् ।
ईशानं प्रथमं विद्याच्छुक्लवर्णमुदाहृतम् ॥ ७० ॥

ईश्वरं ज्ञानहृदयं तप्तकाञ्चनसन्निभम् ।
योगजं ब्रह्मरूपं स्यात् पीतवर्णं तु निर्दिशेत् ॥ ७१ ॥

भूतजं चैश्वरं रूपं रक्तवर्णमुदाहृतम् ।
सादाख्यं कामदं विद्याच्छुद्धस्फटिकसन्निभम् ॥ ७२ ॥

यजनं केवलेनैव स्थापनं ज्ञानजेन तु ।
प्रोक्षणं योगजेनैव [1]दीक्षाकर्म तु भूतजम् ॥ ७३ ॥

सर्वकर्म विशेषेण कामदेनैव कारयेत् ।
एवं हृदयमाख्यातमस्त्रभेदमथोच्यते ॥ ७४ ॥

शिवास्त्रं क्षुरिकास्त्रं च तथा पाशुपतास्त्रकम् ।
व्योमास्त्रं चैव घोरास्त्रमस्त्रं पञ्चविधं भवेत् ॥ ७५ ॥

---

१. भूतजेन तु ।

षडक्षरं शिवास्त्रं स्यात् क्षुरिका त्वष्टवर्णकम् ।
पाशुपतं तु पञ्चार्णं व्योमास्त्रं तु दशार्णकम् ॥ ७६ ॥
चत्वारिंशदघोरास्त्रमेवं पञ्चास्त्रमुच्यते ।
सर्वकर्मार्हकं विद्यात् पूजकाः सर्वकर्मसु ॥ ७७ ॥
शिवाङ्गादिषडङ्गानि कीर्तितानि षडानन ।
अङ्गभेदो मयाख्यातो मन्त्रजातमथ शृणु ॥ ७८ ॥

इति श्रीवातुले शुद्धाख्यतन्त्रे अङ्गभेदो नाम
अष्टमः पटलः समाप्तः ॥

# अथ नवमः पटलः

अथातः संप्रवक्ष्यामि मन्त्रजातमथ श्रृणु ।
[1]यस्मान्मन्त्राश्च जायन्ते मन्त्रजातमिति स्मृतम् ॥ १ ॥

तस्मान्मन्त्रमयं लिङ्गं वक्ष्ये संक्षेपतः श्रृणु ।
सर्वलोकहितार्थाय सर्वप्राणिहिताय च ॥ २ ॥

सर्वमन्त्रप्रसिद्ध्यर्थं भुक्तिमुक्त्यर्थमुच्यते ।
शालिपिष्टाक्तसूत्रेण सूत्रपातमथाचरेत् ॥ ३ ॥

गोमयालेपिते क्षेत्रे निम्नोन्नतविवर्जिते ।
प्राक्सूत्राणि सप्तदश तथैवोद्गतानि च ॥ ४ ॥

पङ्क्तयः षोडश स्युस्ताः प्रागुत्तरमुखास्तथा[2] ।
षट्पञ्चाशत्समाधिक्यकोष्ठानि द्विशतानि च ॥ ५ ॥

पश्चिमादिन्द्रपर्यन्तं लिङ्गार्थं वीथिकां त्यजेत् ।
पश्चात् चत्वारि चत्वारि वीथ्यः कोष्ठानि मध्यमे ॥ ६ ॥

संरक्ष्य पार्श्वद्वितये षट् षट् कोष्ठानि लोपयेत् ।
तदूर्ध्वपङ्क्तिं संरक्ष्य तदूर्ध्वं द्वादशं क्षिपेत् ॥ ७ ॥

पार्श्वयोरुभयोस्तस्याः द्वे द्वे कोष्ठे च लोपयेत् ।
तदूर्ध्वे दशकोष्ठानि रक्षेत् पार्श्वत्रयं त्यजेत् ॥ ८ ॥

ततः षट्कोष्ठकं रक्षेत् पार्श्वयोः पञ्च पञ्च च ।
लोपयेच्च तदूर्ध्वे तु रक्षेच्चत्वारि पार्श्वयोः ॥ ९ ॥

षट् षट् कोष्ठानि संत्यज्य तदूर्ध्वे तद्वदाचरेत् ।
ततः षट्कोष्ठकं रक्षेत् पार्श्वयोः पञ्च लोपयेत् ॥ १० ॥

---

१. मन्त्रश्च जायते यस्मात् ।

२. प्राङ्मुखाश्चोत्तरमुखाः ।

तदूर्ध्वे दश संरक्षेत् पार्श्वयोस्त्रित्रि लोपयेत् ।
तदूर्ध्वे द्वादशं रक्षेद् द्वे द्वे पार्श्वे च लोपयेत् ॥ ११ ॥

तदूर्ध्वे पङ्क्ति संरक्ष्य ततो लिङ्गं द्विपङ्क्तितः ।
पङ्क्त्योश्चत्वारि चत्वारि कोष्ठान्यूर्ध्वे च रक्षयेत् ॥ १२ ॥

षट् षट् कोष्ठानि पङ्क्त्योश्च पार्श्वयोरुभयोस्त्यजेत् ।
एवमङ्गं समासाद्य ब्रह्मविष्ण्वीशपीठकम् ॥ १३ ॥

पट्टिकाञ्जनकण्ठाब्जपट्टिकाज्यप्रघाटिकाः ।
षडङ्गानि च पीठस्य क्रमात् प्रोक्तानि षण्मुख ॥ १४ ॥

मन्त्रन्यासक्रमं लिङ्गे शृणु वत्स समासतः ।
अङ्गभेदे षडङ्गानि प्रोक्तमन्त्राणि विन्यसेत् ॥ १५ ॥

हृदयं पट्टिकायां तु शिरःकञ्जे शिखां गले ।
कवचं कमले नेत्रं पद्यामस्त्रं च घाटिके ॥ १६ ॥

प्रोक्तः षडङ्गविन्यासो वक्ष्ये चाधारषट्क्रमात् ।
कञ्जश्चाधः आधारं वादिसान्तं चतुर्दले ॥ १७ ॥

स्वाधिष्ठाने च षट्पत्रे वादिलान्तं ततो न्यसेत् ।
ततो मणौ[1] दशदले डादिफान्तं न्यसेत्ततः ॥ १८ ॥

हृदये द्वादशदले कादिठान्तं न्यसेत्ततः ।
पद्यां कण्ठे षोडशके आदिवर्गं न्यसेत्ततः ॥ १९ ॥

आज्ञायां द्विदले चोर्ध्वे लक्षयुग्मं न्यसेत्ततः ।
एतानि शिवचक्राणि शक्तिचक्राण्यथो न्यसेत् ॥ २० ॥

आधारादिगलान्तं च वर्णानां पूर्ववद् न्यसेत् ।
आज्ञायां तु विशेषोऽस्ति शक्तिपक्षे हलं न्यसेत् ॥ २१ ॥

वर्णाधिदेवतास्तत्र पूर्ववत् परिकल्पयेत् ।
एवं षट्चक्रमाख्यातं मूर्तिमन्त्रं न्यसेत्ततः ॥ २२ ॥

---

१. मणिपूरे ( ह, ओ, म, उ ) ।

नादं लिङ्गे च विन्यस्य विन्दुमाज्यप्रघाटिके ।
पद्म्यादिकञ्जपर्यन्तं मकारं विन्यसेत् ततः ॥ २३ ॥
वृत्ते उकारं विन्यस्य अकारं कमलपट्टके ।
सूक्ष्मं पञ्चाक्षरं [1]प्रोक्तं स्थूलपञ्चाक्षरं शृणु ॥ २४ ॥
नकारादियकारान्तं पञ्चार्णं तत्र विन्यसेत् ।
पञ्चाक्षरमिदं प्रोक्तं षडक्षरमथोच्यते ॥ २५ ॥
तारं लिङ्गे प्रविन्यस्य पट्टिकायां नकारकम् ।
मकारमूर्ध्वकञ्जे तु शिकारं वृत्तमध्यके ॥ २६ ॥
अधःकञ्जे च वाकारमधःपद्म्यां यकारकम् ।
एवं षडक्षरं प्रोक्तं षडध्वन्यास उच्यते ॥ २७ ॥
जगत्यां भुवनाध्वानं पदाध्वानञ्च पङ्कजे ।
वर्णाध्वानञ्च वृत्ते तु कलाध्वानञ्च पङ्कजे ॥ २८ ॥
तत्त्वाध्वानं पट्टिकायां मन्त्राध्वानं प्रघाटिके ।
एवं षडध्वकं न्यस्य सर्वमन्त्रात्मकं शिवम् ॥ २९ ॥
सप्तकोटिमहामन्त्रैर्मन्त्रितं लिङ्गमुच्यते ।
ज्ञात्वा समर्चयेन्मन्त्री अन्यथा निष्फलं भवेत् ॥ ३० ॥
कामिकादिषु तन्त्रेषु अष्टाविंशतिभेदतः ।
प्रोक्तानि मन्त्रजातानि तत्सर्वं विन्यसेद् बुधः ॥ ३१ ॥
तस्मात् सर्वप्रयत्नेन मन्त्रजातमिदं मतम् ।
अतिबालं सबालञ्च कौमारञ्च त्रिकोणकम् ॥ ३२ ॥
यौवनं चैव जातीनां प्रकृतिर्विकृतिस्तु वा ।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो जातिः प्रकीर्तिताः ॥ ३३ ॥
स्त्रीपुंनपुंसकं चैव शयनस्थानमासनम् ।
शुद्धं मिश्रं तु संकीर्णं मन्त्ररूपमथ शृणु ॥ ३४ ॥

---

१. न्यस्तं ( ॐ नमः शिवाय । ॐ नमः शिवाय )

वाग्भवं मन्त्रमित्याहुरोष्ठान्तं कण्ठ एव च ।
पारुष्यरूपमेवं तु वासवाहनमुच्यते ॥ ३५ ॥

शुद्धं चाकारसंयुक्तमतिबालं प्रकीर्तितम् ।
अष्टबीजसमायुक्तं सबालं चेति कीर्तितम् ॥ ३६ ॥

पञ्चस्वरसमायुक्तं कौमारं तु प्रकीर्तितम् ।
यौवनं चैव सर्वेषां मन्त्रजातं प्रकीर्तितम् ॥ ३७ ॥

शिवाक्षरं ब्राह्मणानां पञ्चाक्षरं नृपस्य तु ।
षडक्षरसमायुक्तं [1]वैश्यशूद्रं प्रकीर्तितम् ॥ ३८ ॥

एवं क्रमेण गणितं चतुर्थ्यन्तं प्रकीर्तितम् ।
स्वाहाकारो भवेन्नारी नमोऽन्तं पुरुषाकृतिः ॥ ३९ ॥

फट्कारं च वषट्कारं नपुंसकमिति स्मृतम् ।
विप्रं स्वाहान्तकं प्रोक्तं नृपवैश्यादिसंयुतम् ॥ ४० ॥

इन्द्रादिशयनस्थानं मन्त्रजातं[2] प्रकीर्तितम् ।
शुद्धमेकाक्षरं प्रोक्तं [3]वेदाक्षरं तु मिश्रकम् ॥ ४१ ॥

संकीर्णो बहुधा मन्त्रस्त्रिविधो मन्त्र उच्यते ।
मन्त्रादौ शीर्षकं प्रोक्तं मन्त्रोर्ध्वे वदनं मतम् ॥ ४२ ॥

मन्त्रपार्श्वे तु बाहू च तस्याप्यधरसंयुतम् ।
पार्श्वे तु चक्षुः श्रोत्रश्च चक्षुर्मध्ये च नासिका ॥ ४३ ॥

तस्या ऊर्ध्वे ललाटश्च बिन्दुमस्तकमुच्यते ।
नादो जिह्वा समाख्यातः शब्दः शब्द इति स्मृतः ॥ ४४ ॥

ओष्ठशब्देन भिन्नः स्यादास्यान्तरसमन्वितः ।
प्रणवान्ते समायुक्तं मन्त्रान्ते च प्रतिष्ठितम् ॥ ४५ ॥

---

१. वैश्यादीनां ।
२. आसनं मन्त्रपीठकम् ।
३. वेदवर्णाश्च मिश्रकाः ।

मन्त्ररूपमिदं प्रोक्तं मन्त्रवासस्तथोच्यते ।
मन्त्राणां प्रकृतिर्वासो वाहनं विकृतिस्तथा ॥ ४६ ॥
प्रकृतिर्वर्णभावश्च [1]वर्णानां वास्यजिह्वया ।
आस्ये तु जिह्वावासश्च आस्यानां बुद्धिवासनम् ॥ ४७ ॥
बुद्ध्यर्णं हृदये वासं हृदयं पिण्डवासनम् ।
पिण्डार्णवासो नाड्यां तु नाडीनां वायुवासनम् ॥ ४८ ॥
वायुवासश्च शक्तीनां शक्त्यावासश्च वै शिवः ।
शिववासश्च सर्वेषां मन्त्रवासं प्रकीर्तितम् ॥ ४९ ॥
मन्त्रवासो मया प्रोक्तो मन्त्रवाहनमुच्यते ।
लिङ्गं च प्रतिमाकुम्भे वास्तौ वह्नौ च मूलके ॥ ५० ॥
अन्ये कुम्भे च वास्तौ च युक्तं मन्त्रस्य वाहनम् ।
एवं नवदशं प्रोक्तं मन्त्रजातस्य लक्षणम् ॥ ५१ ॥
मन्त्रजातमिदं प्रोक्तं मन्त्रकीलकमथ शृणु ।

इति वातुले शुद्धाख्यतन्त्रे मन्त्रजातं नाम
नवमः पटलः समाप्तः ॥

1. वर्णवासो रसज्ञकः ।

# अथ दशमः पटलः

अथातः सम्प्रवक्ष्यामि मन्त्रकीलमथ शृणु ।
अकीलं कीलमित्युक्तं कीलमन्त्रं विसर्जयेत् ॥ १ ॥

नेत्रे ललाटं वक्षश्च श्रोत्रे चास्यश्च नासिके ।
पादौ बाहू च देहश्च मन्त्र उच्चार्यते बुधैः ॥ २ ॥

अथ दीर्घायते वृत्तमथ दीर्घाय वृत्तकम् ।
अर्धचन्द्रसमाकारं नादमायान्ति नादवत् ॥ ३ ॥

गुरौ लिङ्गेऽक्षमालायां मन्त्रे भस्मनि पञ्चसु ।
एतासु शिवमुद्रासु शिववद्भक्तिमाचरेत् ॥ ४ ॥

आत्मीयान् विविधान् भोगान् स्त्रीपुत्रप्रमुखानपि ।
स्वात्मानं च [1]विशेषेण तेषां च वशमानयेत् ॥ ५ ॥

यो भेदं भक्तिमान् भक्तस्तेषु मोहात् करोति च ।
शिवद्रोहीति विज्ञेयः सर्वकर्मबहिष्कृतः ॥ ६ ॥

शैवं चतुर्विधं ज्ञेयं समासाच्छृणु षण्मुख ।
सामान्यं मिश्रकं चैव शुद्धं वीरं यथाक्रमम् ॥ ७ ॥

तत्रादौ संप्रवक्ष्यामि शैवसामान्यलक्षणम् ।
शिवलिङ्गं यदा पश्येत्तदा कुर्यात् समर्चनम् ॥ ८ ॥

प्रदक्षिणं वा प्रणतिं दर्शनं वात्र कारयेत् ।
भस्मधारणमात्रेण शुद्धो भवति सर्वदा ॥ ९ ॥

शिवकीर्तौ तथालापे प्रीतिमान् शिवभक्तके ।
एतेषां नियतिर्नास्ति यथालब्धं समाचरेत् ॥ १० ॥

---

१. चित्तबुद्धि च ।

सामान्यलक्षणं प्रोक्तं वक्ष्ये मिश्रस्य लक्षणम् ।
शैवञ्च वैष्णवं शाक्तं कौमारं गाणपत्यकम् ॥ ११ ॥

सौरं चाखिलदैवत्यं पूजनञ्च समाचरेत् ।
एतेषूक्तेषु सर्वेषु तत्तन्मन्त्रेषु मिश्रितान् ॥ १२ ॥

समभक्तिसमायुक्तः सर्वान् लिङ्गेन भावयेत् ।
मिश्रशैवमिति प्रोक्तं शुद्धशैवमथ शृणु ॥ १३ ॥

शुद्धत्वं शिवमुद्दिष्टं शिवाज्ञातं तु शैवकम् ।
शुद्धशैवसमायोगाच्छुद्धशैवमिति स्मृतम् ॥ १४ ॥

[1]शिवेनोत्पद्यते शैवस्तस्माज्ञातः शिवद्विजः ।
कामिकादिषु शास्त्रेषु अष्टाविंशतिषु क्रमात् ॥ १५ ॥

वेदशास्त्रादिसर्वेषु कृताभ्यासः शिवव्रती ।
कर्षणादिप्रतिष्ठान्तं प्रतिष्ठाद्युत्सवान्तकम् ॥ १६ ॥

उत्सवादिप्रायश्चित्तान्तं ज्ञात्वा सर्वं समाचरेत् ।
मन्त्रयन्त्रक्रियामुद्रान्यासावाहनकादिभिः ॥ १७ ॥

उपचारैर्बहुविधैर्लिङ्गं सिंहासने यजेत् ।
आत्मार्थं च परार्थं च पूजा द्विविधमुच्यते ॥ १८ ॥

दत्ते च गुरुणा लिङ्गे स्थण्डिले स्वयमात्मनि ।
आत्मार्थमिदमाख्यातं परार्थं तु ततः शृणु ॥ १९ ॥

ग्रामादौ स्थापिते यद्वा देवादिनिर्मितेऽथवा ।
परार्थमिति विज्ञेयं सर्वप्राणिहितावहम् ॥ २० ॥

---

१ शिवद्विजास्तु विप्रेन्द्रा ह्यादिशैवाः प्रकीर्तिताः ।
कौशिकः काश्यपश्चैव भारद्वाजोऽत्रिरेव च ॥
गौतमश्चेति पञ्चैते पञ्चवक्त्रेषु दीक्षिताः ।
एतेषां ऋषीणां वंशेषु जातास्ते हि शिवद्विजाः ॥
सर्वेषामपि शैवानां वीरशैवं महोत्तमम् ।
सुलभा देवपूजा च सुलभं च क्रियावहम् ॥

शिवद्विजेन कर्तव्या द्विधा पूजेति चोदिता ।
अन्येषां स्वार्थयजनं न कुर्यात्तु परार्थकम् ॥ २१ ॥
मोहाल्लोभाच्च कुर्वीत राज्ञो राष्ट्रस्य दुःस्थितिः ।
शिवावरणदेवांश्च नित्यं संपूजयेद् गुह ॥ २२ ॥
पृथक् स्थानस्थिताः सर्वा नार्चयेदन्यदेवताः ।
मन्त्रपिण्डहृदम्भोजे वासमन्त्रस्य भावतः ॥ २३ ॥
आवाहनात् समायुक्ते लिङ्गे पूजादिकं चरेत् ।
मन्त्रलिङ्गं शरीरः स्यात् स एव परमः शिवः ॥ २४ ॥
शुद्धशैवमिति प्रोक्तं वीरशैवं ततः शृणु ।
ज्ञानगम्यं रहस्यं च कैवल्यपदकारणम् ॥ २५ ॥
वीरशैवमिति ज्ञेयमेतल्लक्षणमुच्यते ।
एक एवायमेतस्मिन् सर्वस्मिन् जगतीति यः ॥ २६ ॥
विशिष्ट ईर्यते यस्मादीश्वर इत्यभिधीयते ।
शिवेन सह सम्बन्धं शैवमित्याहृतं बुधैः ॥ २७ ॥
उभयोः सम्पुटीभावाद्वीरशैवमिति स्मृतम् ।
शिवायार्पितजीवत्वाद् वीरतन्त्रसमुद्भवात् ॥ २८ ॥
वीरशैवसमायोगाद् वीरशैवमिति स्मृतम् ।
वीरमाहेश्वरं तन्त्रं ज्ञातव्यं त्रिविधं सुत ॥ २९ ॥
सामान्यं च विशेषं च निराभारं क्रमाद्भवेत् ।
तत्रादौ सम्प्रवक्ष्यामि वीरसामान्यलक्षणम् ॥ ३० ॥
हस्तमस्तकसंयोगाद् भूतिपङ्कस्य धारणात् ।
शिवदेहीति विज्ञेयः सर्वपापैः प्रमुच्यते ॥ ३१ ॥
गुरुणा दत्तलिङ्गं तु शिवमन्त्रेण धारयेत् ।
मूर्ध्नि कण्ठे भुजे हस्ते हृत्स्थले नाभिमण्डले ॥ ३२ ॥
एतेषामेकदेशे तु धारयेच्छिवलिङ्गकम् ।
एककालं द्विकालं वा त्रिकालं वा समर्चयेत् ॥ ३३ ॥

गुरौ लिङ्गे सदा भक्तिं कारयेद् भसिते व्रती ।
वीरसामान्यमाख्यातं विशेषञ्च ततः शृणु ॥ ३४ ॥
शिवकुम्भं समासाद्य स्थण्डिलादिषु पूर्ववत् ।
शिवकुम्भे शिवं पूज्य भक्तानन्नेन तोषयेत् ॥ ३५ ॥
शेषं दीक्षोक्तवत् कृत्वा मलपाशादिमोचनम् ।
गुरुः शिष्यं समालोक्य तत्त्वदेहं विचिन्तयेत् ॥ ३६ ॥
शिवकुम्भस्य तोयेन अभिषिञ्चेच्छिवाणुना ।
नादबिन्दुकला नीत्वा तत्तत्स्थानेषु विन्यसेत् ॥ ३७ ॥
षट्चक्रञ्च षडङ्गञ्च षडध्वानं षडानन ।
तत्तत्स्थानेषु विन्यस्य पञ्चब्रह्म न्यसेत्ततः ॥ ३८ ॥
मूलमन्त्रं तूपदिशेत्ततो लिङ्गं प्रदापयेत् ।
शेषाणि सर्वकर्माणि दीक्षाध्वोक्तक्रमाच्चरेत् ॥ ३९ ॥
देहप्राणौ समायोज्य प्राणं लिङ्गे प्रकल्पयेत् ।
अविनाभावसंयोगात् तस्मादैक्यं प्रकल्पयेत् ॥ ४० ॥
अन्यदृष्टिनिपातं यत्तद् द्रव्यं परिवर्जयेत् ।
शुद्धद्रव्यं समासाद्य लिङ्गाङ्गानां प्रसर्पणम् ॥ ४१ ॥
इति व्रतसमायुक्तो वीरशैवो विशिष्यते ।
विशेषशैवमाख्यातं निराभारं ततः शृणु ॥ ४२ ॥
सर्वसंसारसौख्यानि त्यक्त्वा चित्तं शिवे लयेत् ।
दण्डकौपीनकाषायजटावल्कलधारकः ॥ ४३ ॥
मुण्डी वा शिवचिह्नानि धारयेदजिनादिकम् ।
भिक्षाशी नियताहारः सुखसंसारवर्जितः ॥ ४४ ॥
निराभारीति विज्ञेयः स एव परमः शिवः ।
वीरमाहेश्वराणां च सामान्यव्रतमुच्यते ॥ ४५ ॥
पूर्वोक्तशिवमुद्रासु तद्धारिषु च सर्वतः ।
अर्थतः प्राणतः प्राज्ञो भक्तिं कुर्याद् दृढां सुत ॥ ४६ ॥
पापं तेषु न वक्तव्यं स्वयमेव कदाचन ।
कृते परेण चेत्पापे नेक्षेत करणैस्त्रिभिः ॥ ४७ ॥

बलवान् रक्षयेत्तत्र दुर्बलश्चेद् व्रजेत्ततः ।
करणैस्तु विहीनश्चेद् बुद्धिं तत्र न निक्षिपेत् ॥ ४८ ॥
स्वीकरोति यदा लिङ्गं गुरुणा दीक्षयाणुना ।
तदा प्रभृति लिङ्गैक्यमविनाभावयोगतः ॥ ४९ ॥
देहं प्राणेन संस्थाप्य प्राणं लिङ्गेन निक्षिपेत् ।
प्राणेन निक्षिपेल्लिङ्गं पृथग्भावं न कारयेत् ॥ ५० ॥
वीरशैवक्रमः प्रोक्तः प्रायश्चित्तविवर्जितः ।
प्राणलिङ्गे व्रते लुप्ते हस्तखड्गादवञ्चयन् ॥ ५१ ॥
मुखं पङ्कजवच्छिन्द्याद्वीरभृत्यस्य लक्षणम् ।
यो वा चोत्पाटयेज्जिह्वां शिवनिन्दारतस्य तु ॥ ५२ ॥
त्रिसप्तकुलमुद्धृत्य रुद्रलोकं स गच्छति ।
शुद्धशैवो विशेषेण मन्त्रयन्त्रप्रचारणात् ॥ ५३ ॥
शुद्धो भवति लोकेषु प्रायश्चित्तविधानतः ।
स्वेष्टलिङ्गे परिभ्रष्टे नष्टे दग्धे हृतेऽपि वा ॥ ५४ ॥
नीते वा मूषिकाद्यैश्च काककौलेयवानरैः ।
जप्त्वा लक्षमघोरस्य विधिना लिङ्गकान्तरम् ॥ ५५ ॥
प्रतिष्ठाप्य नयेच्छुद्धिं पीठिकायां तथैव च ।
व्रतस्य च क्रियालोपे नियमस्य विलोपने ॥ ५६ ॥
गायत्र्यष्टशतेनैव विशुद्धिमधिगच्छति ।
सामान्यं मिश्रकं चैव शुद्धं वीरं चतुर्विधम् ॥ ५७ ॥
तत्सर्वं हि समासेन तव प्रोक्तं षडानन ।
तत्त्वादिकीलकान्तानां पटलानां दश क्रमात् ॥ ५८ ॥
भेदाः शुद्धाख्यतन्त्रस्य कथितास्तव सुव्रत ॥

इति श्रीवातुले शुद्धाख्यतन्त्रे कीलं नाम
दशमः पटलः समाप्तः ॥

॥ समाप्तश्चायं ग्रन्थः ॥

---

# तन्त्रसंग्रह-प्रथमभाग-श्लोकार्धानुक्रमणी

## विरूपाक्षपञ्चाशिकायाः

## साम्बपञ्चाशिकायाः

## त्रिपुरामहिमस्तोत्रस्य

## स्पन्दकारिकायाः

## अनुभवसूत्रस्य



## वातुलशुद्धाख्यतन्त्रस्य

# उद्धृतवचनश्लोकार्धसूची

## विरूपाक्षपञ्चाशिकाविवृत्याः



## साम्बपञ्चाशिकाटीकायाः

## त्रिपुरामहिम्नस्तोत्रव्याख्यायाः

## स्पन्दप्रदीपिकायाः

# उद्धृतग्रन्थग्रन्थकारनामानुक्रमणी

## विरूपाक्षपञ्चाशिकाविवृत्याम्



## साम्बपञ्चाशिकाटीकायाम्



## त्रिपुरामहिमस्तोत्रव्याख्यायाम्



## स्पन्दप्रदीपिकायाम्